तुल्ये । रा.नि.व.१३ । खर्परीतुल्ये । खापर । रा. नि.व. । आमलक्याम् ।

**अमृतोद्भवा** । स्त्री । आमलक्याम् । मं आंवली । नागरवल्ल्याम् । पान । वै.निघ. ।

**अमृतोपमम्** । क्ली । खर्परीतुल्ये । तूँते । मं मोरचूत । वै.निघ. । [ति द्रव्ये । वै.निघ. ।

**अमृतोपहिता** । स्त्री । तीपचिनी इति ख्या-

**अमेध्यम्** । क्ली । पुरीषे । अ.र. ।

**अम्बु** । क्ली । जले । रा.नि.व.१४ । बालके । च. द.ज्वरातिसार-चि. । "किराताम्बुयवासकम् ।" भैष. शोथ-चि.पुनर्णवातैले ।

**अम्बुकः** । पुं । श्वेतार्कमन्दारे । रक्तैरण्डे ।

**अम्बुकण्टकः** । पुं । नक्रे । त्रिका. ।

**अम्बुकन्दः** । पुं । शृङ्गाटके । वै.निघ. ।

**अम्बुकिरातः (टः)** । पुं । नक्रे । त्रिका. ।

**अम्बुकीशः** । पुं । गोधायाम् । शिशुमारे । त्रिका. ।

**अम्बुकुक्कुटी (टिका)** । स्त्री । जलकुक्कुट्यां । पानकउडी । मं पानकोंवडी । See प्लवः ।

**अम्बुकूर्म्मः** । पुं । गोधायाम् । वै.निघ. ।

**अम्बुकृष्णा** । स्त्री । जलपिप्पल्यां । काँचड़ा दाम् । वै.निघ. । [सा.सं. ।

**अम्बुकेशरः** । पुं । छोलङ्गवृक्षे । लेबू । र.

**अम्बुचरः** । पुं । जलचरे । कच्छपे । वै.निघ. ।

**अम्बुचामरम्** । क्ली । शैवाले । जटा. ।

**अम्बुचारिणी** । स्त्री । स्थलपद्मिन्यां । हिं थल-पद्म । वै.निघ. ।

**अम्बुजः** । पुं । हिज्जलवृक्षे । अम. । मत्स्यादौ । भा. । जलवेतसे । कच्छपे । वै.निघ. । त्रि । जल-जातमात्रे । क्ली । कमले । मे.जत्रिकं । [वै.निघ ।

**अम्बुजामलकी** । स्त्री । पानीयामलके ।

**अम्बुटः** । पुं । अश्मन्तकवृक्षे । आवुटा । मं आ-पटा । रा.नि.व.९ ।

**अम्बुतालः** । पुं । शैवाले । त्रिका. ।

**अम्बुदः** । पुं । मुस्तायां । सि.यो.कामला.चि. मूर्च्छायुक्ते द्वन्द्वः । "पटोलाम्बुदवारुभिः ।"

**अम्बुधरः** । पुं । नागरमुस्तायां । भद्रमुस्तायां । वै.निघ. ।

**अम्बुधिः** । पुं । सागरे ।

**अम्बुधिफेनः** । पुं । समुद्रफेने । भा. ।

**अम्बुधिस्रवा** । स्त्री । गृहकन्यायाम् । घृत-कुमारी । मं कोरफल । रा.नि.व.५ । [भा. ।

**अम्बुनाम** । क्ली । ह्रीवेरे । वाला । भा. । बालके ।

**अम्बुपत्रा (त्रिका) (पत्री)** । स्त्री । उच्च-टायाम् । र.मा. ।

**अम्बुप्रसादः** / **अम्बुप्रसादनः** } पुं । निर्म्मलीफलवृक्षे । रा.नि. व.११ । See कतकः ।

**अम्बुप्रसादनफलम्** । क्ली । निर्म्मलीफले । वै निघ. ।

**अम्बुमयूरकः** । पुं । जलापामार्गे । वै.निघ. ।

**अम्बुमात्रजः** । पुं । शम्बूके । हे.च. ।

**अम्बुयष्टिका** । स्त्री । भार्ग्यां । बामणहाटी । र.मा. । [वै.निघ. ।

**अम्बुरुहा** । स्त्री । पद्मिन्यां । स्थलपद्मिन्याम् ।

**अम्बुवल्लिकः** । पुं । कृमिशङ्खे । वै.निघ. ।

**अम्बुवल्लिका** । स्त्री । कारवेल्ल्याम् । वै.निघ. ।

**अम्बुवल्ली** । स्त्री । क्षुद्रकारवेल्ल्यां । जलपिप्-पल्यां । वै.निघ. । [वै.निघ. ।

**अम्बुवारिणी** । स्त्री । स्थलकमलिन्याम् ।

**अम्बुवासिनी** । स्त्री । रक्तपाटले ।

**अम्बुवासी** । पुं । रक्तपाटले । वै.निघ. ।

**अम्बुवाहः** । पुं । मुस्तके । चि.क्र.क.वल्ली प्रदर-चि. । [रत्ना. ।

**अम्बुवेतसः** । पुं । जलवेतसे । मं लव्हाला ।

**अम्बुशिरीषिका** / **अम्बुशिरीषी** } स्त्री । जलशिरीषे । वै.निघ. ।

**अम्बुशुक्तिः** । स्त्री । जलशुक्ती । शिशुक । मं जलशिंपी । वै.निघ. । [त्रिका. ।

**अम्बुसर्पिणी** । स्त्री । जलौकसि । जोँक ।

**अम्बुसादनम्** । क्ली । निर्म्मलीबीजे । वै.निघ. ।

अम्बुसारा । स्त्री । कदलीवृक्षे।भा.पु.१भ.फ.व.।

अम्बुसाह्वः । पुं । कुन्दपुष्पवृक्षे । वै.निघ. ।

अम्भः । पुं । जले । रा.नि.व.१४ ।

अम्भःपा । पुं । चातकपक्षिणि ।

अम्भःसारः । पुं । मुक्तायां । वै.निघ. ।

अम्भःसूः । स्त्री । धूम्यूके । मं धुकें ।

अम्भोजम् । क्ली । पद्मे । वारिवेतसे ।

अम्भोजनालः । पुं । पद्मनाले । वै.निघ. ।

अम्भोजा । स्त्री । वन्यीयष्टीमधुनि । वै.निघ. ।

अम्भोदः । पुं । भद्रमुस्तायाम् । रा.नि.व.६। च.द.यक्ष्म-चि.एलादिमन्थे । प्रपौण्डरीके । प.मु. ।

अम्भोधिपल्लवः । पुं । प्रवाले । मं पोंवळें । रा.नि.व.१३ ।

अम्भोरुहम् । क्ली । पद्मे । च.द.र.पि.चि. ।

अम्भोरुहकेशरम् । क्ली । पद्मकेशरे । च.द.र.पि.चि. ।

अम्रः । पुं । आम्रवृक्षे । আম্ গাছ । रा.नि. । See आम्रः । माचिकायां । পুদিনা । हिं मोहुया । अम्लवेतसे । रा.नि. ।

अम्रम् । क्ली । आम्रफले ।

अम्रगन्धहरिद्रा । स्त्री । (Curcuma reclinata.) आम्रहरिद्रायाम् । আমহলুদ । हिं आमहलदी ।

अम्रवेतसः । पुं । अम्लवेतसे ।

अम्रसारः । पुं । अम्लवेतसे । रा.नि. ।

अम्रातः (कः) । पुं । (Spandias mangifera.) Hogplum. आम्रातकवृक्षे । আমড়া গাছ । हिं अम्बाड़ा । मं अंबाडाचे झाड़ । श्र.मा. । त्रिका. । See आम्रातकः ।

अम्लः । पुं । षड्रसान्यतमरसे । অম্বল রস । स च जम्बीरमातुलुङ्गफलादिषु व्यक्तः। गुणाः—लघु, उष्णः, रुचिकरः, दीप्तिकरः,हृदयतर्पणः, वातानुलोमनः, बल्यः, कण्ठदाहकरश्च । रा.नि.व.२०। तद्विपाकोऽम्लः तद्विपाकगुणस्तु पित्तकृत् वातश्लेष्म-रोगघ्नश्च । सु.सू. । प्रीतिकरः पाचनः मार्दवकरश्च । अतिसेवनात् भ्रान्तिकुष्ठकफपाण्डुकार्श्यकासजनकः। रा.नि.व.१२ । पाचनः रुचिकरः पित्तलः कफजननो रक्तवर्द्धकः लघुः लेखनः उष्णवीर्य्यः स्पर्शशीतलः सञ्जीवनः क्लेदनो वातघ्नः स्निग्धः तीक्ष्णः सारकः शुक्रविबन्धानाहहृद्विघ्नः हर्षणश्च । अतिसेवने—भ्रमतृड्दाहतिमिरज्वरघ्नः, शोथविस्फोटकुष्ठपाण्डुलकश्च । भा.पु.१भ. । लघुलं पाचकत्वं पित्तश्लेष्मवह्निक्लेदलसुखात्वं वातघ्नत्वञ्च। राज.।

अम्लम् । क्ली। अम्लवेतसफले । काञ्जिके । घोले । रा.नि.। बदरफले । सि.यो.मरीचक-चि. । वर्वरचन्दने। रा.नि.व.१२ ।

अम्लकः । पुं । लकुचवृक्षे । श्र.र. ।

अम्लकरञ्जः । पुं। करञ्जविशेषे। টক্‌করঞ্জা। तत्फलगुणाः—पिपासाघ्नं गुरु रुचिकरं पित्तकरञ्च । राज. ।

अम्लका । स्त्री । पालङ्कशाके । পালং শাক । प.मु. । पलाशीलतायाम् । रा.नि.व.४ ।

अम्लकाञ्जिकम् । क्ली । काञ्जिके । কাঁজি । च.द.ग्रहणी-चि.महाषट्पलघृते ।

अम्लकाण्डः । पुं । शुक्लरसोने । वै.निघ.। क्ली। लवणतृणे । লোণা ঘাস । रा.नि.व.८ ।

अम्लकूचिः । पुं । वृक्षविशेषे ।

अम्लकेशरः । पुं। मातुलुङ्गे। টাবালেবু গ। प.मु. । दाड़िम्बवृक्षे । [লেবু ।वै.निघ. ।

अम्लकेसरी । पुं । अम्लरसनिम्बुकवृक्षे। গোঁড়া

अम्लकोशः (शाकः) । पुं । तिन्तिड़ीवृक्षे । मद.व.६ । [मं अंवटताक । वै.निघ. ।

अम्लगोरसः । पुं । अम्लतक्रे । টক্ ঘোল ।

अम्लचाङ्गेरी । स्त्री। चाङ्गेरीभेदे। টক্ আমরুল । च.चि.१अ.अगु.तैले. ।

अम्लचुक्रिका । स्त्री । चिञ्चाम्ले । তেঁতুলের অম্বল । रा.नि.व.११ । See चिञ्चासारः ।

अम्लचूड़ः । पुं । शाकाम्ले । चिञ्चासारे। তেঁতুলের অম্বল । रा.नि.व.११ । अम्लशाके । চুকা পালঙ । रा.नि. ।

अम्लजम्बीरः । पुं । अम्लरसनिम्बूकवृक्षे।

টক্ লেবু গাছ। मं इडनिंबू। रा.नि.व.११। See निम्बुकः।

**अम्लटकः** । पुं । अश्मन्तकवृक्षे । অম্ল কুচাই।

**अम्लत्वक्** । पुं । प्रियालवृक्षे । मं चारोली ।

**अम्लदोलकः** । पुं । चुक्रे । চুকা পালঙ্ । मं चंवोती । वै.निघ. ।

**अम्लद्रवः** । पुं । वीजपूरादिरसे । भा.म. १भ.जिह्वकाञ्व.चि.। "अम्लद्रवः संशमयेद्रसज्ञां ."

**अम्लद्रव्यम्** । क्ली । वीजपूरादौ। तक्रे.वै.निघ.।

**अम्लनायकः** । पुं । अम्लवेतसे । থৈকল । मं आम्लवेतस । रा.नि.व.६ ।

**अम्लनिम्बुकः** । पुं । महाम्लनिम्बुके । গোড়া লেবু । मं मीठें इरनिम्बू । वै.निघ. ।

**अम्लनिशा** । स्त्री । शट्याम् । শটী । रा.नि. ।

**अम्लपञ्चकम्** । क्ली । १ कोलदाड़िमवृक्षाम्ल-चुक्रिकाम्लवेतसेषु।२जम्बीरनारङ्गाम्लवेतसतिन्तिडी-वीजपूरेषु । रा.नि.व.२१ । See पञ्चाम्लम् ।

**अम्लपत्रः** । पुं । दण्डालुके । থাম্ আলু । वै. निघ. । अश्मन्तकवृक्षे । रा.नि.व.८ । क्षुद्रपत्र-तुलसीवृक्षे । र.मा. ।

**अम्लपत्रम्** । क्ली । चुक्रशाके । रा.नि.व.७ ।

**अम्लपत्रकः** । पुं । भेण्डायाम् । अश्मन्तकवृक्षे । অম্ল কুচাই, আবুটা। रा.नि.व.८ । मद.व.१ । अम्ललोणिकायाम् । আমরুল । भा.पू.१व. ।

**अम्लपत्रा** । स्त्री। शुक्रलायां । ওকড়া । प.मु.।

**अम्लपत्रिका** । स्त्री । चाङ्गेर्य्याम् । ক্ষুদে শুনী । शूनी इति लोके । आवेता इति हिन्दी । रा.नि.व.५ ।

**अम्लपत्री** । स्त्री । पलाशीलतायाम् । रा.नि.व. ४ । चाङ्गेर्य्यां । रा.नि.व.५ । क्षुद्राम्लिकायाम् । খুদে শুনী ।

**अम्लपनसः** । पुं । लिकुचवृक्षे । ডেলো, মান্দার গাছ। मं ओटोचे झाड़ । वै.निघ. ।

**अम्लपर्णिका** } **अम्लपर्णी** } स्त्री । वृक्षविशेषे । सुरपर्ण्याम् । भा.। गुणाः—अम्लपर्णी वातकफघ्नलस्य च विनाशिका । वै.निघ. ।

**अम्लपादपः** । पुं । वृक्षाम्ले । তেঁতুল গাছ। मं कोकंवी । वै.निघ. ।

**अम्लपित्तम्** । क्ली । रोगविशेषे । तल्लक्षणम्—विरुद्धदुष्टाम्लविदाहि पित्तप्रकोपि पानान्नभुजो विदग्धं । पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥ अविपाकः क्लमोत्क्लेशः तिक्ताम्लो-द्गारगौरवैः । हृत्कण्ठदाहारुचिभिरम्लपित्तं वदेद्भि-षक् ॥ तच्च द्विधा—अधोगमूर्द्धगञ्चेति । मा.नि. ।

**अम्लपित्तान्तकमोदकः** । पुं । अम्लपित्ते योगविशेषः । अत्र शुण्ठी ८ प. पिप्पली ८ प. गुवाकचूर्णं ८प.घृतं ४श.एकत्र पाकः । पाकसिद्धौ एषां प्रक्षेपः यथा लवङ्गचूर्णं वचाचूर्णं कुष्ठचूर्णं नागकेशरचूर्णं यमानीचूर्णं रक्तचन्दनचूर्णं रास्ना-चूर्णं कृष्णजीरकचूर्णं यष्टिमधुचूर्णं देवदारुचूर्णं त्रिफलाचूर्णं तेजपत्रत्वगेलाचूर्णं सैन्धवं हवुषाफल-चूर्णं शटीमदनफट्फलचूर्णं जटामांसीचूर्णं अभ्रं रङ्गं रौप्यं तालीशचूर्णं पद्मकाष्ठचूर्णं मूर्व्वाचूर्णं वराहक्रान्ताचूर्णं वंशलोचनं पिप्पलीमूलचूर्णं श-तावरीचूर्णं शतपुष्पाचूर्णं पीतझिण्टीमूलचूर्णं जा-तीकोषचूर्णं जातीफलचूर्णं काकोलीमुस्तकपिप-पलीकर्पूरविड़ङ्गवनयमानीनां चूर्णं बलागड़ूच्यपा-मार्गवीजगोक्षुरवीजचन्दनदेवताड़ानां चूर्णं लौहं कांस्यञ्चेति द्रव्यजातं प्रत्येकं २ तो. स्वर्णं १ तो. । भैष. ।

**अम्लपित्तान्तकरसः** । पुं । रसोऽयमम्लपि-त्तघ्नः । रसे.चि. । अत्र तुल्यां पथ्यामिति सर्व्व-चूर्णसमां हरीतकीम् । र.सा.सं.। सूतसृताभ्रलौ-हानां तुल्यां पथ्यां विमर्द्दयेत् । माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ॥ भैष. ।

**अम्लपुरम्** । क्ली । वृक्षाम्ले । रा.नि.व.६ ।

**अम्लपुष्पिका** । स्त्री । आरण्यशणवृक्षे । বন্য শণ । मं राणताग । वै.निघ. ।

**अम्लपूरम्** । क्ली । तिन्तिड्याम् । তেঁতুল । मं कोकम्बी । रा.नि.व.६ ।

**अम्लफलः** । पुं । आम्रवृक्षे । रा.नि.व.११ ।

**अम्लफलम्** । क्ली । वृक्षाम्ले । তেঁতুল । रा. नि.व.६ । [कन्यारी । वै.निघ. ।

**अम्लफला** । स्त्री । कन्यारिकायाम् । मं लघु-

**अम्लबदरः** । पुं । अम्लकोलिकायाम् । টক কুল । च.सू.४अ । [চুকা পালঙ্। वै.निघ. ।

**अम्लभेदनः** । पुं । अम्लवेतसे । रा.नि.। चुक्रे ।

**अम्लमारीषः** । पुं । अम्लशाकविशेषे । অম্ল নটিয়া । हिं सारसा । गुणाः—"अम्लमारीषकी दीषकीपनी मधुरः पटुः ।" वै.निघ. ।

**अम्लमूलकम्** । क्ली । व्युषितकाञ्जिकपक्वमूलके । "काञ्जिकं व्युषितं पक्वं मूलकं त्वम्लमूलकम्।" प.प्र.३ख. । च.द.संग्रहणी-चि.वृहच्चुक्र. ।

**अम्लमेहः** । पुं । पित्तजन्यमेहरोगभेदे । अत्र रोगी अम्लरसगन्धं मेहति । सु.नि.६अ. ।

**अम्लरुहा** । स्त्री। मालवदेशप्रसिद्धनागवल्लीभेदे। गुणाः—रुचिकरी दाहघ्नी गुल्महरी आध्मानहरी च । रा.नि. ।

**अम्ललोणिका** } **अम्ललोणी** } स्त्री । (Oxalis corniculata.) चाङ्गेर्यां । আমরুল শাক । मं चुका । अ.टी. । गुणाः—दीपनी रुच्या रुचोष्णा कफवातघ्नी पित्तला अम्ला ग्रहण्यर्शः-कुष्ठातीसारघ्नी च । भा.पू.१भ. । मात्रा २—३ माषा । पालङ्कविशेषे । চুকা পালঙ্ । र.मा. ।

**अम्लवती** । स्त्री । चाङ्गेर्याम् । আমরুল । रा.नि.व.५। क्षुद्राम्लिकायां । খুদে নুনী ।

**अम्लवर्गः** । पुं । चाङ्गेरी-लकुचा-अम्लवेतस-जम्बीरक-वीजपूरक-नागरङ्ग-दाड़िम-कपित्थाम्लवी-जाम्लकाम्बष्ठा-करमर्द्दक-तिन्दुककोल-तिन्तिड़ीषु । अम्बष्ठासहितं द्विरेतदुदितं पञ्चाम्लकं तद्द्वयं, विज्ञेयं करमर्द्दनिम्बुकयुतं स्यादम्लवर्गाह्वयम् । रा.नि.व. २२। अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लकाः । नागरङ्गं तिन्तिड़ी च चिञ्चाफलञ्च निम्बुकम् । चाङ्गेरी दाड़िमञ्चैव करमर्द्दं तथैव च । एष चाम्लगणः प्रोक्तो वेतसाम्लसमायुतः ॥ र.सा.सं. । [रा.नि.व.७ ।

**अम्लवल्ली (ल्लिका)** । स्त्री । त्रिपर्णीकन्दे ।

**अम्लवाटकः** । पुं । आम्रातकवृक्षे । मं आंवाड़ा । वै.निघ. ।

**अम्लवाटा** } **अम्लवाटिका** } **अम्लवाटी** } स्त्री । नागवल्लीभेदे । পান-বিশেষ । मं अंबाड़े पर्ण । रा.नि.व.११। See नागवल्ली।

**अम्लवातकः (वाड़कः)** । पुं । आम्रातवृक्षे । আম্‌ড়া গাছ ।

**अम्लवाष्पः** । पुं । मं आंबटमाठ ।

**अम्लवासुकः** । पुं । चाङ्गेर्याम् । আমরুল मं चुका । वै.निघ. ।

**अम्लवासु(स्त)कम्** । क्ली । चुक्रनामपत्रशाके । অম্লবেতুয়া, টাঙ্গাবেতো इति भाषा । रा.नि.व ७ ।

**अम्लविदुलः** । पुं । अम्लवेतसे । वै.निघ. ।

**अम्लवीजम्** । क्ली । वृचाम्ले । তেঁতুল । रा. नि.व.६ । See तिन्तिड़ी । [भा.पू.१भ. ।

**अम्लवृक्षं (कम्)** । क्ली,पुं । वृचाम्ले । তেঁতুল।

**अम्लवेतसः (कः)** । पुं, क्ली । (Ruxem vesicarius) country sorrel. स्वनामख्यात-क्षुपे। অম্লবেতস । हिं आमलटास् । थैकल इति च.द. । च.द.ज्व.चि. । सिन्धुकूपर्णैः साम्लवेतसैः । च.सू.२अ. । गुणाः—अत्यम्लः कषायोष्णः वातघ्नः कफार्शोगुल्मारोचकहरश्च । भोटदेशे प्रसिद्धः । रा.नि.व.६ । लघुदीपनमत्यम्लं भेदनं हृद्रोगशूल-गुल्मघ्नं पित्तलं लोमहर्षणं रुच्यं विण्मूत्रदोषहरं प्लीहोदावर्त्तघ्नं हिक्कानाहारुचिश्वासकासाजीर्णवान्तिहरं वातकफजरोगघ्नं छागमांसद्रवकरं चणकाम्ल-तुल्यगुणं लौहसूचीद्रावकञ्च । भा.पू. १भ. । न... कफलगुणाः—दीर्घघ्नं गुरु दारकञ्च । ... । चुक्रे । চুকা পালঙ্ । हिं चुक्रिका शाक । प.मु. । अम्ललोण्याम् । च.द.काश्वाय.गु. ।

**अम्लशाकम्** । क्ली । वृचाम्ले । তেঁতুল । रा. नि.व.६। पुं । चुक्रनामपत्रशाके । অম্লকুচাই, টক পালঙ্, চুকা পালঙ্ । गुणः—अत्यम्लं वातघ्नं दाहश्लेष्मघ्नञ्च । सशर्करस्य तस्य गुणः—दाहपित्त-कफहरत्वम् । रा.नि.व.७ ।

**अम्लशाकाख्यम्** । क्ली । चुक्रनामकपत्रशाके। টক পালঙ্ । मं थोरचुका । रा.नि.व.७ ।

**अम्लष्टा** । स्त्री । चाङ्गेर्याम् । मं आंबोती ।

**अम्लसरा** । स्त्री । नागवल्लीभेदे । रा.नि.व.११।

**अम्लसारः** । पुं । अम्लवेतसे । रा.नि.व.६ । निम्बुके । रा.नि.व.११। हिन्तालवृक्षे । रा.नि.व.८।

**अम्लसारं (कम्)** । क्ली । काञ्जिके । चुक्रनामककाञ्जिकभेदे । रा.नि.व.१५ ।

**अम्लस्कन्धः** । पुं । वा.सू १०।२२४ ।

**अम्लस्तम्भनिका** । स्त्री । तिन्तिड्यां । वै.निघ. ।

**अम्लहरिद्रा** । स्त्री । शट्याम् । रा.नि.व.६ ।

**अम्ला** । स्त्री । चाङ्गेर्य्यां । आमरुल । रा.नि.व.५ । वनमातुलुङ्गे । अम्लवेतसे । रा.नि.व.६ । श्रीवल्लीवृक्षे । वर्षामल्लिकां । रा.नि.व.८ । तिन्तिड्यां । रा.नि.व.११ । भा.पू.१भ.फलव. ।

**अम्लाङ्कुशः** । पुं । अम्लवेतसे । रा.नि.व.६ ।

**अम्लाटनः** । पुं । महासहावृक्षे । मं. काँटी विशेष । आम्रना इति च भाषा । हिं कटसरय्या लालगुलमखमल । आम्रनाट् इति दक्षिणदेशे । वाणपुष्प इति च गौड़े ख्यातः । गुणाः—कषायो मधुरस्तिक्त उष्णवीर्य्यः स्निग्धश्च । भा.पू.१भ.पु.व. । ४ख.म.भ.योनिरो.चि. । चि.क्र.क.वल्ली.गर्भवेदनाहरयोगे ।

**अम्लाढ्यः** । पुं । करुणनिम्बुके । नारांगा लेबुर गाछ । प.मु. । [१भ.पु.व. ।

**अम्लातः (कः)** । पुं । अम्लाटनवृक्षे । भा.पू.

**अम्लातकी** । स्त्री । पलाशीलतायां । रा.नि.व.४ ।

**अम्लादानः** । पुं । कुरण्टकवृक्षे । पीयावांसा इति प्रसिद्धे । वाणपुष्प इति गौड़े ।

**अम्लादिः** । पुं । तिन्तिड्याम् । रा.नि.व.६ । चुक्रनामकपत्रशाके । रा.नि.व.७ ।

**अम्लाध्युषितः** । पुं, क्ली । सर्व्वगताक्षिरोगे । लक्षणम्—"श्यावं लोहितपर्य्यन्तं सर्व्वञ्चाक्षि प्रपच्यते । सदाहशोथं सास्रावमम्लाध्युषितमम्लतः ॥" मा.नि. । करुणनिम्बुके ।

**अम्लानः** । पुं । (Gomphrena globosa.) बन्धुजीवकवृक्षे । बाकुलीवृक्ष । चिका. । झिण्टिकाभेदे । अम्लानी झिण्टिकाभेदे । विश्व. । अम्लाटनवृक्षे । आम्रना इति भाषा । भा.म. ४भ. शीमिरो.चि. । "अदंष्ट्रमधुकाम्लानैः ।" महाप्रज्ञायाम् । बै.नचिकं । महाराजतरुणीवृक्षे । रा. नि.व.१० ।

**अम्लानम्** । क्ली । पद्मे । श.र. ।

**अम्लाना** । स्त्री । महासैवतीपुष्पवृक्षे । बड़बन सेउती । मं थोर राणशेवंती । वै.निघ. ।

**अम्लानिनी** । स्त्री । पद्मसमूहे । पद्मिन्याम् । चिका. । [रा.नि.व.६ ।

**अम्लाम्ला** । स्त्री । चाङ्गेर्य्यां । आमरुल शाक ।

**अम्लायनी** । स्त्री । मल्लिकाभेदे । मं नेवाली । वै.निघ. ।

**अम्लिका** । स्त्री । तिन्तिड़ीवृक्षे । प.मु.रा.नि. व.११ । आम्ले । रा.नि.व.२३ । पलाशीलतायां । माचिकायाम् । पुदिना । रा.नि.व.२३ । श्वेताम्लिकायाम् । चाङ्गेर्य्याम् । रा.नि.व.२३ । अम्लोद्गारे । मं. । अर्शोरोगे तिन्तिड्यर्थे, एवं सर्व्वत्र दीपनयोगे । पुरीषसंग्रहणादौ पुनरम्लिका श्यामच्छदवृक्षदारके । सि.यो.अग्निमुखचूर्णे वृन्दः । सि.यो. मरीच.चि. । [वै.निघ. ।

**अम्लिकाकन्दः** । पुं । मं अम्लनालिकायाम् ।

**अम्लिकापानम्** । क्ली । तिन्तिड़ीपानके । तेँतुलपाना । पक्वतिन्तिड़ीकं वारिमर्द्दितं शर्करामरिचलवङ्गकर्पूरमिश्रितं पानकमुच्यते । "अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढम् । शर्करामरिचैर्मिश्रं लवङ्गेन्दुसुवासितम् । अम्लिकाफलसम्भूतं पानकं वातनाशनम् ।" भा.पू.पानकवर्गः ।

**अम्लिकावटकः** । वटकविशेषे । अम्लवड़ा । भीतीवरा इति लोके । "अम्लिकां खेदयित्वा तु जलेन सह मर्द्दयेत् । तन्नीरे कृतसंस्कारे वटकान् मज्जयेज्जनः । अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपनाः ॥" भा. ।

**अम्ली** । स्त्री । जलवेतसे । वै.निघ.२भ.मदात्यय. चि.खर्जूरादिमन्थे । चुक्रिकायां । टकपालङ् । तिन्तिड्याम् । रा.नि.व.११ । भा.पू.१भ.फलव. । चाङ्गेर्य्याम् । मी.लक्षिकं ।

**अम्लीका** । स्त्री । तिन्तिड्याम् । अ.टी. । "वृक्षाम्लीकदाड़िमैः ।" सि.यो.मदात्यय.चि. । अम्लोद्गारे । सु.नि.६अ. ।

**अम्लीकाफलम्** । क्ली । तिन्तिड़ीफले । तद्गुणाः—शुष्कं सन्दीपनं भेदनं तृष्णाघ्नं लघु कफवा-

तयोः पथ्यञ्च । वा.सू.६अ.।"अम्लो हि चाम्लफलम-विपक्वं सदम्लपित्तामकरं विदाहि। वातामये शूल-गदे प्रशस्तं पक्वं तथा शीतगुणोपपन्नम्॥"अत्रि.१७अ.।

**अम्लीयः** । पुं । अम्लवेतसे । वै.निघ. ।

**अम्लोटकः** । पुं । अम्लम्लकद्वये खनामैव प्र-सिद्धे । हिं आमरीड़ा । अम्रकुचाई । रत्ना. ।

**अम्लोटजः** । पुं । चाङ्गेर्याम् । বড় আমরুল-পাতা । च.द.चातुर्थ-ज्व.चि. । "अम्लोटजसहस्रेण दलेन ।"

**अम्लोत्तमम्** । क्ली । दाड़िमे । प.मु. ।

**अयनम्** । क्ली । मासषट्कं व्याप्य भानोरुदग्द-क्षिणतो वा गतौ । मे.नत्रिकं । तच्च द्विविधम्—उत्तरायणं दक्षिणायनञ्च । तयोराद्यं वर्षाशरद्धेम-न्तात्मकं, तत्र भगवानाप्याय्यते सोमोऽम्ललवणमधु-राश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमभिवर्द्धते । द्वितीयञ्च शिशिरवसन्तग्रीष्मात्मकं तत्र भगवानाप्याय्यतेऽर्कः तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बल-मपहीयते । सु.सू. ।

**अयस्** } क्ली । लौहमात्रे । रत्ना. । च.द.पाण्डु.
**अयसम्** } चि. । कान्तलौहे । प.मु. । मुण्ड-लौहे । रा.नि.व.१३ ।

**अयस्कान्तः** । पुं । कान्तलौहे । रा.नि.व.१२। लौहचुम्बके । कान्तपाषाणे । চুম্বক পাথর । गु-णाः—लेखनः शीतो मेदोविषघ्नश्च । मद.व.४ ।

**अयस्कान्तशिला** । स्त्री । लौहचुम्बके । চু-ম্বকপাতর । वै.निघ. ।

**अयस्कारः** । पुं । जङ्घाग्रभागे । त्रिका. ।

**अयस्कीटः** । पुं । लौहकिट्टे । वै.निघ. ।

**अयानम्** । क्ली । स्वभावे । हारा. ।

**अयाह्नम्** । क्ली । कांस्यथालौ । কাঁসা । वै.निघ.।

**अयुक्छदः** । पुं । सप्तपर्णवृक्षे । ছাতিমগাছ । हे.च. ।

**अयुग्मकः** । पुं । सप्तपर्णवृक्षे । वै.निघ. ।

**अयुग्मच्छदः** । पुं । सप्तपर्णवृक्षे । ছাতিম গাছ । भ.टी. ।

**अयुग्मपत्रः** } पुं । सप्तपर्णवृक्षे । वै.निघ. ।
**अयुग्मपर्णः** }

**अयोगः** । पुं । विश्लेषे । कठिनोद्यमे । कूटे । मे.गत्रिकं ।

**अयोगुड़ः** । पुं । लौहगुड़िकायां । "यस्मात्तो-विषविषं कथितं ताम्रमेव वा । पीतमत्यग्निसन्तप्तो भक्षितो वाप्ययोगुड़ः ॥" च. । [वै.निघ. ।

**अयोच्छिष्टम्** । क्ली । लौहकिट्टे । মণ্ডুর ।

**अयोमलम्** । क्ली । लौहमले । লোহার গু বা মণ্ডুর । प.मु.। "अयोमलन्तु सन्तप्तं ।" सि.यो. पाण्डु.चि.वृन्दः । च.द.पाण्डु.चि. ।

**अयोरजः** । क्ली । लौहकिट्टे । মণ্ডুর । लौह-चूर्णे । च.द.पाण्डु.चि.नवायसचूर्णे ।

**अयोवस्तिः** । पुं, स्त्री । वस्तिकर्म्मविशेषे । यथा—एरण्डमूलं निःक्वाथ्य मधुतैलं ससैन्धवम् । एष युक्त अयोवस्तिः सवचापिप्पलीफलः ॥" भा.।

**अरकः** । पुं, क्ली । शैवाले । हारा. । वै.निघ.।

**अरक्तः** । पुं । लाक्षायाम् । ला । रा.नि.व.६ । See अलक्तः ।

**अरग्वधः** । पुं । (Cassia fistula.) महाकर्णि-कारवृक्षे । বড় সোন্দালি, লড়িয়া শোণাল, রাখাল নড়ী, বানর নড়ী ইতি । मं बहिल ग-छ्याचे झाड़ । कं हेग्गके । तें रेलचेट्टु उम्. सुनारि । हिं आमलटा,धनबहेड़ा । गुणाः—अति-मधुरः शीतलः शूलघ्नः ज्वरकण्डूकुष्ठमेहकफविष्ट-म्भघ्नश्च । रा.नि.व.९ । स्रसनः गुरुः हृद्रोगतोदो-दावर्त्तघ्नश्च । एतत्फलं स्रंसनगुणयुक्तं रुच्यं पित्त-कुष्ठकफघ्नं कोष्ठशुद्धिकरं ज्वरे हितञ्च । भा.पू. १भ. । "पर्णानि रेचकानि स्युः कफमेदोहराणि च । पुष्पाणि स्वादुशीतानि तिक्तानि ग्राहकाणि च । तुवराणि विजानीयात्··· । मज्जा च मधुरा पाके स्निग्धा चाग्निविवर्द्धनी । रेचका पित्तवातानां नाशका समुदाहृता ।" द्रव्य.गु.वै.निघ. । See आरग्वधः । [दग्निमुखचूर्णे

**अरग्वधम्** । क्ली । स्वर्णालुफले । सि.यो.वृह-

**अरङ्गः (गा) (गी)** । पुं,स्त्री । मत्स्यविशेषे वै.निघ. । मधुशिग्रुः । रत्ना. ।

**अरङ्करः** । पुं । कृत्रिमविषे । वै.निघ. ।

**अरङ्कुटी** । स्त्री । माधवीलतायाम् । वै.निघ. ।

**अरजा** । स्त्री । ऋतकुमार्य्याम् ।

**अरटुः** । पुं । अरलुवृक्षे । শোণা গাছ। अ.टी.।

**अरणः** । पुं । चित्रकवृक्षे । वै.निघ. ।

**अरणिः** । पुं । क्षुद्राग्निमन्थवृक्षे । ছোটগণিরি । वा.टी.१५अ. । हिंमा. बीरतर्व्वादी । अरणिर्वह्नि-मन्थे ना द्वयोर्निर्मथ्यदारुणि । मं.थरिकं । श्योणा-कवृक्षे । चित्रकवृक्षे ।

**अरणिका** । स्त्री । अग्निमन्थवृक्षे । वा.सू.१५अ. वेल्लन्तरादिव.। "वेल्लन्तरारणिकबूकवृषाश्मभेद···।"

**अरणी** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । मं लघुऐरण । रा.नि.व.९ ।

**अरणीकेतुः** । पुं । महाग्निमन्थवृक्षे । বড় গণিরি । मं थोरऐरण । रा.नि.व.९ ।

**अरण्यः** । पुं । कट्फलवृक्षे । কট্ফলের গাছ। श.च. । शालभेदे । वै.निघ. ।

**अरण्यम्** । क्ली । कानने । वन । मं राण । कं अटवि । उद्यानमहावनोपवनप्रमदवनभेदात् तच्चतुर्विधम् । तत्रोद्यानं यत्र रागिणः क्रीड़न्ति । नृपालयेषु अन्तःपुरोचितं वनं प्रमदवनम् । उपवनं पुरः प्रान्तस्थवनम् । रा.नि.व.२ ।

**अरण्यकः** । पुं । महानिम्बे । মহানিম্ । मं वकाननिम्ब । वै.निघ. ।

**अरण्यकणा** । स्त्री । कटुजीरके । জীরা বিশেষ । वै.निघ. । वनपिप्पल्याम् ।

**अरण्यकदली** । स्त्री । गिरिकदल्याम् । वनकदल्याम् । বীচেকলা, বুনো কলা, দয়া কলা इति च भाषा । मं रानकेल । रा.नि.व.११ । गुणाः—शीतला मधुरा बल्या वीर्य्यवर्द्धनी रुच्या दुर्जरा गुरुः दाहशोषपित्तनाशिनी । तत्फलं तुवरं मधुरं गुरु च । वै.निघ. ।

**अरण्यकर्कटी** । स्त्री । वनजातकर्कट्याम् । বুনো কাঁকুড় । मं रानतवसे । गुणाः—"अरण्यकर्कटी चोष्णा रसे तिक्ता च भेदका । पाके कट्वी कफक्रमीपित्तकण्डुज्वरापहा । वै.निघ. ।

**अरण्यकाकः** । पुं । वनकाके । দাঁড়কাক । मं रानकावला । द्रव्य.गु.वै.निघ. ।

**अरण्यकार्पासी** । स्त्री । The wild cotton. वनकार्पासे । বনকাপাসী । मं रानकापासी । तें पत्ति । गुणाः—व्रणघ्नी शल्यवातघ्नी रुच्या च । रा.नि.व.४ ।

**अरण्यकुक्कुटः** । पुं । वनकुक्कुटे । বনকুকড়ো । हिं कोमड़ा. वनमोर्गा । मं रानकोंबड़े । तन्मांसगुणाः—हृद्यं लघु श्लेष्महरञ्च । रा.नि.व.१७ । बृंहणं स्निग्धं वीर्य्योष्णं वातघ्नं गुरु च । मद.व.१२।

**अरण्यकुलित्थिका (त्था) (त्थी)** । स्त्री । कुलत्थायाम् । বন কুৰ্ত্তিকলায় । रा.नि.व.५ । A blue stone used as a collyrium. कुलत्थाञ्जने । कृत्रिमाञ्जनविशेष । रा.नि.व.१३ । हिं कालसुर्मा । See कुलत्थाञ्जनं ।

**अरण्यकुसुम्भः** । पुं । वनकुसुम्भक्षुपे । বন কুসুম । मं रानकर्डई, रानकुसुम । गुणाः—पाककटुः श्लेष्मघ्नः दीपनश्च । रा.नि.व.४ ।

**अरण्यकोलिः** । स्त्री । वनवदरे । বনকুল ।

**अरण्यगवयः** । पुं । वनगवये । अयं कूलचरजातीयः । सु.सू.४६अ. । कूलेचरशब्दं पश्य ।

**अरण्यघोली (लिका)** । स्त्री। वनघोलीति प्रसिद्धपत्रशाकविशेषे । घोलीशाके । रा.नि.व.६ । मन्थनदण्डे ।

**अरण्यचटकः** । पुं । वनचटकपक्षिणि । বন চটা পাখি, গুড়গুড়ে, নাগরভড়ুই, ছাতার इति च । तन्मांसं—लघु हितावहं चटकसमगुणञ्च । वै.निघ. द्रव्यगु. ।

**अरण्यचम्पकः** । पुं । वनचम्पके । বনচাঁপা। गुणाः—शीतलं लघु शुक्रवृद्धिकरं बलकरञ्च । रा.नि.व.१० ।

**अरण्यछागः** । पुं । वनछागे । বুনো ছাগল।

**अरण्यजः** । पुं । तिलकक्षुपे । हे.च. ।

**अरण्यजार्द्रका** । स्त्री । Wild ginger. वनार्द्रके । বন আদা । मं रानआले । गुणाः—कटु अम्लं रुचिकरं बल्यं आग्नेयञ्च । रा.नि.व.६ ।

**अरण्यजीरम् (कम्)** । क्ली । वनजीरके, कटु-

जीरके। बनजीरा। मं कडुजीरें। तें जीरकञ्च। गुणाः—"अरण्यजीरकञ्चोष्णं तुवरं कटुकं मतम्। सम्नवातं कफञ्चैव व्रणञ्चैव विनाशयेत्।" वै.निघ.। द्रव्य.गु.।

**अरण्यतुलसी।** स्त्री। वनतुलस्यां, कृष्णवर्वर्य्याम्। वनतुलसी। हिं कालावावरी। मं रानतुलस, वैजयन्तीतुलसी। सा द्विधा ह्रस्वदीर्घभेदात्। गुणाः—"आरण्यतुलसी चोष्णा कटुका च सुगन्धिका। वातलक्ष्मदोषवीसर्पविषघ्नैव विनाशयेत्॥ आरण्यतुलसी क्षुद्रा कट्वी चोष्णा च तिक्तका। रुच्याग्निदीपनी हृद्या विदाही लघुपित्तला। रुच्या कण्डूविषच्छर्दिकुष्ठज्वरविनाशिनी। वातं कृमीन् कफं दद्रुं रक्तदोषञ्च नाशयेत्। बीजञ्चास्या दाहशोषनाशकं परिकीर्त्तितम्।"वै. निघ.।द्रव्य.गु.।

**अरण्यत्रपुसकः।** पुं। वन्यत्रपुषे। बनकाँकुड़, बनशशा। मं गोड़ग्रंदनी। वै.निघ.।

**अरण्यत्रपुसी।** स्त्री। इन्द्रवारुण्याम्। राखालशशा। महाकाललतायाम्। माकालफल। वै.निघ.अपस्मा.चि.नस्ये।

**अरण्यधान्यम्।** क्ली। नीवारे। উড়িধান। मं देवभात। रा.नि.व.१६।

**अरण्यधेनुः।** स्त्री। वनजातायां गवि।

**अरण्यपलाण्डुः।** पुं। वनजातपलाण्डौ। बनपेयाज। गुणाः—मूत्रवैरेचनः श्लेष्महरणोऽन्यश्च एव च। मात्रातिरेकाद्भवति वान्तिकृन्मलभेदनः। अतिमात्रं प्रयुक्तोऽसौ विषवन्मारयेन्नरं। शोथे श्वासे च कासे च मूत्रसङ्गे प्रयुज्यते॥ अचिः।

**अरण्यपिप्पली।** स्त्री। वनपिप्पलीनामक्षुपे। बनपिपुल। रा.नि.व.६।

**अरण्यमक्षिका।** स्त्री। Gad fly. वनमक्षिकायाम्। डाँशमाछि। श.र.।

**अरण्यमुद्गः।** पुं। वनमुद्गे। घोड़ामुग। रा. नि.व.१६। See मकुष्ठकः। मुद्गपर्ण्याम्।

**अरण्यमुद्गा।** स्त्री। मुद्गपर्ण्याम्। मुगानी। रा.नि.व.३।

**अरण्यमेथी।** स्त्री। वनमेथिकायाम्। बनमेति। मं रानमेथि। वै.निघ.।

**अरण्यरजनी।** स्त्री। वनहरिद्रायां। बनहलुद। मं रानहलद। वै.निघ.।

**अरण्यवायसः।** पुं। Raven. अरण्यकाके। ডোমকাক। मं डोमकावला। रा.नि.व.१६।

**अरण्यवासिनी।** स्त्री। अथमपर्णीलतायां। अमर बेल इति लोके। रा.नि.व.३।

**अरण्यवास्तुकः।** पुं। कुणञ्जरक्षुपे। बनबेतो। मं रानचाकवत। रा.नि.व.५। See कुणञ्जरः।

**अरण्यशालिः।** पु। Wild rice. नीवारधान्ये। উড়িধান। मं देवभात। रा.नि.व.२३।

**अरण्यश्वनः।** पुं। वनकुक्कुरे। নেকড়েবাঘ। वै.निघ.।

**अरण्यशूरणः।** पुं। वनजशूरणे। বুনো ওল। मं गोड़ासूरण। रा.नि.व.७। [चित्रकव्याघ्रे।

**अरण्यश्वा।** पुं। कपौ। বানর। है.च.।

**अरण्यसम्भूतः।** पुं। कर्कटके। কাঁকরোল।

**अरण्यहलदीकन्दः** पुं। वनहरिद्रायाम्।
**अरण्यहरिद्रा** (स्त्री) वनहलुद। हिं वनहर्दि। गुणाः—कुष्ठघ्नः वातरक्तघ्नश्च। भा.पू.१भ. ह.व.। कटुः मधुरा रुच्या अग्निदीपनी तिक्ता कुष्ठवातहा रक्तदोषविषश्वासकासहिक्काश्च नाशयेत्। वै.निघ.।

**अरतिः।** स्त्री। अनिच्छायाम्। अन्यास्थ्यं चिन्तयात्यर्थमरतिः कथ्यते बुधैः। भा.। औदासीन्ये। पित्तरोगे।

**अरत्निः।** पुं। निष्कनिष्टमुष्टौ। বিতত কনিষ্ঠাঙ্গুলি মুষ্টি। रा.नि.व.१८।

**अरमः।** पुं। नेत्ररोगविशेषे। वै.निघ.। अर्म्मशब्दं पश्य। [अम.।

**अरलः।** पुं। श्योणाकवृक्षे। শোণা গাছ।

**अरला।** स्त्री। हंसपद्याम्।

**अरलुः (कः)।** पुं। श्योणाकवृक्षे। শোণা গাছ। हिं अर्लु। मं टेंटु. टिंडा। श्योणापाठा इति भा.म.१भ.अतिसा.चि.गङ्गाधरचूर्णे। "नागरपाठारलुधातकीकुसुमैः।" च.द.गर्भज्वरे। वै. निघ.अतिसा.चि.अम्बष्ठादिः। वेतसवृक्षे।

**अरलुपुटपाकः** । पुं । श्योणाकत्वक्कृतपुटपाके । साधनविधिः कुटजपुटपाकवत् । "अरलुत्वक्कृतश्चैव पुटपाकोऽग्निदीपनः । मधुमोचरसाभ्याञ्च युक्तः सर्व्वातिसारजित् ॥" शार्ङ्ग.म.ख.१अ. ।

**अरविन्दम्** । क्ली । पद्मे । प.मु. । रा.नि.व. १०। ताम्रे । रा.नि.व.१३। कोकनदे । रक्तकमले। नीलोत्पले । रा.नि.व.१०। पुं। सारसपक्षिणि। अम.।

**अरविन्ददलप्रभम्** । क्ली । ताम्रे । তামা । वै.निघ. । [नलिन्याम् । अ.र. ।

**अरविन्दिनी** । स्त्री । पद्मसमूहे । र.मा. ।

**अरालः** । पुं । Resin. सर्जरसे । धुना । हिं धुना । मं राल । शालवृक्षे । मलदन्तिनि । मे. ।

**अरिः** । स्त्री । खनामख्यातखदिरे। थदिरविशेष। मं आरि । कं शीगुरि । गुणाः—कषाया कटुका तिक्ता रक्तपित्तघ्नी च । रा.नि.व.८ ।

**अरिपूरिमः** । पुं। विट्खदिरे । গুয়েবাব্লা। मं गंधीहिंवर । वै.निघ. ।

**अरिमः** । पुं । विट्खदिरे । গুয়েবাব্লা । रत्ना. । भैष.मुखरो.चि. ।

**अरिमर्द्दः** । पुं। कासमर्द्दक्षुपे । কালকাশন্দা। मं कासविंदा । रा.नि.व.४ । एतत्पत्रं रुचिकरं वृष्यं विषकासरक्तघ्नं मधुरं वातकफघ्नं पाचकं कण्ठशोधनं विशेषेण कासहरं विषघ्नं धारकं लघु च । भा.पू.१भ. ।

**अरिमेदः (कः)** । पुं । (Accacia farnesiana, syn mimosa.)विट्खदिरवृक्षे । বিট্ খয়ের, গুয়েবাব্লা, দুর্গন্ধখদির । मं गंधीहिंवर । कं करर्यवेलु । हिं गन्धाबुल । प.मु.। गुणाः —कषायः उष्णः तिक्तः भूतघ्नः शोफातिसारकासघ्नः विसर्पघ्नश्च । रा.नि.व.८ । मुखदन्तरोगघ्नः कण्डूविषश्लेष्मकृमिकुष्ठव्रणघ्नश्च । मद.व.५। कषायः उष्णः मुखरोगदन्तरोगरक्तदोषकण्डूकृमिकफविषकुष्ठव्रणघ्नश्च । भा.पू.१भ.वटादिः । भैष.मुखरो.चि. । च.सू.४अ. । मात्रा १ तो. ।

**अरिमेदाद्यतैलम्** । क्ली । मुखरोगे हितम्। मूर्च्छिततिलतैलं ८श.क्वाथार्थं खण्डीकृतारिमेदत्वक् (বিট্খদির, কাঁটানাগেশ্বর বা গুয়েবাব্লা) १२॥ श. वारि ६४ श. पादशेषः १६ श.। कल्कद्रव्याणां मञ्जिष्ठादीनां प्रत्येकं २ तो. । ततो यथा- पूतक्वाथकल्काभ्यां तैलपाकविधिना तैलं पचेत् । च.द.मुखरो.चि. ।

**अरिष्टः** । पुं । Soapberry plant.(Sapindus trifoliatus.)रीठावृक्षे । रीठाकरञ्जे । रा.नि.व.९ । রিটে গাছ । मे. । गुणाः—"अरिष्टः कटुकः पाके तीक्ष्णश्चोष्णश्च लेखनः । गर्भपातकरः प्रोक्तो लघुः स्निग्धस्त्रिदोषहा । ग्रहपीडादाहशूलनाशनश्च प्रकीर्त्तितः । वै.निघ. । लसुने । प.मु. । रा.नि.व.२१ । भा.पू.१भ. । निम्बवृक्षे । रा.नि.व.२३। प.मु.वा.सू.१५अ.गुडूच्यादिः । "गुडूची पद्मकारिष्ट—।"च.द.पित्तश्लेष्मज्व.अमृताष्टके—। "गुडूचीन्द्रयवारिष्ट—।" सु.सू.४३अ. संशोधने । काके । हारा. । कङ्कपक्षिणि । मे. । सुराविशेषे । "औषधयुक्तैर्मद्याकारैः कृतं मद्यमासवः । स एव क्वथितौषधैररिष्टः ।" वा.टी.हेमाद्रिः । क्वाथसिद्धो वारिष्टः । शार्ङ्ग. । अरिष्टः क्वाथसिद्धः स्यात् । प.प्र.३ । तद्गुणाः—यथाद्रव्यगुणोऽरिष्टः सर्वो मद्यगुणाधिकः । ग्रहणीपाण्डुकुष्ठार्शःशोषशोफोदरज्वरघ्नः । गुल्मकृमिघ्नः कषायः कटुवातलश्च । वा.मद्यव. । इक्षुविकारसहिताभयाचित्रकदन्तीपिप्पल्यादि-भूरिभेषजक्वाथादिसंस्कारवानरिष्टोऽभिधीयते । गुणाः—अर्शःशोथग्रहणीश्लेष्मरोगहरत्वम् । राज. । आप्लाव्य सुरया सम्यक् द्रव्याणि विविधानि च । सप्ताहान्ते परिस्राव्य रसं वस्त्रेण गालयेत् । एषोऽरिष्टोऽभिधानेन भिषग्भिः परिकीर्त्तितः ॥ अत्रि. । पक्वौषधाम्बुसिद्धं यत् मद्यं तत्स्यादरिष्टकम् । अरिष्टकं त्रिदोषघ्नं गर्भस्रावकं ग्रहदोषघ्नञ्च । भा.पू.मद्य.व. । क्ली । पादजलेन त्रिभागदधिकृते तक्रे । ঘোল । रा.नि.व.१५ । सूतिकागारे । रत्ना.।आसवे । मरणचिह्ने । त्रि । अशुभे । सर्व्वत्र मे. । मद्यसामान्ये । रा.नि.व.१४ ।

**अरिष्टकः** । पुं। फेनिलवृक्षे । सि.यो.दाहज्वरे. श्रीकण्ठः। "फेनेनारिष्टकस्य च।" निम्बवृक्षे । अत्र निम्बकोमलपल्लवः । च.द.पित्त-ज्व.शिरोलेपे । रीठाकरञ्जे । मद.व.५ । सरलद्रुमे । रत्ना. । क्ली । मद्ये । भा. ।

**अरिष्टत्रयम्** । क्ली। स्वस्थारिष्टं वेधारिष्टं कौटारिष्टञ्चेति अरिष्टत्रये। तत्र स्वस्थारिष्टं पञ्चविधं तद्यथा—भोजनारिष्ट क्रायाद्यरिष्ट-दर्शनेन्द्रियाद्य-

रिष्ट श्रवणेन्द्रियारिष्ट-रसनेन्द्रियारिष्टाः । तत्र प्रथमे रोगं विना क्षीणवर्णता दुर्मनस्कता भोजनानिच्छा च भवति । द्वितीये छायापराङ्मुखता विगता सच्छिद्रता वा भवति । तृतीयादौ नासामेढ्रावि-पायुभ्योऽकस्मात् रक्तस्रावः, श्रवणादिबाधिर्य्यं जिह्वा कठिना स्तब्धा च भवति। वेधारिष्टः वेधाख्योपसर्गजः। स च शरदि रवितापेन, प्रावृषि शालाभावाच्च जायते । तस्मिंश्च जाते सज्वरता अधोमुखता श्वासकासौ सर्व्वाङ्गतादि भवति । कीटारिष्टे वाजिनां जठरे कीटगुच्छा जायन्ते, तेन वाजिनः सीदन्ति । जयदत्तः २१-२५अ. ।

**अरिष्टफलः** । पुं । कटुनिम्बवृक्षे । रा.नि.व.९।

**अरिष्टलक्षणम्** । क्ली। मृत्युलक्षणे । "रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते । तल्लक्षणमरिष्टं स्यादिष्टञ्चापि तदुच्यते ।" भा. ।

**अरिष्टा** । स्त्री । कटुकायाम् । रा.नि.व.६ । च.सू.४अ. । प.मु.। र.मा. । वै.निघ.२भ. । विषमज्व. पटोलादौ । नागबलायां । रा.नि.व.४ । मद्ये ।

**अरिष्टाङ्गः** । पुं। रीठाकरञ्जे। রীঠে। वै.निघ. २भ.उन्मा.चि. ।

**अरुः (स्)** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । रक्तखदिरे । क्षतव्रणे । मर्म्मणि । सन्धिस्थाने । उ. ।

**अरुक्** । त्रि । सुस्थे ।

**अरुग्णः** । त्रि । सुस्थे ।

**अरुङ्निमेषः** । स्त्री । नेत्ररोगविशेषे ।

**अरुचिः** । स्त्री।स्वनामख्यातरोगे। অরুচ্ করা, অরোচক রোগ । सत्यामपि बुभुक्षायां भोजनासामर्थ्ये । भोजनानिच्छायाम् । भा.म.१भ.श्लेष्मज्व.। See अरोचकः ।

**अरुजः** । पुं । आरग्वधवृक्षे । বড় সোণালু । रा.नि.व.९ । क्ली ।कुङ्कुमे । सिन्दूरे ।

**अरुणः** । पुं । कोकिलाक्षभेदे । কুলেখাড়া । अतिविषायाम् । श्योणाकवृक्षे । प.मु.। मञ्जिष्ठायां। अर्कवृक्षे । मे. । पुन्नागवृक्षे । रा.नि.व.१० । गुडे । रा.नि.व.१४ । चित्रकक्षुपे । मद.व.२। रक्तापामार्गे । रक्तकरवीरे । वै.निघ.। कुष्ठभेदे । लक्षणम्— वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तानि अरुणानि । सु.नि.५अ. । त्रि । रक्तवर्णे

**अरुणम्** । क्ली । षड्विषे । वै.निघ.। रक्तोत्पले रक्तलज्जालुतायाम् । वा.टी.हेमाद्रिः। कुङ्कुमे । रा.नि.व.१२। सिन्दूरे । रा.नि.व.१३ । माणिक्यभेदे । वै.निघ.१भ.क्षयरोग.त्रैलोक्य-चिन्तामणिरसे ।

**अरुणकपिशः** । पुं । द्राक्षाभेदे । কিস্‌মিস্ বিশেষ । मं फकीरीद्राक्ष । वै.निघ. ।

**अरुणकमलम्** । क्ली । कोकनदे । রক্তকমল रा.नि.व.१० । [वै.निघ. ।

**अरुणचूड़ः** । पुं । ताम्रचूड़पक्षिणि । কুকুড়া ।

**अरुणतण्डुलीयम्** । क्ली । रक्ततण्डुलीयशाके। রাঙা নটে । च.द. ।

**अरुणनागः** । पुं । मुद्राशङ्खे । कविः ।

**अरुणनेत्रः** । पुं । पारावते । পায়রা । कोकिले । वै.निघ. ।

**अरुणपुष्पी** । स्त्री । बन्धुजीववृक्षे । রাঙ্গুলি ফুল । मं रक्तदुपारी । वै.निघ. ।

**अरुणमक्षिका** । स्त्री । रक्तमक्षिकायाम् । লাল মাচি । वै.निघ. ।

**अरुणलोचनः** । पुं । पारावते । পায়রা । हिं खबूतर । रा.नि.व.१९ । कोकिले । वै.

**अरुणसर्पः** । पुं । तक्षकसर्पे । वै.निघ

**अरुणसारः** । पुं । हिङ्गुले । वै.निघ ।

**अरुणा** । स्त्री । अतिविषायाम् । मे.। रा.नि.व.६ । भा.४भ.बाल.ज्व.चि.महाभल्ला.गुड़े । "घनकृष्णारुणाश्रृङ्गी ।" भैष.प्रदरारिरसे । कुष्ठ.चि. । मञ्जिष्ठायां । मे. । रा.नि.व.६ । भा.म.१भ.ज्व.चि.लाक्षातैले ।"लाक्षा दशाक्षा त्वरुणा षड्क्षा ।" प्रपौण्डरीके । प.मु.। त्रिवृतायां । मे.। जवायाम् । मद.व.१ । अरुणातिविषा श्यामा मञ्जिष्ठा त्रिवृता च । श्यामालतायाम् । मे. । इन्द्रवारुणीलतायाम् । गुञ्जालतायाम् । रा.नि.व.३ । पुनर्णवायां । मुण्डीर्य्याम् । रत्ना. । [मं लांक । वै.निघ. ।

**अरुणात्मिका** । स्त्री । कुमरिचे । লঙ্কামরিচ।

**अरुणाभम्** । क्ली । वज्रलौहे ।

**अरुणार्कः** । पुं । रक्तार्के । प.मु.। मं मन्दार । कं मन्दार अर्के । रा.नि.व.१० । गुणाः— सरः

वातकुष्ठकण्डूविषव्रणघ्नः श्लीहगुल्मार्शःकफोदरमलक्रमिहरश्च । कटुतिक्तोष्णः कफघ्नी मेदघ्नी विषघ्नः वातकुष्ठव्रणघ्नः शोथकण्डूविसर्पहरश्च । पुष्पं मधुरं तिक्तं धारकं क्रमिकुष्ठकफार्शोविषरक्तपित्तघ्नं गुल्मशोथहरश्च । भा.पू.१भ. ।

**अरुणोपलः** । पुं । अरुणवर्णमणिविशेषे । चूनि इति भाषा । पद्मरागमणौ । हे.च. ।

**अरुन्धती** । स्त्री । जिह्वायां । वै.निघ. ।

**अरुषः** । पुं । अर्घे । घोटके । वै.निघ. ।

**अरुंषिका** । स्त्री । क्षुद्ररोगान्यतमकपालरोगे । शिरोव्रणे । अयं कफरक्तक्रमिकोपतो भवति । "अरुंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धि तु । कफास्रक्रमिकोपेन नृणां विद्यादरुंषिकाम्" ॥ मा.नि. ।

**अरुष्कः** । पुं । भल्लातकवृक्षे । ভেলা গাছ । मं विववा । भा.पू.१भ. । रा.नि.व.११ ।

**अरुष्करः** । पुं । भल्लातकवृक्षे । प.मु. । रा.नि.व.११ । भा.पू.१भ. । मद.व.१ । अरुंषिकायाम् । त्रि । व्रणकृति । मे.रचतुष्कं ।

**अरुष्करम्** । क्ली । भल्लातकफले । च.द.अर्शचि. । भैष.कुष्ठ-चि.पञ्चतिक्त.घृते । "सनागराकष्करवृद्धदारकम्" । सि.यो.चतुःसमलौहे । च.सू. ४अ.कुष्ठघ्नव. । [आमला । रा.नि.व.५ ।

**अरुषा (टा)** । स्त्री । भूम्यामलक्याम् । भूँ इ

**अरोकदन्तः** । त्रि । कृष्णदन्ते । वै.निघ. ।

**अरोचकः** । पुं । अरुचिरोगे । स पञ्चविधः —वातपित्तकफसन्निपातागन्तुभेदेन । मा.नि. । मनस्तापज आगन्तुक इति शार्ङ्ग.पू.७अ. । लक्षणं यथा—प्रक्षिप्तन्तु मुखे चान्नं जन्तोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो भक्तद्वेषमथो शृणु ॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनं । द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्मान्न भवेच्छ्रद्धा स भक्तच्छन्द उच्यते । विजयरक्षिते भोजः । एते त्रिविधा अपि रोगा चरकसुश्रुताभ्यां एक एव धृताः । वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः । अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ॥ मा.नि. । पथ्यं यथा—वस्तिः समीरणे पित्ते विरेको वमनं कफे । सर्व्वजे सर्व्वकामार्थं हर्षणं स्यादरोचके ॥ भा. । वस्तिर्विरेको वमनं यथाबलं धूमोपसेवाकवलग्रहौ तथा । तिक्तानि काष्ठानि च दन्तघर्षणं चित्ताक्षमानानि हितैः कृतानि । गोधूममुद्गारुणशालिषष्टिका मांसं वराहाजशशैणसम्भवं । चैणी भवास्तु मधुराविकैश्चिग्धः प्रोष्ठी खलिशः कवयी च रोहितः । कर्कोटवैतायनवोनमूलकं वार्त्ताकुशोभाञ्जनमोचदाडिमं । भव्यं पटोलं रुचकं घृतं पयो बालानि तालानि रसोनमूरणम् । द्राक्षा रसालं नलदम्बुकाञ्जिकं मद्यं रसालादधितक्रमार्द्रकम् । कङ्कोलखर्ज्जूरपियालतिन्दुकं पक्कं कपित्थं बदरं विकङ्कतम् । तालास्थिमज्जा हिमवालुका सिता पथ्या यमानी मरिचानि रामठम् । स्वादम्लतिक्तानि च देहमार्ज्जना वर्गोऽयमुक्तोऽरुचिरोगिणे हितः । इति पथ्यम् । कासोद्गारक्षुधानेत्रवायुवेगविधारणम् । अहृद्यान्नमसृक्स्रावं क्रोधं लोभं भयं शुचम् । दुर्गन्धरूपसेवा च न कुर्य्यादरुचौ नरः ॥ इति अपथ्यम् ।

**अर्कः** । पुं । (Calotropis gigantea, Syn, Asclepias gigantea.) स्वनामख्यातोपविषजातीयक्षुपे । আকন্দ গাছ । हिं मान्दार । मं रुइ । कं अक्के । तें जिल्लेटुचेट्टु । अर्कः श्वेतरक्तभेदेन द्विविधः । तयोर्विशेषाश्च तत्पर्य्याये मृग्याः । गुणाः —कटुः उष्णः वातजित् दीपनीयः शोफघ्नः व्रणघ्नः कण्डूकुष्ठक्रमिघ्नश्च । रा.नि.व.१० । सारकः वातघ्नः कुष्ठकण्डूव्रणप्लीहगुल्मार्शःकफोदरमलक्रमिघ्नश्च । पुष्पं—मधुरं तिक्तं धारकं कुष्ठक्रमिकफार्शोविषरक्तपित्तगुल्मशोथघ्नश्च । भा.पू.१भ. । अर्कद्वयं सृष्टवातकुष्ठकण्डूचयव्रणान् । निहन्ति प्लीहगुल्मार्शोयकृत्श्लेष्मोदरक्रमीन् । मद.व.१ । माचा २-३ रक्ति । इति रावणकृतचिकित्साशास्त्रे । ताम्रे । मे.कद्विकं । त्रैलोक्यडम्बररसे । वै.निघ. वा.व्या. चि.चिन्तामणिरसे । स्फटिके । मे.कद्विकं । अरुणार्के । प.मु.भा.पू.१भ. । आदित्यपत्रक्षुपे । रा.नि.व. ४ । "अर्कोरक्तपुष्पः प्रसिद्धः ।" सु.सू.३७अ. अर्कादिव. । १८अ.शिरो.चि. ।

**अर्ककान्ता** । स्त्री । आदित्यभक्तायाम् । हुड़हुड़िया । रा.नि.व.४ । मद.व.१ ।

**अर्कगन्धिका** । स्त्री । क्षीरविदार्य्याम् । कृष्णभूमिकुष्माण्डे । प.मु. ।

**अर्कचन्दनम्** । क्ली । रक्तचन्दने । रा.नि.व.१२ ।

**अर्कच्छदम्** । क्ली । अर्कमूली ।

**अर्कतैलम्** । क्ली । कुष्ठाधिकारे । अत्र कटुतैलं पलाष्टकं अर्कपत्ररसस्य पलाष्टकं निशायाः पलं मनःशिलायाश्च पलम् । च.द.कुष्ठ.चि. । सा.कौ. ।

**अर्कदलः** । पुं । आदित्यपत्रक्षुपे । रा.नि.व.४ । अर्कवृक्षे । [भा. ।

**अर्कनामा** । पुं । रक्तार्के । लाल आकन्द ।

**अर्कपत्रः** । पुं । आदित्यपत्रक्षुपे । रा.नि.व.४ । च.द. । अर्कवृक्षे ।

**अर्कपत्रा (त्री) (त्रिका)** । स्त्री । ईश्वरमूलवृक्षे । ঈশের মূল । प.मु.र.मा. ।

**अर्कपर्णः** । पुं । रक्तार्कवृक्षे । লাল আকন্দ । मं सूर्य्यमन्दार । भा.पू.१भ. । [माषाणी ।

**अर्कपर्णिका (र्णी)** । स्त्री । माषपर्ण्याम् ।

**अर्कपादः** । पुं । सूर्य्यकान्तमणौ । निम्बवृक्षे । वै.निघ. । [क्षुपे ।

**अर्कपादपः** । पुं । निम्बवृक्षे । त्रिका. । अर्क

**अर्कपुष्पा** । स्त्री । क्षीरकाकोल्याम् । ক্ষীর কাঁকলা । See क्षीरकाकोली ।

**अर्कपुष्पिका** } **अर्कपुष्पी** } स्त्री । (Gygandropsis centa-phylla, Syn, Cleome pentaphylla.) सूर्य्यवल्लाम् । শ্বেত হুড়হুড়িয়া । अर्कहुलीति भाषा । अर्कसदृशपुष्पीलता । हिं अन्धाहुली दधियार् चीरवृक्षम् । मं शिरदोड़ी । भा.४भ.बालरोग चि. । गुणाः—अर्कपुष्पी क्रमिश्लेष्म-मेहपित्तविकारनुत् । मद व.१ । क्रमिकफमेहमनोविकारघ्नी । भा.पू.१भ. । रक्तापराजितायाम् । रत्ना. । क्षीरकाकोल्यां । र.मा. ।

**अर्कप्रभागुड़िका** । स्त्री । रसायनाधिकारे । अस्याः पाठः यथा—रसं निष्कद्वयं शुद्धं निष्कैकं ताम्रचूर्णकं । चिञ्चामूलफलक्काथे यामं खल्ले विमर्द्दयेत् । तद्गोलं बन्धयेद्वस्त्रे दोलायन्त्रेषु तक्रके । चिञ्चाफलयुते पश्चाच्चतुर्यामात्समुद्धरेत् । वटिकार्कप्रभा नाम जरामृत्युविनाशिनी । संवत्सरप्रयोगेषु सूर्य्यतुल्यो भवेन्नरः । पलाशबीजतैलञ्च कर्षमेकं गवां पयः । अनुपानमिदं पाता दृढनायबली भवेत् ॥ प्रयोगा.रसायना. ।

**अर्कप्रिया** । स्त्री । आदित्यभक्तायाम् । হুড়হুড়িয়া গাছ । जवायाम् । रा.नि.व.१० ।

**अर्कभक्ता** । स्त्री । ब्राह्म्यां । ব্রাহ্মীশাক । आदित्यभक्तायाम् । হুড়হুড়িয়া, শুল্টে इति च भाषा । हिं हुलहुल । मं सूर्य्यफुलवल्ली । रा.नि.व. ४ । र.मा. ।

**अर्कभूतिः** । स्त्री । ताम्रभस्मनि । वै.निघ.२भ. चीरतामरसी, संग्रहणी-चि. ।

**अर्कमूर्त्तिरसः** । पुं । रसोऽयं सान्निपातिकज्वरे प्रयोज्यः । द्रव्याणि चास्य रसगन्धकलौहविषाणि । अत्र लौहस्याष्टौ भागाः पारदस्य भागद्वयं, गन्धको द्विगुणः, विषस्य च षोड़शांशो ग्राह्यः । अयमेव त्रिदोषदावानलः कथ्यते यदायं ताम्रपात्रस्थापितः पुनः निम्बुकरसपित्तवर्गकण्टकार्य्यार्द्रकरसैर्भाव्यते । भैष.ज्व.चि. ।

**अर्कमूलम्** । क्ली । तन्नामकवृक्षमूले । च द. अग्निमा.चि.चारगुड़े ।

**अर्कमूला** । स्त्री ।(Aristolochia Indica.) ईश्वरमूल्याम् । ঈশের মূল । रत्ना. ।

**अर्कलवणम्** । क्ली । अर्कक्षारे । वै.निघ. ।

**अर्कवल्लभः** । पुं । बन्धुजीववृक्षे । বান্ধুলিবৃক্ষ, দুপুরে চণ্ডী । मं दुपारी । रा.नि.व.१० ।

**अर्कवल्ली** स्त्री । आदित्यभक्तायां । হুড়হুড়ে । वै.निघ । [मु. । रा.नि.व. ।

**अर्कवेदम् (धम्)** । क्ली । तालीशपत्रे । प.

**अर्कसुता** । स्त्री । कृष्णापराजितायां । वै.निघ. ।

**अर्कसुधा** । स्त्री । अर्कोत्थसुधायाम् । আকন্দের চূণ । गुणः—गुल्मरोगस्य नाशिनी । वै.निघ. ।

**अर्कहिता** । स्त्री । आदित्यभक्तायाम् । হুড়হুড়িয়া । मं सूर्य्यफुलवल्ली । रा.नि.व.४ ।

**अर्कक्षीरम्** । क्ली । अर्कवृक्षनिर्यासे । আকন্দের আটা । गुणाः—क्रमिघ्नं व्रणघ्नं कुष्ठार्शोदरेषु च हितम् । राज. । तिक्तलवणमुष्णवीर्य्यं लघु स्निग्धं गुल्मोदरकुष्ठहरं विरेचने हितञ्च । भा.पू. १भ. । च.द.अर्श-चि. ।

**अर्कादिगणः** । पुं । अर्कालर्कनागदन्तीविशल्याभार्गीरास्नावृश्चिकालीप्रकीर्य्याप्रत्यक्पुष्पीपील-

तैलोदकौर्य्याश्वेतायुमतापसहृद्या इति । अर्कालर्क-करञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेता-महाश्वेताहश्चिकाल्यवणासापसहृश्चेति ॥ सु.सू. ३८अ. । गुणाः—कफमेदोविषघ्नः क्रमिकुष्ठघ्नः वि-शेषाद्व्रणशोधनश्च । वा.सू.१५अ. ।

**अर्काश्मा** । पुं । सूर्य्यकान्तमणौ । चूनी, पान्ना इति च लोके । हला. । [अर्कहचे । अम. ।

**अर्काह्वः** । पुं । ताम्रीशपत्रे । सूर्य्यकान्तमणौ ।

**अर्की** । पुं। मयूरे । मयूर । मं मोरी । वै.निघ.।

**अर्केश्वररसः** । पुं । रसोऽयं वातव्याध्युपशमनो हिविधश्च । तृतीयो रक्तपित्ते, चतुर्थश्च कुष्ठाधिकारे । "रसस्य भागाश्चत्वारो गन्धकस्य दशैव तु । ताम्रस्य वाटिकायाश्च दत्त्वा चैनामधोमुखीम् । सम्यक् निरुध्य तस्याश्च दद्यादूर्द्धं शरावकं । भाण्डे निरुध्य यत्नेन भस्मनापूर्य्य भाण्डकम् । अग्निं प्रज्वालयेद्यामं मुखं तस्य निरुध्य च । स्वाङ्गशीतं समुद्धृत्य तत्ताम्रं चूर्णयेद्बुधम् । भावयेदर्कदुग्धेन पुटित्वा दशधा पुनः ॥" रसे.चि. । रसेन्द्रसारसंग्रहे अयमेव कुष्ठे उक्तः । विशेषस्तु—तत्र गन्धकस्य ताम्रचक्रिकायाश्च १२ भागा उक्ताः । इति प्रथमः ॥ "रसेन गन्धं द्विगुणं विमर्द्य ताम्रस्य चक्रेण सुतापितेन । आच्छादयित्वाथ ततः प्रयत्नात् चक्रे विलग्नश्च ततः प्रगृह्य । सञ्चूर्ण्य च द्वादशधार्कदुग्धैः पुटेत वह्निविफलाजलैश्च ।" माचा२ट.। इति द्वितीयः ॥ रसे.चि. । "सूताकं मृततामञ्च मृताभञ्च समाक्षिकम् । अमृताम्बुरसैर्भाव्यं त्रिसप्तकपुटे पचेत् । वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः । भक्षणम् ।" अत्र अर्कः ताम्रम् । अमृता गुडूची । माक्षिकं स्वर्णमाक्षिकम् । र.सा.सं.रक्तपित्ताधि. । इति तृतीयः ॥ चतुर्थः कुष्ठाधिकारे । "पलानीशस्य चत्वारि बलेर्बादश तावती । ताम्रस्य चक्रिका देया रसस्योर्द्धं शरावकं । दत्त्वा विबद्धभाण्डस्थं पूरयेद्भस्मना दृढं । अग्निं प्रज्वालयेद्यामद्वयं शीतं विचूर्णयेत् । पुटेद्दशधा सूर्य्यदुग्धेनालोड़ितं पुनः । वरापावकभृङ्गानां द्रवैस्त्रिभिर्विभावयेत् । अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित् ॥" अत्र ईशः पारदः, तस्य चत्वारि पलानि । बलिर्गन्धकस्य च द्वादशपलानि । र.सा.सं. ।

**अर्कोत्तमा** । स्त्री । वर्वर्य्याम् । वावुईतुलसी ।

**अर्कोपलः** । पुं । सूर्य्यकान्तमणौ । आतिश पाथर इति लोके । रा.नि.व.१३ ।

**अर्गटः** । पुं । आर्त्तगल इति प्रसिद्धे कण्टकाढ्य-विशेषे । नीलझाँटी । हिं आर्त्तगल । मं एरवणी । गुणाः—शीतः व्रणशोधनरोपणश्च । मद.व.५ । तथा । "अर्गटस्तुवरः शीतवीर्य्यो व्रणविशोधनः । व्रणरोपणकश्चैव पुष्पमस्य मधु स्मृतम् । तिक्तश्च ज्वरपित्तघ्नं कफरक्तरुजापहम् ।" वै.निघ. ।

**अर्गलम्** । क्ली । मांसे । वै.निघ. ।

**अर्घटम्** । क्ली । भस्मनि । हारा. ।

**अर्घ्यम्** । क्ली । आर्घ्यमधुनि । See मधु ।

**अर्घ्याटः (लः)** । पुं । शुक्रलायाम् । ওকড়া, চেঁচ্কো। शुक्रला चालुपत्रः स्यादर्घ्यातोऽर्घ्याटलो मतः, इति द्रव्याभि. ।

**अर्घ्यातः** । पुं अर्घ्याटे । ওকড়া। द्रव्याभि. ।

**अर्घ्यार्हः** । पुं । सुचुकुन्दहचे । रा.नि.व.१० ।

**अर्चिः** । स्त्री, क्ली । कान्तौ । अग्निज्वालायाम् ।

**अर्जकः** । पुं । क्षुद्रतुलसीहक्षभेदे । বাবুই তুলসী । हिं ववरी । मं आजवला । कं गर्गेर । तें तेल्लगगेरचेट्टु । "वर्वरिकाकारी लघुमञ्जरीकः सूक्ष्मपत्रः निर्गन्धः श्वेतकुठेरकः (বাবুই) ।" सु.सू. ३८अ.सुरसादौ ड.। श्वेतवर्वर्य्याम् । শাদা বাবুই । भा.पू.१भ. । श्वेतपर्णास, তোকমারী इति लोके। सि.यो.विसूची-चि.वमनशान्तौ । अर्जकः श्वेतकृष्ण-रक्तभेदात्त्रिभेदः तुल्यगुणश्च । गुणाः—कटूष्णः वातकफरोगघ्नः नेत्ररोगहरः रुच्यः सुखप्रसवकरश्च । रा.नि.व.१० । श्वेतपलाशहचे । See वर्वरी । [शाल ।

**अर्जकर्जः** । पुं । असनहचे । আসনা, পিয়া-

**अर्जुनः** । पुं । (Tarminalia Arjuna, or Pentaptera arjuna.) स्वनामख्यातहचे । অর্জ্জুন গাছ । हिं काह, कौह । मं अर्जुनसादड़ा । कं सारढोल । तें मद्दिचेट्टु । गुणाः—कषायोष्णः कफघ्नः व्रणशोधनः पित्तश्रमतृष्णाहरः वातकोपनश्च । रा.नि.व.९ । शीतलः हृद्यः क्षतक्षयविषरक्तहरः मेदोमेहव्रणघ्नः तुवरः कफपित्तघ्नश्च । भा.पू.१भ.वटादिव. । वा.सू.१५अ.न्यग्रोधादिः । "अ-

भूद्रयार्जुनकपीतनसोमवल्कः ।" माधा २ ती. । नेत्रशुक्लगतरोगे । लक्षणम्—"एको यः शशरुधिरोपमस्तु विन्दुः शुक्लस्थो भवति तमर्जुनं वदन्ति ।" मा.नि. । मयूरे । मे.नत्रिकं । त्रि । श्वेतवर्णे ।

**अर्जुनम्** । क्ली । तृणमात्रे । उला. । सुवर्णे । मे.नत्रिकं । कासतृणे । र.मा. । दर्भभेदे ।

**अर्जुनघृतम्** । क्ली । हृद्रोगे हितम् । अत्र क्वाथार्थमर्जुनत्वक् ६४ प. पाकार्थं जलं ६४ श. शेषः १६श. कल्कः १ श. घृतं ४ श. । मूर्च्छितघृतं ४श. अर्जुनस्वरसः १६श. अर्जुनत्वक्कल्कः १श. एकत्र पाच्यम् । च.द.हृद्रोग-चि. । "पार्थस्य कल्कस्वरसेन सिद्धं शस्तं घृतं सर्व्वहृदामयेषु ।" घृतं ४ श. अर्जुनस्वरसः ४ श. कल्कार्थं अर्जुनत्वक् १ श. । सा.कौ. । भैष.भा.रस.र. ।

**अर्जुनत्वक्** । स्त्री । अर्जुनवल्कले । अर्ज्जुनछाल । च.द.च.सा.चि.प्रभृत्यादिः ।

**अर्जुननामाख्यः** । पुं । अर्जुनवृक्षे । भा. ।

**अर्जुनसुधा** । स्त्री । अर्जुनीत्यसुधायां । अर्ज्जुन काटेर चूर्ण । गुणाः—"सुधा त्वर्जुनजा प्रोक्ता कफस्य च विनाशिनी ।" वै.निघ. । द्रव्यगुणे ।

**अर्जुनाख्यः** । पुं । कासतृणे । र.मा. । अर्जुनवृक्षे ।

**अर्जुनादः** । त्रि । दर्भकासखादके । च.चि.२अ. ।

**अर्जुनाद्यघृतम्** । क्ली । प्रमेहे घृतम् । यथा—"अर्जुनपटोलनिम्बैः सवचादीप्यकरसाससमञ्जिष्ठैः । भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः । गोक्षुरकसोमवल्कैः नवपटोलैर्हरिद्रया त्रिफला । अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण । मञ्जिष्ठातिविषाभ्यां कल्ककषायैः पचेत्तैलम् । कफवातोत्थे मेहे पित्तकृते साधयेत्सर्पिः ॥" भा.म.३भ. मेह-चि. ।

**अर्जुनी** । स्त्री । गवि । गाई । मे.नत्रिकं ।

**अर्जुनोपमः** । पुं । शाकद्रुमे । শেগুন গাছ । र.मा. । शालवृक्षे । रत्ना. ।

**अर्णः** । पुं । शाकवृक्षे । শেগুন । श.च. ।

**अर्णः (स्)** । क्ली । जले । रा.नि.व.१४ ।

**अर्णभवः** । पुं । शङ्खे । वै.निघ. ।

**अर्णवः** । पुं । समुद्रे । रत्ना. ।

**अर्णवजः** }
**अर्णवजमलः** } पुं । समुद्रफेने । रत्ना. ।

**अर्णवफेनः** । पुं । समुद्रफेने । च.द. ।

**अर्णवमलः** । पुं । समुद्रफेने । रत्ना. ।

**अर्णवोद्भवः** । पुं । अग्निजारवृक्षे । रा.नि.व.६ ।

**अर्णोदः** । पुं । मुस्तके । रा.नि.व.६ ।

**अर्णोभवः** । पुं । शङ्खे । रा.नि.व.१३ ।

**अर्त्तगलः** । पुं । नीलझिण्ट्याम् । नीलझाँटी । सु.द्रव्यसं.अ. आगड़ इति ख्याते क्षुपवृक्षे । रत्ना. ।

**अर्त्तिः** । स्त्री । रोगे । रा.नि.व.२० ।

**अर्थः** । पुं । विषये । धने । याचने । कारणे । वस्तुनि । अभिधेये । निवृत्तौ । प्रयोजने । मे.थद्विकं ।

**अर्थचम्पिका** । स्त्री । कर्कटशृङ्ग्याम् । काँकड़ा शृङ्गी । वै.निघ. ।

**अर्थप्रसादनी** । स्त्री । धामनवृक्षे । वै.निघ. ।

**अर्थसाधकः** । पुं । पुत्रजीववृक्षे । पुत्रञ्जी । मद.व.१भा. । [रीठाकरञ्जे । मद.व.

**अर्थसाधनः** । पुं । पुत्रजीववृक्षे । मद. ।

**अर्थसिद्धः (कः)** । पुं । पुत्रजीववृक्षे । [illegible]नगुण्ड्यां । कृष्णनिर्गुण्ड्याम् । रा.नि.व.४

**अर्थापत्तिः** । स्त्री । 'यदकीर्त्तितमर्थादापद्यते ।' सा.सु.उ.६५अ. ।

**अर्थ्यम्** । क्ली । शिलाजतुनि । मे.यत्रिकं ।

**अर्दनिः** । पुं । अग्निरोगे । अ.टी. ।

**अर्हितम्** । क्ली । तन्नामकवातव्याधौ । पक्षाघात विशेष । तस्य लक्षणम्—"उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च । हसतो जृम्भतो भारान्विषमाच्छयनाशनात् ॥ शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः । अर्द्दयत्यनिलो वक्त्रमर्द्दितं जनयेत्ततः ॥ वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते । शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् । ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे च वेदना । तमर्द्दितमिति प्राहुः ।" मा.नि. । अत्र रोगे यस्मिन् पार्श्वे अर्द्दितं तस्मिन्नेव पार्श्वे ग्रीवादीनां वेदना भवतीति बोध्यम् । त्रिवर्षातीते अतिक्षीणे निमेषशून्ये च रोगिणि तदसाध्यं भवति । अत्रौषधं—तिलक-

-त्थ गुञ्जारसोनकल्कादिकम्। "स्नेहपानानि नस्यञ्च भोज्यान्यनिलहन्ति च। उपनाहाश्च शस्यन्ते स्वेदनञ्च तथार्द्दिते॥" "तन्नामकाम्वरोगविशेषे। लक्षणं—हनुद्वयस्य विक्षेपात् ग्रीवामेदाच्च बुद्धिमान्। नासापुटविकाराच्च अर्द्दितं रोगमादिशेत्॥" जयद.५५ष.।

**अर्द्धम्**। क्ली। समांशे। पुं। खण्डे। मे.।

**अर्द्धकः**। पुं। जलसर्पे। वै.निघ.।

**अर्द्धकपाटसन्धिकः**। पुं। बाह्यदीर्घैकपालीतराल्पपालिकर्णबन्धनाकृतिविशेषे। सु.सू.१६ष.।

**अर्द्धकेशिकी**। स्त्री। छेदनार्थे शस्त्रधाराविशेषे। सु.सू.८ष.।

**अर्द्धखारी**। स्त्री। खारीमानार्द्धे १२८ श.।

**अर्द्धचन्द्रः**। पुं। मयूरपिच्छे। ময়ূরপুচ্ছের চাঁদ। हे.च.।

**अर्द्धचन्द्रम्**। क्ली। अङ्गुलित्रोरणे। हारा.।

**अर्द्धचन्द्रा**। स्त्री। त्रिवृति। रा.नि.व.६। कृष्णत्रिवृति। কাল তেউড়ী। भा.पू.१भ.।

**अर्द्धचन्द्राननः**। पुं। अन्तर्मुखनामकविस्रावणास्त्रे। अम.।

**अर्द्धचन्द्रिका**। स्त्री। कर्णस्फोटालतायां। रा.नि.व.३। कृष्णत्रिवृति। मद.व.१।

**अर्द्धचोलकः**। पुं। कूर्पासे। কাঁচুলী। हारा.।

**अर्द्धतिक्तः**। पुं। किराततिक्तके। भा.पू.१भ.।

**अर्द्धधारकम्**। क्ली। अस्त्रविशेषे। तच्च छेदनभेदनार्थम्। सु.सू.८ष.।

**अर्द्धनारीश्वररसः**। पुं। रसोऽयं सान्निपातिकज्वरे गुञ्जामात्रं नस्यकर्म्मणि योज्यः। अपरे जीर्णविषमज्वरे नस्यमित्याहुः। तेन तत्क्षणमेव वामाङ्गज्वरो नश्यति। अस्य द्रव्याणि रसगन्धकविषटङ्कणानि समभागानि कज्जलीवत् कृत्वा कृष्णसर्पमुखाभ्यन्तरे स्थापयित्वा तन्मुखं मृदा संलिप्य मृद्भाण्डे स्थापयेत्। अधोर्ध्वं लवणादानपूर्व्वकं तत्तो भाण्डमावृत्य तीव्राग्नौ ४ प्रहरं पचेत्। भैष.। अत्र "हिङ्गं ग्राह्यञ्च तत्समं"मिति मिलितरसगन्धकयोः समम्। "जैपालं तत्सममिति" विषतुल्यं जैपालं देयम्। "मरिचञ्च चतुर्गुणमिति" एकभागापेक्षया मरिचस्य चातुर्गुण्यम्। गौडस्तु। मिलितरसगन्धकापेक्षया चातुर्गुण्यमित्याह। व्यवहारोऽप्यनेनैव। "रसगन्धौ समौ शुद्धौ विषं ग्राह्यञ्च तत्समं। जैपालं तत्समं ग्राह्यं मरिचञ्च चतुर्गुणम्। त्रिफलायाः रसैर्मर्द्यं भावना पञ्चधा कृता॥" र.सा.सं.जीर्ण-विषम-ज्व.चि.। अन्यः पाठः शुद्धसूतं तथा गन्धं विषं तावत्स भक्ष च। समभागेन संगृह्य वारिणा पेषयेद्दृढं। चक्राकारसमं कृत्वा सर्पतुल्येन संन्यसेत्। तत्तुल्यलेपनं कृत्वा रौद्रे दद्याद्दिनत्रयः। स्थाल्यन्ते लवणं किञ्चित्तस्योपरि च गोलकं। ततो लवणकं दत्त्वा सिकताभिः प्रपूरयेत्। चतुर्भिः प्रहरैर्ज्वालामन्दमध्यखरक्रमात्। शीते तद्गोलकं नीत्वा दूरीकृत्य च लेपनं। भक्षा संगृह्य यत्नेन खल्ले कुर्याद्विमर्द्दनं। यवमात्रन्तु तच्चूर्णं नस्ये दद्याज्ज्वरेश्वरि॥" प्रयोगा.ज्व.चि.।

**अर्द्धपलम्**। क्ली। कर्षद्वये। ४ तो.। स्यात्कर्षाभ्यामर्द्धपलम्। प.प्र.१ख.।

**अर्द्धपादा**। स्त्री। भूम्यामलक्याम्। वै.निघ.।

**अर्द्धपारावतः**। पुं। वनकुक्कुटे। चित्रकण्ठपारावते। মুক্তিপায়রা। तित्तिरपक्षिणि। अत्रि.।

**अर्द्धपुष्पा**। स्त्री। महाबलायाम्। পীতবেলেড়া। थाওয়া। वै.निघ.।

**अर्द्धभोजनम्**। क्ली। अर्द्धाशने। আদপেটা।

**अर्द्धमात्रिकः**। पुं। निरूहणाधिकारे तन्नामकवस्तौ। "दशमूलीकषायेण शताह्वाकं प्रपेषयेत्। सैन्धवाच्च मधुनो द्विपलं द्विपलं तथा। तैलस्य पलमेकन्तु फलस्यैकञ्च योजयेत्। अर्द्धमात्रिकसंज्ञोऽयं वस्तिर्देयो निरूहवत्। न च स्नेहो न च खेदः परिहारविधिर्न च। आत्रेयानुमतो ह्येष सर्व्वरोगनिबर्हणः॥ इति च.द.।

**अर्द्धमासूरी**। स्त्री। लेखनार्थमस्त्रधाराविशेषे। सु.सू.८ष.।

**अर्द्धवीरच्छा**। स्त्री। कृष्णदूर्व्वायाम्।

**अर्द्धश(स)फरः**। पुं। दस्तुपालाख्यक्षुद्रमत्स्यविशेषे। দাঁড়িকা বা ডানকোণা মাছ। हारा.।

**अर्द्धशरावः (कः)**। पुं। प्रस्थतिकर्षे। ३२ तो. प.प्र.१ख.। भा.। वै.निघ.।

**अर्द्धसहः**। पुं। पेचके। প্যাঁচা। मं कुवड़।

न्दव:, शीते चोष्णा ग्रीष्मे च शीता विन्दवो भवेयु:। तत्र वाते तिक्तं, पित्ते स्निग्धं, कफे च तिक्तोष्णरूक्षं हितम्। वै.निघ.।

**आश्रय:** । पुं। आधारे। जटा। गृहे। हे.च.।

**आश्रयाग्न:** । पुं। चित्रकवृक्षे। अग्नौ। अम.।

**आश्रव:** । पुं। क्लेशे। मे.।

**आश्लेष:** । पुं। आलिङ्गने। रत्ना.।

**आश्वत्थम्** । क्ली। अश्वत्थफले। अम.।

**आश्वयुज:** ) पुं। सप्तमासे, आश्विने मासि। **आश्विन:** } अत्र रवे: कन्याराशिस्थिति:। आश्विन मास। अम.।

**आश्विनेयौ** । पुं। अश्विनीकुमारौ। अम.।

**आश्वीनम्** । क्ली। एकेनाश्वेन एकदिनगम्ये पथि। अम.।

**आषाढ:** । पुं। स्वनामख्याततृतीयमासे। यत्र रवेर्मिथुनराशिस्थिति:। अम.। पलाशदण्डे। मे.।

**आषाढकम्** । क्ली। पलाशबीजे। [व.१३।

**आसङ्गा** । स्त्री। सौराष्ट्रमृत्तिकायां। रा.नि.

**आसङ्गिनी** । स्त्री। चक्रवायौ। घूर्णि वातास। चिका.।

**आसङ्गिम:** । पुं। कर्णबन्धनाकृतिविशेषे। स चाभ्यन्तरदीर्घैकपालि:। सु.सू.१६अ.।

**आसक्ति:** । स्त्री। सङ्गमे। मे.।

**आसन:** । पुं। जीवकद्रुमे। मे.नत्रिकं। क्ली। गजस्कन्धे। हला.। पीठिकाय। पिँड़ि।

**आसनपर्णी** । स्त्री। अपराजितायां। मं गां कर्णावल्ली। वै.निघ.।

**आसन्द:** । पुं। खट्वाभेदे। मे.दत्रिकं।

**आसन्दी** । स्त्री। लघुखट्विकायाम्। हारा.।

**आसन्नकाल:** । पुं। मृत्युकाले।

**आसव:** । पुं। मद्यमात्रवचने। वा.टी.हेमा.। मद्यविशेषे। अपक्वौषधसिद्धमद्यम् आसव उच्यते। "यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसव:।" शीधुरिक्षुरसै: पक्वैरपक्वैरासवो भवेत्। प.प्र.१ख। गन्धा:—"आसवस्य गुणा: ज्ञेया बीजद्रव्यगुणै: समा:। भा पू.मद्यव.। द्रवेषु चिरकालस्थं यद्द्रव्यं सन्धितं भवेत्। आसवारिष्टभेदैस्तत्प्रोच्यते भेषजोचितम्॥ वै.निघ.सेहविधि:। धान्याम्ले। वै.निघ.। See अरिष्ट:। [रा.नि.व.६।

**आसवद्रु: (म:)** । पुं। असनवृक्षे। तालवृक्षे।

**आसारण:** । पुं। वृक्षभेदे। भैष.।

**आसीनप्रचलायितम्** । क्ली। निद्राविशेषेणोपविश्य दोलने। ढूलुनि। राज.।

**आसुतम्** । क्ली। चिरकालस्थिताम्लं कन्दादियुक्तमासुतमुच्यते। तदुक्तं कन्दमूलफलाद्यैश्च लवणोदकसंयुतं। सन्धानाच्चिरकालात्तमासुतं परिकीर्त्तितम्॥ वा.टी.हे.। [हे.च.।

**आसुति:** । पुं। मद्यसन्धाने। मद चोयान।

**आसुतीवल:** । पुं। शौण्डिके। हे.च.।

**आसुरम्** । क्ली। विड्लवणे। रा.नि.व.६। विट् लवण। भा.पू.१भ.। सामुद्रलवणे। मद.व.२।

**आसुरी** । स्त्री। श्वेतसर्षपे। श्वेतसरिषा, कृष्ण राइ। प.मु.। र.सा.सं.। च.द.ग्रह.चि.आयामकाच्छिके। रक्तसर्षपे। राइसरिषा। रा.नि.व. १६। छेदभेदात्मके चिकित्साविशेषे। आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता। श.च.।

**आसेक्य:** । पुं। नपुंसकविशेषे। तल्लक्षणं— "पित्रोस्तु स्वल्पवीर्य्यत्वादासेक्य: पुरुषो भवेत्। स शुक्रं प्राश्य लभते ध्वजोन्नतिमसंशयम्"। सु.शा.२अ.।

**आस्कन्दनम्** । क्ली। संशोषणे। मे.नत्रिकं।

**आस्कन्दितम् (कम्)** । क्ली। अश्वस्य पञ्चमगतिभेदे। हे.च.। सा च गति: सम्यग्गतिरित्यमर:।

**आस्तर:** । पुं। करिकम्बले। हे.च.।

**आस्तरणम्** । क्ली। कुथे। हस्तिपृष्ठस्थविचित्रकम्बले। झूल्। हला.।

**आस्तिकमति:** । पुं। उत्तमवैद्ये।

**आस्था** । स्त्री। यत्ने। अपेक्षायाम्। आलम्बने। मे.थत्रिकं। जले। हे.च.।

**आस्थागम:** । पुं। जले। हे.च.। [निरूह:।

**आस्थापनम्** । क्ली। निरूहवस्तौ। भा.। See

**आस्थापनोपगवर्ग:** । पुं। आस्थापनशोध्य-

पञ्चविंशमहाकषायवर्गे । यथा—"चित्रकहिङ्गुपिप्पलीकुष्ठसर्षपयवावल्लकफलशतपुष्पामधुकमदनफलानी"ति दशेमानि आस्थापनोपगानि भवन्ति। ते उड़ी, हिङ्, पिपुल, कुड़, सरिषा, बच, इन्द्रयव शुलफा, यष्टिमधु, मयना फल । च.सू.४अ. ।

**आस्पदम्** । क्ली । स्थाने । हे.च. । प्रतिष्ठायां । अम. ।

**आस्पन्दनम्** । क्ली । अतिकम्पे । स्पन्दने ।

**आस्फालः** । पुं । करिकर्णास्फालने । हारा. ।

**आस्फालनम्** । क्ली । ताड़ने । आटोपे ।

**आस्फोटः (कः)** । पुं । अर्कवृक्षे । आकन्द गाछ । गिरिजपीलुनि । आक्रोटविशेष । रा.नि.व.१० । श.र. । [अम. ।

**आस्फोटनी** । स्त्री । वेधनिकायां । भोमर ।

**आस्फोटा** । स्त्री । नवमल्लिकायाम् । रा.नि.व.१० । नेवालि फुल । भा. ।

**आस्फोतः (कः)** । पुं । स्वनामख्यातलतागुल्मे । हापरमाली । र.मा. । रक्तार्कवृक्षे । भा.पू.१भ. । भैष.नवरी.चि. । कोविदारवृक्षे । रक्तकाञ्चन । हि कचनार । मद.व.१ । भूपलाशवृक्षे । प.मु. ।

**आस्फोतका (ता)** । स्त्री। (Clitoria ternatea.) अपराजितासामान्ये । प.मु.। भा.पू.१भ. विषतैले । भा.म.४भ.पूतनायह.चि. । "आस्फोता चैव योज्याः स्युः" । लताविशेषे । हापरमाली इति ख्याते । तैं अड़विमल्लितीगे । गुणाः—कुष्ठविषरोगघ्नो । राज. । कन्दर्पसार तैले । शारिवायाम् । सु.चि.६,१८भ. । वै.निघ.जीर्णज्व.चीरवादितैले । काष्ठमल्लिकायाम् । प.मु. । रा.नि.व.१२ । श्वेतसारिवायाम् । भा.पू.२भ. । नवमल्लिकायाम् । मे.तत्रिकं । [१८ ।

**आस्यम्** । क्ली । मुखे । मुखाभ्यन्तरे । रा.नि.व.

**आस्यदेशः** । पुं । मुखमध्ये ।

**आस्यपत्रम्** । क्ली । पद्मे । श.च. ।

**आस्यपुष्पः** । पुं । श्वेतकिङ्किणीवृक्षे । वै.निघ. ।

**आस्यफलः** । पुं । श्वेतधुस्तूरवृक्षे । श्वेत धुतुरा । मं श्वेतधोत्रा । वै.निघ. । [हे.च. ।

**आस्यलाङ्गलः** । पुं । शूकरे । वनशूकरे । ।

**आस्यलोम** । क्ली । श्मश्रुणि । दाड़ि, गोंप । मे. ।

**आस्यवैरस्यम्** । क्ली । मुखविरसतायां ।

**आस्यशाखोटः** । पुं । गुल्मविशेषे । आम् श्याओड़ा । गुणाः—"वदद्रुमास्यशाखोटः स पित्तकफनाशनः । वातलश्च क्रिमिं हन्ति पाण्डुताज्वरकामलाः ।" पचि. । [अम. ।

**आस्था** । स्त्री । उपवेशने । निरुद्योगोपवेशने ।

**आस्यासवः** । पुं । लालायां लाल, थुतु हे.च. ।

**आस्रवः** । पुं । प्रस्रावे ।

**आस्रावी** । पुं । अश्वस्य पादरोगभेदे । लक्षणं —"आस्राविणं विजानीयात् क्लेदस्रवतलं हयम् ।" ज.द.३९अ. ।

**आस्वादः (नम्)** । पुं, क्ली । स्वादग्रहणे ।

**आह्वकः (ज्वरः)** । पुं । नासाज्वरे । नासाज्वर । तल्लक्षणं —"तनुना रक्तशोथेन युक्तौ नासापुटान्तरे । गात्रशूलज्वरकरः श्लेष्मणा ह्याह्वकज्वरः ।" वै.निघ. । [तत्रिकं ।

**आहतम्** । क्ली । पुरातनवस्त्रे । नववस्त्रे । मे.

**आहरः** । पुं । उच्छ्वासे । अन्तर्मुखनिश्वासे । हे.च. ।

**आहरणम्** । क्ली । सञ्चयकरणे । मे. ।

**आहलीवम्** । क्ली । आसालवीज इति गुजराटे प्रसिद्धे । गुणाः—आहलीवं मतं चोष्णं तिक्तं त्वग्दीपनाशनं । वातं गुल्मं नाशयतीत्येवं प्रोक्तं चिकित्सकैः ॥ वै.निघ. ।

**आहा** । स्त्री । वणिक्द्रव्यभेदे । च.द. ।

**आहारः** । पुं । द्रव्यगलाधःकरणे । गेला, खाओया । भोजनद्रव्ये । द्रवाद्रवत्वात्स द्विधा, पुनश्च त्रिविधः—स्वभावगुरुर्मात्रागुरुः संस्कारगुरुश्चेति । वा. । "प्राणिनां पुनर्मूलमाहारः बलवर्णौजसाञ्च स षट्सु रसेष्वायत्तः ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुराहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च, तथाहारवैषम्यादस्वास्थ्यम् ।" सु.सू.४६अ. । गुणाः—बलकृत् सद्यः प्रीणनः देहधारकः । ओजस्तेजःशरीरोत्साहधृतिस्मृतिमतिप्रदश्च । मद.व.११ । तत्पाकप्रकारः—यात्यामाशयमाहारः पूर्वं प्राणानिलेरितः । माधुर्यं फेनभारञ्च षड्रसोऽपि लभेत सः । अथ पाचकपित्तेन

विदग्धशाकतां ब्रजेत्। ततः समागमकृता यत्र-श्लीमभिनीयते॥ यदन्नं पच्यते कोष्ठवह्निना जायते कटुः। रसो भवति सम्यक्कादपक्वादामसम्भवः। वह्निर्बलेन माधुर्य्यं स्निग्धतां याति तत्र सः। पुष्णाति धातूनखिलान् सम्यक् पक्वोऽमृतोपमः। मन्दवह्निविदग्धश्च कटुरम्लो भवेद्रसः। विषभावं ब्रजेद्वापि कुर्य्याद्वा रोगसङ्करम्॥ शार्ङ्ग.पू.६ष.। क्ली। भक्षे। प.मु.। भक्ष्याहारे। विम्याद्भक्ष्याहारमाहारसंग्रहम्। रा.नि.व.२०।

**आहारशोषणः।** पुं,क्ली। कृष्णजीरके। [च.]

**आहारसम्भवः।** पुं। शरीरस्थरसधातौ। हे.

**आहारस्थानम्।** क्ली। निर्गमनादिदेशे। "आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने विधेयाः।" भा.।

**आहार्य्यः।** पुं। कपालिकभयतो यः स आहार्य्यपालिर्नाम। तन्नामककर्णबन्धनाकृतौ। सु.सू.१६ष.। त्रि। आहरणार्हे (कर्णमलादौ)। आगन्तुके। त्रिका.।

**आहावः।** पुं। निपानजलाशये। চৌবাচ্চা। हे.च.। अम.।

**आहुली।** स्त्री। आहुल्ये।

**आहुल्यम्।** क्ली। काश्मीरदेशजे 'तरवट्' इति ख्याते क्षुपविशेषे। हिं भुञ्जितखड़। मं तरवड़, आवेर। गुणाः—आहुल्यं तिक्तशीतं चक्षुष्यं पित्तदाहघ्नं मुखरोगघ्नं कुष्ठकण्डूतिजन्तु-शूलव्रणघ्नञ्च। रा.नि.व.४।

**आह्वरफेनम्।** क्ली। अहिफेने। भैष.शोथ-चि. सेवपालरसे।

**आहेयम्।** क्ली। विषे। त्रि। अहिसम्बन्धिनि।

**आह्निकम्।** क्ली। भोजने। हारा.। मे.।

**आचारणा।** स्त्री। मैथुनं प्रत्याक्रोशे। छेनालि अपवाद। अम.।

**आचिकः।** पुं। आच्छुकवृक्षे। আচ্‌কুলের গাছ। र.मा.। छागज्वरे। गज.वै.।

**आचिकशीधुः।** पुं। विभीतकगुड़कृते धातकीपुष्पकृततीक्ष्णमद्ये। गुणाः—आचिकः पाण्डुरोगघ्नः बल्यः संग्राहको लघुः। कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः॥ सु.सू.४५ष.।

**आचिकी(सुरा)।** स्त्री। विभीतककल्कशालितण्डुलकृतसुरायाम्। सा च पाण्डुशोफार्शःपित्तासृक्कफकुष्ठघ्नी किञ्चिद्वातकरी वृष्या दीपनी रेचनी लघुश्च। मद.व.८। तिनिशकृतसुरेति केचित्।

**आचीवः।** पुं। शोभाञ्जनवृक्षे। সজিনা গাছ। श.टी.रा.।

**आचेपः (कः)।** पुं। वातरोगविशेषे। कुपितो वायुर्धमनीं प्राप्य मुहुः सञ्चरणाद्देहं चालयन् आक्षेपकं जनयति। लक्षणम्—यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः। तदा क्षिपत्याशु मुहुः मुहुर्देहं मुहुश्चरः। मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः॥ मा.नि.वा.व्या.। स चतुर्धा—वातादिभेदेन। गदाधरस्तु आक्षेपकमेकमेव कारणभेदाच्चतुर्विधं कथयति। पित्तश्लेष्माचितो वायुर्वायुरेव च केवलः। कुर्य्यादाक्षेपकं चान्यश्चतुर्थमभिघातजः॥ आक्षेपके शिरां विध्येत् कुर्य्याद्वातहरं क्रियां। तीक्ष्णैः प्रधमनैर्नस्यैस्तथा संज्ञां स विन्दति॥ इति। अश्वस्याक्षेपकलक्षणं यथा—"गत्वा यः पूर्व्वकायेन पुनः पश्चाच्च गच्छति। सन्ध्याङ्गो वेदनार्त्तश्च तस्याक्षेपकमादिशेत्॥" अ.द.५५ष.।

**आचोटः।** पुं। गिरिजाचोटवृक्षे। আক্‌রোট্ গাছ इति लोके। श.र.। See अचोटः।

**आचोड़ः।** पुं। आचोटवृक्षे। श.टी.भ.।

# इ

**इः।** पुं। पुरुषोत्तमे। हला.।

**इकटः।** पुं। वंशाङ्कुरे।

**इक्कटः।** पुं। तृणविशेषे। ইকড়্। प.मु.। बदरवृक्षे। रत्ना.।

**इङ्गः।** त्रि। जङ्गमे। हे.च.।

**इङ्गलः।** पुं। इङ्गुदीवृक्षे। জিয়াপুতা। हिं गणवेटे। वै.निघ.।

**इङ्गुदः (दी)।** पुं,स्त्री। ख्यातनामख्यातसदृशफि-

वृचे। জিয়াপুতা, ইঙ্গোট इति च प्रसिद्धे। सु.सू.३८ष.। कफशमने। "पुत्रजीवके पुत्रजीवकफले।" सि.यौ.कास.चि.मन:शिलादिधूमपाने च-न्द:। "मुस्तेङ्गुदे: पिबेत्।" इन्द:। गुणा:—मदगन्धि: कटुकश्चा फेनिला लघु: रसायनी क्रमिवातकफव्रणघ्नी च। रा.नि.व.८। कुष्ठभूतग्रहव्रणविषक्रमिघ्न उष्ण: श्वित्रशूलघ्न: तिक्त: कटुश्च। भा.पू.१भ.वटादि:। मद.व.५। "अस्य पुष्पन्तु मधुरं स्निग्धश्चोष्णश्च तिक्तकं। वातं कफं नाशयति च।" वै.निघ.। तत्फलं—"स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमेदुदम्।" सु.सू.४६ष.। पारावतपद्यां। লতাফট্কী। प.सु.।

**इङ्गुदीतैलम्।** क्ली। इङ्गुदीफलोत्थतैले। गुणा:—स्निग्धं मधुरं पित्तघ्नं शीतलं बल्यं कान्तिदं कोमलं केशवर्द्धनञ्च। रा.नि.व.१५। [१ष.।

**इङ्गुदीक्षार:।** पुं। तन्नामकक्षारे। च.चि.

**इङ्गुल: (ली)।** पुं, स्त्री। इङ्गुदीवृक्षे। रा.नि.व.८। क्ली। हिङ्गुले। मा.नि.विज.र.।

**इच्छाभेदी।** पुं। भेदकरसविशेषे। "तुल्यं टङ्कणपारदं समरिचं तुल्यांशकं गन्धकं विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत्। गुञ्जैकप्रमितो रसो हिमजलै: संसेवितो रेचयेत्।" अत्र प्रत्येकमेकभागतुल्यं जैपालचूर्णस्य नवगुणत्वं। द्वितीये पाठे जैपालस्याष्टौ भागा: गन्धकस्य द्वौ भागौ। स यथा—"जैपालाष्टौ द्विको गन्धस्त्रिशुण्ठी मरिचं त्रिकं। एक: सूत: सौहगैका गुञ्जा मात्रा वटीकृता" इत्यादि॥ तृतीये गदमुरारीच्छाभेदिरसे बलिर्गन्धके, गगनमभ्रे, अर्कस्ताम्रे, जैपालचूर्णं सर्व्वचूर्णसमं भृङ्गराजरसै: दिनद्वयं मर्द्दम्। पाठो यथा—"रसबलिगगनार्कं शुद्धतालं विषञ्च त्रिकटुत्रिफलमेतत् टङ्कणं भृङ्गभि:। सममिह जयपालीकृतचूर्णं विमर्द्य द्विनिशममिश्रमेतद्भृङ्गराजोत्थवारा॥" चतुर्थो यथा—"शुण्ठी मरिचसंयुक्तं रसगन्धकटङ्कणं। जैपालास्त्रिगुणा: प्रोक्ता: सर्व्वमेकत्र चूर्णयेत्। इच्छाभेदी द्विगुञ्ज: स्यात् सितया सह दापयेत्। यावन्तश्चुलुका: पीतास्तावद्वारान् विरेचयेत्॥" तक्रौदनं खादितव्यम्। र.सा.सं.विरेकाधिकारे।

**इच्छाभेदी(गुड़िका)।** स्त्री। भेदकारकभेदे। अत्र जैपालचूर्णं सर्व्वतुल्यं ग्राह्यं। "पारदं गन्धकं कुर्य्यात्सौभाग्यं पिप्पलीसमं। समानि जयपालानि क्रियन्ते रेचनाय च। शीतेन रेचयेत्कस्यगुणेनैव प्रशाम्यति।" र.सा.सं.। [गाछ। श.च.।

**इच्छुक:।** पुं। मातुलुङ्गवृक्षे। টাবা লেবু

**इज्जल:।** पुं। (Barringtonia acutangula, Syn. Eugenia acutangula.) हिज्जलवृक्षे। হিজল। समुद्रफले इति च लोके। गुणा:—"शीतल: संग्राही वातकोपन: विशेषेण विषघ्नश्च। मद.व.५। कुक्कुरस् वातकोपनश्च। भा.पू.१भ.। इज्जलिरिति। हे.च.। See हिज्जल:।

**इञ्चाक:।** पुं। मत्स्यविशेषे। এঁচলা মাছ। त्रिका.।

**इञ्चुक:।** पुं। इञ्चाकमत्स्ये। हारा.।

**इट्चर:।** पुं। षण्डे। षাঁড়। अम.।

**इड्‌व:।** पुं। गोपतौ। ষাঁড়। हे.च.।

**इड़ा।** स्त्री। शरीरवामभागस्थनाड्यां। वामसुष्काध:स्था धनुर्वक्रा वामनासिकापर्य्यन्तगता या नाड़ी सा इड़ा इत्युच्यते। हे.च.।

**इड़ाचिका।** स्त्री। वरटायाम्। বোলতা। श.च.। गन्धोल्याम्।

**इड़ाजात:।** पुं। भूमिजगुग्गुलौ।

**इड़िक: (क:)।** पुं। वन्यच्छागे। वानरे। हारा.।

**इड्‌वर:।** पुं। वृषे। अ.टी.। स्वामी।

**इण्डरी।** स्त्री। पक्वान्नविशेषे।

**इत्कट: (र:)।** पुं। स्वनामख्यातक्षुपविशेषे। ইৎকড়, ওকড়া, ইকড় इति च। र.मा.। च.सू.४ष.।

**इत्कटा।** स्त्री। सूक्ष्मपत्रिका-दीर्घलोहितयष्टिका-काष्ठविशेषे। वा.सू.१५ष.वेल्लन्तरादिव.। "गोकण्टकेत्कटसहाचरवाणकाशा:।"

**इत्किला।** स्त्री। गोरोचनाख्यगन्धद्रव्ये। श.च.।

**इदङ्कार्य्या।** स्त्री। दुरालभायाम्। श.च.।

**इद्धम्।** क्ली। रौद्रे। दीप्ते। मे.। [अम.।

**इध्मम्।** क्ली। अग्निदीपनकाष्ठे। জ্বালানিকাঠ।

**इनानी।** स्त्री। वटपत्रीवृक्षे। পাথরকুচাবিশেষ। रा.नि.व.५।

**इन्दम्वरम्** । क्ली । (Nymphaea coerulea.) नीलकमले, नीलपद्मे । श.मा ।

**इन्दिन्दिर:** । पुं । भ्रमरे । त्रिका. ।

**इन्दिरा** । स्त्री । लक्ष्म्यां । त्रिका. ।

**इन्दिरामन्दिरम्** । क्ली । विष्णौ । राज. ।

**इन्दिरालय:** । पुं । (Nymphaea lotus.) पद्मे । श.र. ।

**इन्दिरावरम्** । क्ली । नीलपद्मे । प.मु.श.र. ।

**इन्दि(न्दी)वरम्** । क्ली । नीलपद्मे । नील-शुंदि । प.मु.श.मा. । एतत् श्वेतपद्मादिगुणयुक्तं पर किञ्चिद्धीनगुणम् । भा.पू.१भ. । See नीलोत्पलम् ।

**इन्दीवर:** । पुं । स्थलपद्मवृक्षे । सु.स.३८अ. । कुरुण्टकभेदे । "कुरुण्टकाभेद: दीर्घपर्णो बहलपुष्प: ।" ड.सु.चि.७अ. ।

**इन्दीवरा (री)** । स्त्री । शतमूल्याम् । प.मु. रा.नि.व.१० । भ्रमरमाम् । তিৎপুষ্পী । प.मु. । इन्द्रचिर्भट्याम् । রাখালশসা । रा.नि.व.३ । क-दलीवृक्षे । वै.निघ. । See इन्द्रवारुणी ।

**इन्दीवरिणी** । स्त्री । उत्पलिन्याम् । কুমুদের ঝাড় । रा.नि.व.१० ।

**इन्दीवारम्** । क्ली । नीलपद्मे । मे.राज. ।

**इन्दु:** । पुं । कर्पूरे । अम.रा.नि.व.८ । भा.म.४भ.नेत्ररोग.चि. । "स्फाटिकशङ्खनाभेन्दव: ।" भा.म.१भ.त.मन्त्र.चि. । "तुरङ्गलालालवणानमेन्दु । लवङ्गन्दुसुवासितम् ।" भा.पू.पानकव. ।

**इन्दुक:** । पुं । अश्मन्तकवृक्षे । रा.नि.व.९ । केमुककन्दे । वै.निघ. ।

**इन्दुकमलम्** । क्ली । कुमुदे । শ্বেতোৎপল, শ্বেত শুন্দি ফুল । रा.नि.व.१० ।

**इन्दुकलिका** । स्त्री । केतकीवृक्षे । কেয়া গাছ । श्वेतकेतक्याम् । रा.नि.व.१० ।

**इन्दुकान्त:** । पुं । चन्द्रकान्तमणौ । रा.नि.व. १३ । स्त्री । रात्रौ । हे.च. । [रा.नि.व.६ ।

**इन्दुखण्डा** । स्त्री । कर्कटशृङ्ग्यां । কাঁকড়াশৃঙ্গী ।

**इन्दुचन्दनम्** । क्ली । हरिचन्दने । वै.निघ. ।

**इन्दुपत्र:** । पुं । भूर्जवृक्षे । संग्रह: ।

**इन्दुपुष्पिका (ष्पी)** । स्त्री । लाङ्गलीवृक्षे । ইশলাঙ্গুলে । रा नि.व.३ । [४ रा.नि.व.२३ ।

**इन्दुपोदकी** । स्त्री । वेल्लिकायां । লতাবিশে

**इन्दुफल:** । पुं, क्ली । आम्रातके । আমড়া গাছ, আমড়া । वै.निघ. । वै.निघ. ।

**इन्दुमुखी** । स्त्री । पद्मिन्याम् । পদ্মের ঝাড় ।

**इन्दुर:** । पुं मूषिके । अयं विलेशय:, विलेशयत्वादेतन्मांसं वातघ्नं मधुरं बृंहणं बद्धविण्मूत्रं वीर्यौष्णञ्च । भा.पू.१भ. ।

**इन्दुरकर्णिका (र्णी)** । स्त्री । आखुकर्णीलतायाम् । ইন্দুরকাণী । হিং মূষাকাণী । [१३।

**इन्दुरत्नम्** । क्ली । मुक्तायाम् । प.मु.रा.नि.व.

**इन्दुरसा** । स्त्री । पिष्टकभेदे । আঁদিরসা । यथा—"षष्टिकानाञ्च शालीनां पिष्टं द्राक्षाञ्च शर्करां । किञ्चिद्दध्ना च संमर्द्य द्वितीये दिवसे तत: । वर्त्तुलान् वटकान् कृत्वा घृते पक्वा प्रयत्नत: । गुणा: —तेऽतिशीताश्च हृद्याश्च बलपुष्टिकरा मता: ।" वै.निघ. ।

**इन्दुरा** । स्त्री । सोमराज्याम् । वै.निघ. ।

**इन्दुराजि:(जी)**। स्त्री। सोमराज्यां । वै.निघ.।

**इन्दुलेखा** । स्त्री । (Asclipias acida.) गुडूच्याम् । त्रिका. । सोमराज्याम् । वै.निघ. । सोमलतायाम् मे.खवतुर्क्कं । यमान्यां । श.मा. ।

**इन्दुलोह(कम्)** । क्ली । रौप्ये । रा.नि.व.१३।

**इन्दुवल्लिका (ल्ली)** । स्त्री । सोमलतायाम् । गुडूच्यां । जटा.। सोमराज्यां । यमान्यां । वै.निघ.।

**इन्दुशकला** । स्त्री । सोमराज्यां । वै.निघ. ।

**इन्दुशफरी** । स्त्री। अश्मन्तकवृक्षे । रा.नि.व.९।

**इन्दूर:** । पुं । मूषिके । रा.नि.व.६ ।

**इन्द्र:** । पुं देवराजे । मे. । कूटजवृक्षे । भा.पू. १भ.। इन्द्रयवे । भैष.भल्लात-गुडे.। च.द.पित्तश्लेष. ज्व.चि.कण्टकार्य्यादि: । "नागरेन्द्रयवासकं ।" भा.म.४भ.मसू.चि. । "त्रिफलेन्द्रयवासकम् ।" चन्द्रे । रवौ.। योगभेदे । मे.रहिकं । अन्तरात्मनि, स्थावर-विषभेदे । हे.च.। इन्द्रमहाकाललतायां । वै.निघ.।

**इन्द्रकर्णिका:** । पुं। रक्तैरण्डे । লাল ভেরেণ্ডা।

**इन्द्रकोष:** । पुं। निर्य्यूहे । निर्यासे । तमङ्गके । গোঁজলা । हे.च.इला. । [टी.भ. ।

**इन्द्रगुप्तम्** । क्ली । उशीरे । বেণার মূল । भ.

**इन्द्रगोप:** । पुं। (Coccinella of various kinds.) शक्रगोपे । तीज वीरबहुटी इति च प्रसिद्धे । मखमली, ছোট কেন্নুই इति लोके । हारा. । रा.नि.व.१६ । [रा.नि.व १२ ।

**इन्द्रचन्दनम्** । क्ली । हरिचन्दने । रक्तचन्दने।

**इन्द्रचिर्भिटा (टी)** । स्त्री । इन्द्रवारुणीलतायां । युग्मफललतायां । রাখালশশা । मं लघुकांवरल । गुणा:—कटु: शीता पित्तश्लेष्मकासदोषव्रणक्रमिघ्नी चक्षुष्या च । रा.नि.व.३ ।

**इन्द्रच्छन्दम्** । क्ली । सहस्रगुच्छहारे । हे.च. ।

**इन्द्रज:** । पुं । इन्द्रयवे । वै.निघ.२भ.ज्व.चि.ग न्ध्यादिकषाये । कुटजवृक्षे । वै.निघ.च.सा.चि. कुटजचूर्णे ।

**इन्द्रजतु** । क्ली । शिलाजतुनि । वै.निघ. ।

**इन्द्रजम्बूकवल्यात्रा** । स्त्री । कृष्णसारिवायां । भा.पू.१भ. । See कृष्णसारिवा अनन्ता च ।

**इन्द्रजिह्वा** । स्त्री । लाङ्गलीवृक्षे । ईशलाङ्गले।

**इन्द्रतरु:** । पुं । अर्जुनवृक्षे । वै.निघ. ।

**इन्द्रतूल(क)म्** । क्ली । आकाशे उड्डीयमानसूत्रे । আকাশবুড়ির সূতা । कार्पासे । अर्कवृक्षतूलके । चिका. । [चि । भा.पू.१भ. ।

**इन्द्रदारु:** । पुं । देवदारुवृक्षे । तैलदेवदारुव-

**इन्द्रद्युति** । क्ली । चन्दने । वै.निघ. ।

**इन्द्रद्रु: (म:)** । पुं । अर्जुनवृक्षे । श्र.र.। अम. । कुटजवृक्षे । रा.नि.व.६। देवदारुवृक्षे। भा.पू.अने.।

**इन्द्रनील:** । पुं । मरकतमणौ । নীলকান্তমণি, পান্না । हे.च. । भा.पू.१भ. । "क्षीरमध्ये क्षिपेन्नीलं क्षीरवर्णेनीलतां व्रजेत् । इन्द्रनीलमिति ख्यातम् ।" इति परीक्षा । (क:) श्र.र. ।

**इन्द्रपर्णी** । स्त्री। इन्द्रवारुण्यां । রাখালশশা । लाङ्गलिकायां । ईशलाङ्गले। सु.चि.१७ष. ।

**इन्द्रपुष्पम्** । क्ली। लवङ्गे । र.सा.सं.पूर्णचन्द्ररसे।

**इन्द्रपुष्पा (ष्पिका) (ष्पी)** । स्त्री। लाङ्गली-वृक्षे । ईशलाङ्गले । प.मु.रत्ना. । पूतीकरञ्जे । नाटा । कण्टकीकृष्णपुष्पकरञ्ज:,कलिकारिकेत्यन्ये । सु.सू.३७ष.श्यामादि.ड. ।

**इन्द्रब्रह्मवटी** । स्त्री । अपस्माराधिकारे । अभ्र तारं रौप्यम् । ताप्यं स्वर्णमाक्षिकम् । पाठ:—"मृतसूताभ्रकं तीक्ष्णं तारं ताप्यं विषं समं । पद्मकेशरसंयुक्तं दिनैकं मर्द्दयेद्द्रवै: । कुष्माण्डविजयैरण्डवचाभिष्पावशूरणै: । निर्गुण्ड्याश्च द्रवैर्मर्द्यं तद्गोलं पाचयेत्पुन: । कङ्गुणीसर्षपोत्थेन तैलेन गन्धसंयुतं । तत: पक्वा समुद्धृत्य चणमात्रा वटीकृता ।" अनुपानमार्द्रकरस: । र.सा.सं. । রসসিন্দুর, অভ্র, লৌহ, রূপা, স্বর্ণমাক্ষিক, বিষ, পদ্মকেশর সমভাগ । মর্দ্দনদ্রব্য—মনশাসিজু, চিতে, সিদ্ধি,এরণ্ড,বচ, শিম, ওল এবং ইঙ্গুর রস।

**इन्द्रभेषजम्** । क्ली । शुण्ठ्याम् । श्र.र. ।

**इन्द्रमद:** । पुं । तरुगुल्मज्वरे । गजवे. ।

**इन्द्रमहाकामुक:** । पुं । कुक्कुरे । चिका. ।

**इन्द्रयव: (वम्)** । पुं, क्ली । (Seed of holarrhena antidysenterica.) कुटजबीजे । ইন্দ্রযব । हिं उत्. इन्द्रयव । मं इन्द्रयव, कुड्याचेंबीं । कं कोड़सिगेयबीज । इन्द्रशब्दपर्य्यायमात्रं कुटजवाचकम् । धन्वन्तरि: । भा.पू.१भ. । वा.सू. १५अ. । "आरग्वधेन्द्रयवपाटलिकाकतिक्ता ।" च. द.पित्तज्व.चि. । "तिक्ताब्देन्द्रयवै: कृतम् ।" गुणा:—कटु: तिक्त: शीतल: कफवातरक्तपित्तहर: दाहातीसारघ्न: नानाज्वरघ्न: शूलघ्नश्च । रा.नि.व.६ । त्रिदोषघ्नं धारकं कटुशीतं दीपनं ज्वरातीसाररक्तार्शोवमिवीसर्पकुष्ठवातरक्तकफशूलघ्नञ्च । भा.पू. १भ. । इन्द्रयवा इति राजनिघण्टु: ।

**इन्द्रलुप्त(क)म्** । क्ली । Baldness. श्मश्रुकेशघ्नरोगे । টাক্ রোগ । मं चाइरोग। तस्य लक्षणम्—"रोमकूपानुगं पित्तं वातेन सह मूर्च्छितं । प्रच्यावयति रोमाणि तत: श्लेष्मा सशोणित: । रुणद्धि रोमकूपांश्च ततोऽन्येषामसम्भव: । तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते। सु.नि.१३ष. । इन्द्रलुप्तं श्मश्रुणि भवति खालित्यं शिरोवर्त्तीत्येव रुज्या सर्वदेनेति कार्त्तिककुण्ड: । मा.नि.विज.र.। रूज्येति । विज.र.भोज: । पुं । रा.नि.व.२० ।

**इन्द्रलोहकम्** । क्ली । रीप्ये ।

**इन्द्रवचा** । स्त्री । इन्द्रयवे । रा.नि.व.६ ।

**इन्द्रवटी** । स्त्री । प्रमेहाधिकारे । पाठः—"मृतं सूतं मृतं वङ्गमर्जुनस्य त्वचान्वितं । तुल्यांशं मर्द्दयेत्खल्वे शाल्मल्या मूलजद्रवैः । मात्रा १ मा. । र.सा.सं. । सा.कौ. । রসসিন্দূর, বঙ্গ এবং অর্জ্জুনছাল সমভাগ ।

**इन्द्रवल्लरी** । स्त्री । इन्द्रवारुणीलतायां । রাখালশশা । रा.नि.व.३ । वै.निघ.२भ.कर्णक.सन्निपात रोहितकादिलेपे । [मलता । सु. ।

**इन्द्रवल्लिका (ल्ली)** । स्त्री । इन्द्रवल्ल्यां । सो-

**इन्द्रवस्तिः** । पुं । तन्नामकमर्म्मस्थाने । পায়ের ডিম । तस्य स्थानं प्रतिपार्ष्णिजङ्घयोः सन्धिः । सु.शा.६ष. ।

**इन्द्रवारुणिका (णी)** । स्त्री । (Eucumis madraspatanus, cunnis melo. ऐन्द्री-नामकलतायाम् । प.मु. । রাখাল নাড়ু, রাখাল শশা, কুঁদরুকী । हिं इन्द्रायण,बड़ी इन्द्रफला । मं इन्द्रवारुणी । गुणाः—तिक्ता कटुः शीता रेचनी गुल्मपित्तोदरश्लेष्मक्रमिकुष्ठज्वरघ्नी च । रा.नि.व.३ । सा क्षुद्रदीर्घभेदेन द्विधा । लघुः उष्णा कामलापित्तकफप्लीहोदरश्वासकासकुष्ठगुल्मग्रन्थिव्रणप्रमेहमूढ़गर्भगलगण्डविषघ्नी च । भा.पू.१भ. । "लघ्वीन्द्रवारुणी प्रोक्ता पाके कट्वी च तिक्तका । शीता सरोष्णवीर्य्या च लघ्वी चैव प्रकीर्त्तिता । ...... । चान्येन्द्रवारुणी कण्ठरुजघ्न शोषदं तथा । नाशयेदिति संप्रोक्ता गुणाश्चान्ये तु पूर्व्ववत् । रसे वीर्य्ये च पाके चाधिका चोक्ता गुर्वीयम्॥" वै.निघ. । गोरक्षकर्कट्याम् । च.द लाक्षातैले ।

**इन्द्रवि(वृ)द्धा** । स्त्री । वातपित्तजन्यक्षुद्ररोगान्तर्गतव्रणरोगविशेषे । लक्षणं—"पद्मकर्णिकवन्मध्ये पिड़का पिड़काचिताम् । इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषगिति ॥" मा.नि. । तन्नामकाक्षरोगे । See इन्द्रवृद्धः ।

**इन्द्रवीजम्** । क्ली । इन्द्रयवे । च.द.सि यो.सान्निपातिकज्व.चि.अष्टादशाङ्गे । "तिक्तेन्द्रवीजधनिकेभकणाकषायः ।"

**इन्द्रवृद्धः** । पुं । सुश्रुतवर्जितकुलजवातव्याधिविशेषे । लक्षणं. यथा—"विरोधं नैव यो याति इहास्यां सुश्रुवर्जितः । इन्द्रवृद्धः स विख्यातो भगन्दर कुलनाशनः ॥" अ.द.३ष. ।

**इन्द्रवृक्षः** । पुं । देवदारुवृक्षे । अटा. । श्वेतकुटजवृक्षे । अर्जुनवृक्षे । भा.म.४भ. । "सोमवल्लीमिन्द्रवृक्षम् ।"

**इन्द्रसुतः** । पुं । अर्जुनवृक्षे । रा.नि.व.९ ।

**इन्द्रसुरसः (सा)** । पुं, स्त्री । निर्गुण्डीवृक्षे ; নিশিন্দা গাছ । रत्ना. । See निर्गुण्डी ।

**इन्द्रसुरा** । स्त्री । गोरक्षकर्कटिकायां । রাখাল শশা । सु.चि.२७ष. । "गुड़ूचीन्द्रसुरा ।"

**इन्द्रसुरिषः (सः)** । पुं । निर्गुण्डीवृक्षे । নিশিন্দা গাছ । सौंडी इति कास्याम् । र.मा.श्वम. ।

**इन्द्रसूनुः** । पुं । अर्जुनवृक्षे । रा.नि.व.९ ।

**इन्द्रस्वरसः** । पुं । हस्तिजले । च.द.अर्श.चि. नागार्जुनयोगे ।

**इन्द्रा** । स्त्री । फणिजक्षकवृक्षे । কাঁটা জামীর। मे.रत्रिकं । भा.म.३भ.मेद-चि. । इन्द्रवारुण्याम् । रा.नि.व.३ ।

**इन्द्राग्निधूमः** । पुं । हिमे । हारा. ।

**इन्द्राणिका** । स्त्री । निर्गुण्डीवृक्षे । प.मु. । নীলসিন্দুবারে । रा.नि.व.४ । जातीफलादिवटिकायां । [जातीफला.वटी. ।

**इन्द्राणिकापत्रम्** । क्ली । निर्गुण्डीपत्रे ।

**इन्द्राणी** । स्त्री । (Vitex nigundo.) कृष्ण-निर्गुण्ड्याम् । কাল নিশিন্দা । हिं शम्भालु । स्त्रीन्द्रिये ।"इन्द्राणी करणं स्त्रीणां पौलोमासिन्दुवारयोः ।" मे.णत्रिकं । सूक्ष्मैलायां, स्थूलैलायाम् । रा.नि.व.६ ।

**इन्द्राभा** । स्त्री । कटुपक्षिभेदे । वै.निघ. ।

**इन्द्रायुधम्** । क्ली । वज्रकमणौ । হীরক । रा.नि.व.१३ । स्थावरविषान्तर्गतकन्दविषे । सा.उ.३५ष. । च.चि.२६ष. । स्त्री । इन्द्रायुधवद्बहुराजि-सविषजलायुकायाम् । सु.सू.१३ष. । See जलायुका ।

**इन्द्रार्घपादपः** । पुं । क्षुमुकवृक्षे । গুপারি গাছ । रा.नि.व.११ । See अक्षोटः ।

**इन्द्राशनः (कः)** । पुं । (Abrus precato-

rius.) संविदारुयी। सिङ्गिगाछ। जातीफला-दिवर्ग्या। गुञ्जायाम्। कुँच। कुष्ठौषधे। कुड़। हारा। [व.१।

**इन्द्राह्वा** । स्त्री। इन्द्रवारुणीलतायाम्। मद.

**इन्द्राह्वः** । पुं। ऋषभकनामकलताकन्दे। ऋषभक। भा.पू.१भ.ह.व.मद.व.१।

**इन्द्रियम्** । क्ली। (Organs of senses.) ज्ञानकर्म्मादिसाधनेषु चक्षुरादिषु। জ্ঞান ও কর্ম্ম-সাধনের উপায়ভূত চক্ষুঃ প্রভৃতি। इन्द्रियाणि त्रिविधानि बुद्धीन्द्रियकर्म्मेन्द्रियान्तरिन्द्रियभेदेन, तेषु श्रोत्रत्वक्चक्षुरसनाघ्राणाभिधानानि ज्ञानेन्द्रियाणि, वाक्पाणिपायुपादोपस्थनामानि कर्म्मेन्द्रियाणि, एतदुभयात्मकं मनः, समष्ट्या एकादशेन्द्रियाणि। तथाहि—"वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्म्मेन्द्रियाणि। उभयात्मकं मनः। भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा - शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता। तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः। कर्म्मेन्द्रियाणां यथासंख्यं वचनादानानन्दविसर्गविहरणानि। अव्यक्तं महानहङ्कारः पञ्च तन्मात्राणि चेत्यष्टौ प्रकृतयः शेषाः षोड़श विकाराः। स्वः स्वश्चैषां विषयोऽधिभूतं। स्वयमध्यात्ममधिदैवतञ्च। अथ बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्य्यश्चक्षुषोः, रसनस्यापः, पृथ्वी घ्राणस्य, वचसोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रं, प्रजापतिरुपस्थस्येति। आयुर्व्वेदे भौतिकानीन्द्रियाणीन्द्रियार्थाश्च वर्ण्याः।" सु.शा.१च.। अन्तरिन्द्रियाणि पुनः चत्वारि मनोबुद्ध्यहङ्कारचित्तानि। मनस्तावदिन्द्रियनियामकं। एवं चतुर्दशेन्द्रियाणां नियन्तारश्चतुर्दशदेवताः। तत्र कर्णस्य देवता दिक्,त्वचो वातः,नेत्रस्य सूर्य्यः, रसनाया वरुणः, घ्राणस्याश्विनौ,वाचो वह्निः,हस्तस्येन्द्रः, पादस्य विष्णुः, पायोर्मित्रः, उपस्थस्य प्रजापतिः, मनसश्चन्द्रः, बुद्धेश्चतुर्मुखः, अहङ्कारस्य शिवः, चित्तस्याच्युतः। इति वेदान्तः। रेतसि। रा.नि.व.१८। मे.यत्रिकं। त्रिका। भा.म.१भ.छ.व.चि.।

**इन्द्रियकर्म्म** । क्ली। चक्षुरादीनां शब्दाकर्णन-स्पर्शग्रहण रूपदर्शन-रसग्रहण-गन्धग्रहणवचनादान-विसर्गगमनानन्दाख्यानि। सु.शा.१च.।

**इन्द्रियगोचरः** । त्रि। इन्द्रियविषये।

**इन्द्रियग्रामः** । पुं। शरीरे। वै.निघ.। इन्द्रियसमूहे। [छानी।

**इन्द्रियघ्नः** । पुं। चक्षूरोगविशेषे। চক্ষের

**इन्द्रियज्ञानम्** । क्ली। इन्द्रियजन्यज्ञाने।

**इन्द्रियबुद्धिः** । स्त्री। इन्द्रियजन्यज्ञाने।

**इन्द्रियवर्गः** । पुं। एकादशेन्द्रियेषु, इन्द्रियसमूहे। See इन्द्रियम्। [वै.निघ.।

**इन्द्रियवैकल्यम्** क्ली। इन्द्रियदुर्व्वलतायां।

**इन्द्रियसन्तापः** । पुं। इन्द्रियवैकृते।

**इन्द्रियस्वापः** । पुं। प्रलये। निद्रायाम्। चैष्टानाशे। रा.नि.व.२०।

**इन्द्रियागोचरः** । त्रि। अतीन्द्रिये।

**इन्द्रियायतनम्** । क्ली। शरीरे। हे.च.।

**इन्द्रियार्थः** । पुं। इन्द्रियजन्यज्ञानविषयेषु। यथा—रूपरसगन्धस्पर्शशब्दाः। अम.।

**इन्द्रोक्तरसायनम्** । क्ली। इन्द्रकथितरसायनवर्गे। ऐन्द्र्यां। ব্রাথালশশা। महाश्रावण्याम्। বড় থুলকুড়ি। च.चि.१अ.।

**इन्द्रोपलम्** । क्ली। नीलहीरके। प.मु.।

**इन्धनम्** । क्ली। काष्ठे। अग्निज्वालनार्थकाष्ठे। अम.।

**इभः** । पुं। हस्तिनि। अम.। नागकेशरे। च.।

**इभकणा** । स्त्री। (Pothos officinalis.) गजपिप्पल्याम्। र.मा.। भा.पू.१भ.। च.द.सि.यो.सान्निपातिकज्व.षटाङ्गकषाये। 'धनिकेभकणाकषायः।'

**इभकृष्णः (ष्णा)** । पुं, स्त्री। गजपिप्पल्याम्। भैष.च.द.यक्ष्मा-चि.कल्याणगुड़े।

**इभकेश(स)रः** । पुं। नागकेशरवृक्षे । भैष.। क्ली। नागकेसरपुष्पे । चि.क्र.क.प्रदरचि.। सु.चि.३८अ.।

**इभगन्धा (न्धिका)** । स्त्री । स्थावरविषान्तर्गततन्नामकफलविषे । सु.कल्प.२अ.।

**इभदन्ता** । स्त्री । हस्तिशुण्डीवृक्षे । হাতিশুঁড়ে । रत्ना. । नागदन्त्याम् । र.मा. ।

**इभदन्ताह्वा** । स्त्री । नागदन्त्यां । र.मा.रत्ना.।

**इभपत्रिका** । स्त्री । चिल्लीशाके । वै.निघ. ।

**इभपुष्पम्** । क्ली । नागकेशरे । भैष.मु.रो.चि. वृहत्खदिरवट्यां ।

**इभपोटा** । स्त्री । करिशावके । [वासायष्ठते ।

**इभबला** । स्त्री। नागबलायां। वै.निघ.क्षय चि.

**इभमज्जकः** । पुं। पुत्रदात्रीलतायां। वै.निघ.।

**इभमाचलः** । पुं । सिंहे । [वै.निघ. ।

**इभमूलकम्** । क्ली। हस्तिमूलके । गन्धतर्पणे ।

**इभशुण्डी** । स्त्री । हस्तिशुण्ड्याम् । [र.मा. ।

**इभषा** । स्त्री । स्वर्णक्षीरीवृक्षे । সোণাথিকই ।

**इभाख्यः** । पुं । (Musaferrea.) नागकेशरवृक्षे । त्रिका. ।

**इभावती** । स्त्री । वटपत्रीवृक्षे । পাথরকুচা ।

**इभी** । स्त्री । हस्तिन्याम् । হাতিনী ।

**इभोषणा** । स्त्री । गजपिप्पल्याम् । श.च. ।

**इभ्या** । स्त्री । (Boswellia thurifera or serrata.) शल्लकीवृक्षे । करिण्यां । मे.यद्विकं ।

**इरणम्** । क्ली। ऊषरभूमौ। श.टी.र.।रा.नि.व.२।

**इरा** । स्त्री । सुरायाम् । जले । मे. । [त्रिका. ।

**इराचरम्** । क्ली । करकायाम्। বর্ষার শীল ।

**इरावती** । स्त्री । वटपत्रीपाषाणभेदे । বড় পাথরকুচা । रा.नि.व.५ । [इरिवेल्लिका ।

**इरावेल्लिका** । स्त्री । इरिवेल्लिकायाम् । See

**इरिकीलः** । पुं । अङ्कोलवृक्षे । আঁকোড় । वै.निघ. । [भजय. । रा.नि.व.२ ।

**इरिणम्** । क्ली । ऊषरभूमौ । লোণা ভূমি ।

**इरिमेदः (कः)** । पुं । अरिमेदे । বিট্ খদির । रा.नि.व.८ । भा.पू.४भ.मु.रो.चि. । "कासे... रनलाखदिरेरिमेद···।" See अरिमेदः ।

**इरिवेल्लिः (का)** । स्त्री। सन्निपातजन्ये शिरोजातव्रणजन्यपीड़ाविशेषे । तस्य लक्षणम् —"पिड़कामुत्तमाङ्गस्थां वृत्तामुग्रजाज्वरां । सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिवेल्लिकां ॥" निदानम् ।

**इर्म्मं (म्)** । क्ली । व्रणे । क्षते । अम ।

**इर्व्वारुः** । पुं स्त्री । कर्कटीनामफलशाके । কাঁকুড় গাছ । प.मु. । रोमशकर्कटीति । ड. । सु.सू.४२अ.मधुरव. ।

**इर्व्वारुशुक्तिः (का)** । स्त्री । फुटीतिख्यात निर्भिन्नकर्कट्याम् । फुटी । हारा. । [श.टी.रा. ।

**इर्व्वालुः** । पुं,स्त्री । कर्कटिकायाम् । কাঁকুড় ।

**इलि(ली)(ल्लि)शः** । पुं । मत्स्यविशेषे । ইলীশ মাছ । हिं हीलसा । हारा.। गुणाः— "इल्लिशो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तकृत्कफकृत्किञ्चिल्लघुर्वृष्योऽनिलापहः ।" भा.पू.२भ.। पित्तश्लेष्माग्निवर्द्धकः मधुरः हृद्यश्च । राज. ।

**इली** । स्त्री । करवालिकायाम् । ছুরি, কাটারি । श.टी.रा. ।

**इल्ललः** । पुं । पक्षिभेदे । श.च. ।

**इल्वलः** । पुं । मत्स्यभेदे । मे.लत्रिकं ।

**इशि(षी)का** । स्त्री । गजाक्षिगोलके । शरकाण्डे । শরকাটি । श.टी.भ. ।

**इषः** । पुं । आश्विनमासि । अम. ।

**इषिका** । स्त्री । गजाक्षिगोलके । श.टी.रा. ।

**इषिरः** । पुं । अग्नौ । [श.टी.भ. ।

**इषीका** । स्त्री । काशतृणे । हला.। शरकाण्डे ।

**इषुः (कः)** । पुं । शरतृणे । प.मु. ।

**इषुगोलकः** । पुं । कोकिलाक्षवृक्षे ।

**इषुपत्रिका (त्री)** । स्त्री। अर्कमूलायाम् । ঈশের মূল । र.मा. ।

**इषुपुङ्खा (ङ्खिका)** । स्त्री। शरपुङ्खायाम् । বন নীল । हिं शरफोंका । रा.नि.व.४ ।

**इष्टः** । पुं । एरण्डवृक्षे । श.च. । क्ली । संस्कारे । श.टी.भ. ।

**इष्टका** । स्त्री । गृहादिनिर्माणार्थदग्धमृत्खण्डे । इँट । संग्रहे । [ ] ইট । রা.নি.ব.१२ ।

**इष्टकापथम्** । क्ली । लामज्जके, वीरणमूले ।

**इष्ट(ष्टि)कापथकम्** । क्ली । लामज्जके । भा. पृ.१भ. । मद.व.३ । [लुके । मे.धचतुष्कं ।

**इष्टगन्धः** । त्रि । सुगन्धौ । अम. । क्ली । बा-

**इष्टा** । स्त्री । शमीवृचे । रा.नि.व.८ ।

**इक्षवः** । पुं । इक्षुसाधारणे । श.र. ।

**इक्षुः** । पुं । Sugarcane. (Saccharum officinarum.) स्वनामख्यातमधुरवृचे । আক গাছ । हिं गाण्डा, ऊख् । तें चेरुकु । ता.ऊंस् । स बादशविधः—पौण्ड्रकः, भीरुकः, वंशकः, शतपारकः, कान्तारः, तापसेक्षुः (काण्डेक्षुः), काष्ठेक्षुः, सूचिपत्रकः, नैपालः, दीर्घपत्रकः, नीलकः, कोशकृदिति । भा.पृ.२भ. । श्वेतपुण्ड्रकरक्तक्षरक्त-भेदात्त्रिधा । रा.नि.व.१४ । स वर्णतः षड्भेदः, श्वेतकृष्णताम्ररसालेषत्कृष्णमिश्रवर्ण इति । स च पौण्ड्रकानुवासिकशतपर्वकान्तारनैपालदीर्घपत्रादि-भेदाद्बहुविधः । वा.टी.हेमा. । एतद्विशेषास्तत्त-त्पर्याये द्रष्टव्याः । अस्य गुणाः—"इक्षुदण्डो रसे पाके मधुरो वातकारकः । स्निग्धो गुरुर्मूत्रलश्च शीतो वृष्यो बलप्रदः । कफपुष्टिप्रदः क्रिमिकान्त्यानन्दकरः सरः । रक्तवातपित्तानां नाशनो मुनिभिः स्मृतः॥" वै.निघ. । "अभुक्ते पित्तहाश्चैते भुक्ते वातप्रकोपनाः । भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रयः ॥ पित्त-दाहहरो हृद्यश्लेष्मबलविवर्द्धनः । हृद्यो रक्तास्रपि-त्तशमनपटुः शीतलः श्लेष्मदोऽत्यस्निग्धो हृद्यश्च वृष्यो रचयति च मुदं मूत्रशुद्धिं विधत्ते । कान्तिं देहस्य दत्ते बलमतिकुरुते हृद्यः स्निग्धदायी दन्तै-र्निष्पीड्य काण्डं मृदुयति रसितो मोहनश्चेक्षु-दण्डः॥" रा.नि.व.१४ । इक्षुः मूले मध्ये च मधुरः, अग्रे ग्रन्थौ च लवणरसः । बालेक्षुः कफ-कारी मेदोमेहकरश्च । युवा च वातघ्नः स्वादुः पि-त्तघ्नः ईषत्तीक्ष्णश्च । भा.राज. । मूलादूर्ध्वं मधुरा मध्येऽतिमधुरास्तथा । इक्षवस्तेऽग्रभागेषु क्रमाल्लवण-नीरसाः । इति क्षुद्रदण्डमूलमध्याग्रगुणाः । रा.नि. व.१४ कोकिलाक्षवृचे । কুলেখাড়া । रा.नि.व.४ ।

**इक्षुकः** । पुं । इक्षौ । इक्षुगन्धायां । काशतृणे । भूमिकुष्माण्डे । काकोल्यां । वै.निघ. ।

**इक्षुकाण्डिका** । स्त्री । इक्षुकाण्डे । काकोल्यां । भूमिकुष्माण्डे । वै.निघ. । वा.टी. हेमा. ।

**इक्षुकन्दा** । स्त्री । श्वेतभूमिकुष्माण्डे । वै.निघ. ।

**इक्षुकाण्डः** । पुं । काशतृणे । কেশে । रा.नि. व.८ । मुञ्जायाम् । শরমাঙ্গা । श.च. ।

**इक्षुकाशः** । पुं । काशतृणे । मद.व.१ ।

**इक्षुकीयः** । त्रि । इक्षुयुक्तदेशे ।

**इक्षुगण्डिका** । स्त्री । काशतृणे । वै.निघ. ।

**इक्षुगन्धः** । पुं । काशतृणे । भा. । क्षुद्रगोक्षुर-कवृचे । रा.नि.व.४ ।

**इक्षुगन्धा (न्धिका)** । स्त्री । कोकिलाक्षे । কুলেখাড়া । मद.व.१, मे. । गोक्षुरके । प.मु.भा. । क्षीरविदार्य्याम् । ভুঁইকুমড়া । मद.व.१ श.र., रा नि.व.७। वाराहीकन्दे, काशतृणे । भा.पृ.१भ., मे. । शृगाल्याम् । भा.अने. । मे.धचतुष्कं । श्वेत-भूमिकुष्माण्डे । अम.मे. । भूमिकुष्माण्डे । श.र. ।

**इक्षुजटा** । स्त्री । इक्षुमूले । चि.क.क.प्रदरचि. ।

**इक्षुतुल्या** । स्त्री । इक्षुवालिकायां । আনাথ, ইক্ষুবিশেষ, খাগড়া । प.मु. । काशतृणे । र.मा. । यावनाले । যোওয়ার, যনার ।

**इक्षुदर्भा** । स्त्री । स्वनामख्याततृणविशेषे । न-टा । मं चाश्वालु । गुणाः—मधुरा स्निग्धा ईषत्क-षाया कफपित्तघ्नी रुच्या लघुः सन्तर्पणी च । रा. नि.व.८ ।

**इक्षुनेत्रम्** । क्ली । इक्षुमूले । येनेक्षुः पुनरुत्पद्य-ते । আকের মূল, আকের ডগা বা চোক । रा.नि.व.१४ ।

**इक्षुपत्रः (कः)** । पुं । यावनाल इति शिम्बी-धान्ये । জোয়ারা इति लोके । रा.नि.व.१६ ।

**इक्षुपत्री (र्णी)** । स्त्री । वचायां । शुक्लभूमि-कुष्माण्डे । वै.निघ. ।

**इक्षुपाकः** । पुं । गुडे ।

**इक्षुपुष्पा** । स्त्री । शरपुङ्खायाम् । रा.नि.व.४ ।

**इक्षुरः** । पुं । शरतृणे । रा.नि.व.८ ।

**इक्षुवालिका** । स्त्री । खागडिकायां । খাগ-ড়া । रा.नि.व.८, च.मू.४अ.शूल चि. । कोकिलाक्षे ।

कु:लेथाड़ा। हिं तालमाखना। भा.पू.१भ.। मद.व.१। इक्षुतुल्यायाम्। र.मा.। काशतृणे। रा.नि.व.८।

**इक्षुभक्षिका**। स्त्री। इक्षुरसनिष्काशनयन्त्रे। आक् माड़ा कल। वै.निघ.।

**इक्षुमद्यम्**। क्ली। इक्षुविकारजमद्ये। "इक्षुदक्षं मरीचञ्च बदरञ्च तथा दधि। शेषे तु लवणं दत्त्वा इक्षुमद्यं प्रकीर्त्तितम्॥" वै.निघ.।

**इक्षुमूलम्**। क्ली। इक्षोर्मूले। आकेर मूल। राज.। च.सू.४अ.।

**इक्षुमेदः**। पुं। इक्षुवाटिकायां। आकवाड़ी।

**इक्षुमेहः**। पुं। तन्नामककफजमूत्रदोषविशेषे। लक्षणं—"इक्षोरसमिवात्यर्थं मधुरञ्चेक्षुमेहतः।" मा.नि.। [मिचौ। अयं पुण्ड्रकभेदः। रा.नि.व.१४।

**इक्षुयोनिः**। पुं। पुण्ड्रकेक्षौ। कारङ्कशालिना-

**इक्षुरः (कः)**। पुं। कोकिलाक्षे। कुलेथाड़ा। हिं तालमाखना। र.मा.भा.उ.ख.। "द्राक्षा सेक्षुरगोक्षुराश्च महती।" अत्र तद्वीजं ग्राह्यम्। सा.कौ.महाकामेश्वरमोदके। च.सू.४अ.। इक्षौ। गोक्षुरके। श.र.। कासतृणे। (केसे)। स्थूलशरे। रा.नि.व.८। "क्षयकृन्नेक्षुरकयोः।" सु.चि.२६अ.। भा.म.१भ.सू.घा.चि.। शरतृणे। काशतृणे। रा.नि.व.८। कृष्णेक्षौ। रा.नि.व.१४। [ध्व.भ.चि.।

**इक्षुरवीजम्**। क्ली। कोकिलाक्षवीजे। भैष.।

**इक्षुरसः**। पुं। कासतृणे। भा.पू.१भ.गु.व.। इक्षोःरसे। आकेर रस। तद्गुणाः—स मधुरः वातं वर्द्धयति शीतवीर्य्यत्वात् सु.सू.४०अ.। "इक्षो रसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत्। वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसः सरः।" चारपाणिः। एतदग्रभागरसगुणाः—"सोऽग्रे सलवणः। मध्यकाण्डेषु माधुर्य्यमिक्षोर्मूलाग्रपर्व्वसु। माधुर्य्ये साम्ललवणं विदाही तेन यान्त्रिकः।" हेमाद्रौ.चारपाणिः। दन्तपीड़ितरसगुणाः—दन्तपीड़ितः शर्करासमः दाहघ्नत्वादिभिर्गुणैः। वा.टी.हेमा.। यन्त्रपीड़ितरसगुणाः—"विदाही गुरुर्विष्टम्भी च।" वा.टी.हेमा.। "यन्त्रेण पीड़ितरसः कथितो गुरुश्च वृष्यः कफश्च कुरुतेऽथ सुशीतलश्च। पाकी विदाहिमलश्च सुगोभनश्च संसेवितो रुधिरपित्तकरं निहन्ति॥ दन्तैर्निपीडितरसो रुचिकृच्च सन्तर्पणो बलकरः कफकृत्क्रमघ्नः। निष्टम्भकारिरुधिरस्य तथैव पित्तदोषं निहन्ति सकलं वमनञ्च शोषम्॥" अथ पर्य्युषितरसगुणाः—रसः पर्य्युषितो नेष्टस्त्वम्लत्वमेति गुरुः। कफपित्तकरः शोषी भेदनो वाथ मूत्रलः॥ अथ पक्करसगुणाः—पक्को गुरुरसः स्निग्धः सुतीक्ष्णः कफवातहा। पित्तघ्नोऽपि विशेषेण गुल्मातीसारकासहा॥ अथ फाणितरसगुणाः—फाणितं गुर्व्वभिष्यन्दि बृंहणं गुरुकलञ्च तत्। पित्तघ्नञ्च श्रमहरं रक्तदोषनिसूदनं॥" अत्रि.१०अ.। पीयूषोपमितस्त्रिदोषशमनः शाल्यन्तनिष्पीड़ितः। यन्त्रजो रसः शीतः वातनिहरः वातजननः आध्मकरः प्रतिश्यायकरश्च। तथा पर्य्युषितः स कफवातकरश्च भवति। पक्क इक्षुरसः स्निग्धः कफवातघ्नः अतिगुरुः अविपाकेन विदाही। रा.नि.व.१४।

**इक्षुरसक्वाथः**। पुं। इक्षुगुड़े। हे.च.।

**इक्षुरसविकारः**। पुं। इक्षुगुड़े। इक्षुरसस्य समलत्वं शार्ङ्गीक्रिमलविकार फाणितगुड़मत्स्यण्डिकाशर्कराभेदात्पञ्चविधः। गुणाः—"उत्तरोत्तरहिता वृष्या रक्तपित्तानिलापहाः। मत्स्यण्डिका खण्डसिताः क्रमेण गुणवत्तराः॥" वा.टी.हेमा.।

**इक्षुरसशुक्तम्**। क्ली। इक्षुरसेन सतैलेन कन्दशाकफलैराश्रितमम्लतां गतमिक्षुरसशुक्तम्। १ख.। गुणाः—गुरु अनभिष्यन्दि च। सु.सू.४५अ.।

**इक्षुरालिका**। स्त्री। इक्षालिकायाम्। आनाथ्। रत्ना.। च.चि.२अ.बृंहणीयच्यां।

**इक्षुवल्लकी (री) (ल्ली)**। स्त्री। क्षणक्षीरविदार्य्याम्। काल भूँइकुमड़ा। रा.नि.व.७।

**इक्षुवाटिका (टी)**। स्त्री। पुण्ड्रकेक्षौ। पूँड़ि आख। कारङ्कशालीक्षौ। रा.नि.व.१४।

**इक्षुविकृतिः**। स्त्री। खण्डे। थाँड़। रत्ना.।

**इक्षुविदारिका (री)**। स्त्री। भूमिकुष्माण्डे। [गु.व.। प.मु.।

**इक्षुवेष्टः (लः)**। पुं। मुञ्जतृणे। भा.पू.१भ.

**इक्षुशाकट (किन)म्**। क्ली। इक्षुक्षेत्रे।

**इक्षुसारः**। पुं। इक्षुगुड़े। आखेर गुड़। रा.नि.व.१८।

रूरक(वीज)म् । क्ली । कोकिलाक्षवीजे । कुलियाखाड़ार वीज । योगरत्न.केशरपाके म-
हाकामेश्वरमोदके च ।

क्ष्वाकुः । स्त्री । A bitter gourd emi-
c. तिक्ततुम्ब्याम् । তিৎলাউ । प.मु.सु.सू.४२
.। भा.म.४भ.यो.व्या.चि. । 'इक्ष्वाकुवीजदन्ती ।'
See कटुतुम्बी ।

क्ष्वादः । त्रि । इक्षुभक्षके । च.चि.२अ. ।

इक्ष्वारिः (कः) । पुं । काशतृणे । रा.नि.व.
८ मद.व.१ ।

इक्ष्वालिः (कः)(का) । पुं,स्त्री । काशतृणे ।
मद.व.१। र.मा.। वै.निघ.कास.चि.इक्ष्वाद्यवलेहे ।
इक्षुविशेषे । আনাখু, খাগড়া इति केचित् ।
वनखड़िकायां । च.द.तथा.सि.यो.यक्ष्म.चि.व्या-
ख्यते । 'इक्ष्वालिका विषग्रन्थि ।'

—•—

## ई

ज्या । स्त्री । भूमौ । गवि । वै.निघ. ।

ड़ा । स्त्री । नाड्याम् । নাড়ীবিশেষ ।

शा । स्त्री । भूम्यामलक्याम् । वै.निघ.ज्व.चि. ।
"शीपीड्यामलकी ।"

ईतिः । स्त्री । डिम्बे । मे. । राज्योपद्रवविशेषे ।
सा षड्विधा—अतिवृष्टिरनावृष्टिः शलभा मूषिकाः
शुकाः । अत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥

ईप्सितफलः । पुं । नारिकेलवृक्षे । वै.निघ. ।

ईरिणम् । क्ली । ऊषरक्षेत्रे । লোণা জায়গা ।
"ईरिणं तूषरं ।" मे.णत्रिकं ।

ईरितः । त्रि । कम्पिते । क्षिप्ते । अम. ।

ईर्म्मम् । क्ली । व्रणे । हारा. । क्षते । घा । अम. ।

ईर्व्वारुः । पुं,स्त्री । कर्कव्याम् । কাঁকুড় গাছ ।
शुच्याम् । फुटी । श.र. ।

ईर्व्वारुशुक्तिका । स्त्री । खर्मूज इति प्रसिद्ध-
फललतायाम् । वै.निघ. ।

ईर्ष्यकः । पुं । दृष्टियोन्याख्यक्लीवे । लक्षणं—"दृ-
ष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स
तु विज्ञेयो दृष्टियोनिश्च स स्मृतः ॥" सु. ।

ईशः । पुं । पारदे । अञ्जनरसे । र.सा.सं. । प-
ञ्चवक्त्ररसे । वै.निघ.ज्व.चि. ।

ईशलिङ्गिनी (ङ्गी) । स्त्री । भवलिङ्गीलता-
यां । पञ्चगुरिज इति पाश्चात्ये । भा.म.४भ.यो.व्या.
चि. । "विषुकान्तेशलिङ्गिनी ।"

ईशा । स्त्री । लाङ्गलदण्डे । मे.शत्रिकं ।

ईशादन्तः । पुं । हस्तिदन्ते । श.र. । (न्तः,न्ती)
उद्गतदन्तिनि । हे.च. । त्रिका. ।

ईशानः । पुं । शमीवृक्षे । रा.नि.व.२३ ।

ईशानवायुः । पुं । तद्दिग्भववाते । स च क-
टुकः । वै.निघ. ।

ईशाना (नी) । स्त्री । शमीवृक्षे । रा.नि.व.८ ।

ईशावसः । पुं । कर्पूरभेदे । गुणाः—"भेदी ल-
घ्वी मदापहः । अतिशुभोन्मादतृषाश्रमकासकृमि-
क्षयान् । स्वेदश्चैवाङ्गदाहञ्च नाशयेत् ।" वै.निघ. ।

ईशिरः । पुं । अग्नौ । त्रिका. ।

ईश्वरः । पुं । पारदे । भैष.ध्व.भ.चि.चन्द्रोद.
मकरध्वजे । पिप्पली । रस.र.एकादशायसे ।

ईश्वरमल्लिका । स्त्री । वकवृक्षे । वै.निघ. ।

ईश्वरमूलकः । पुं,क्ली । तरुभेदे । ঈশের মূল ।
भैष.कुष्ठ-चि.कन्दर्पसारतैले ।

ईश्वरी । स्त्री । वन्ध्याकर्कोटकीलतायाम् । वै.
निघ.२भ.वा.व्या.महाविषगर्भतैले । लिङ्गिन्याम् ।
जीवन्त्याम् । नागदमन्याम् । नाकुलीकन्दे । रुद्र-
जटायाम् । জটালক্ষা । रा.नि.व.३ ।

ईषः । पुं । आश्विने मासि । अ.टी.भ. ।

ईषत्पाण्डुः । पुं । धूसरवर्णे । अम. ।

ईषदुष्णः । त्रि । कवोष्णे । অল্প তপ্ত । हे.च. ।
वै.निघ. । [वै.निघ. ।

ईषद्दीर्घम् । क्ली । वातामफले । বাদাম ফল ।

**ईषद्बीजा** । स्त्री । वेदाना इति ख्यातफलवृक्षे ।
**ईषादन्तः** । पुं । दीर्घदन्तगजे । हे.च. ।
**ईषिका** । स्त्री । अक्षिकूटे । गजाक्षिगोलके । तूलिकायाम् । हे.च. ।
**ईषिकास्त्रम्** । क्ली । अस्त्रविशेषे । येन वासवीऽश्वानां पक्षच्छेदः कृतः। "ईषिकास्त्रं समुत्सृज्य पक्षच्छेदं व्यधादयम्।" नकुलः १४. ।
**ईषीका** । स्त्री । वीरणादिशलाकायाम् ।
**ईषः** । पुं । वसन्तकाले । उणा. ।
**ईहा** । स्त्री । चेष्टायां । वाञ्छायां । त्रिका. ।
**ईहामृगः (वृकः)** । पुं । कोके । रत्ना. । कुकुरवद्धरिणघातिकपिलवर्णजन्तुविशेषे । घोग । रा.नि.व.१८। (वृकः) । अ.र. ।
**ईक्षणम्** । क्ली । नेत्रे । रा.नि.व.१८ । दर्शने । मे.त्रिकं ।
**ईक्षणिकः** । पुं, स्त्री । हस्तरेखाद्यवलोकनेन शुभाशुभकथनजीविनि । गणक ।
**ईचा** । स्त्री । इष्टौ ।

## उ

**उकनाहः** । पुं । पीतरक्तवर्णघोटके । हे.च.। लक्षणं —"रक्तपीतकषायाख्यवर्णजो यस्य दृश्यते । उकनाहः स विख्यातो वर्णो वाहस्य देहजः॥" ज.द.३४. ।
**उकुणः** । पुं । शिरःकीटे । माथार उकुन ।
**उक्लेदः** । पुं । वर्मी ।
**उख(ष)रम्** । क्ली। क्षारभूमौ । यत्रोप्तं बीजं न रोहति । क्षारमृत्तिकायाम् । सोरा । वै.निघ. । रा.नि.व.२ ।
**उख(ष)रजम्** । क्ली । पांशुलवणे । सोरा । रोमकनाम्नि अयस्कान्तभेदे । लवणे । रा.नि व.२०।
**उखर्व्वलः** । पुं । तृणविशेषे । हिं उखल । गुणाः— बलदः रुचिजनकः । पशूनां सदा हितश्च । रा.नि.व.८ ।
**उखलः** । पुं । उखर्व्वलतृणे । रा.नि.व.८ ।
**उखा** । स्त्री । रन्धनस्थाल्याम् । राँधिवार हाँड़ी । हिं भरथियाभाड़ । अम.। काबाव । अम. ।
**उख्यः** । त्रि। उखासंस्कृते,मांसादौ । हिं हाण्डि-
**उग्रम्** । क्ली । वत्सनाभनामकविषे । रा नि.व.६। पुं। शोभाञ्जनवृक्षे । श.च.। पृश्निपर्ण्यौ । त्रि । उत्कटे । कटुके । तीक्ष्णे । रौद्रे । मे. ।
**उग्रकाण्डः (ण्ड:)** । पुं । कारवेल्लके । करेला गाछ । रा.नि.व.३,मद.व.७। काण्डवल्ल्यां । See काण्डवल्ली ।
**उग्रगन्धः** । पुं । शुक्लरसोने । रा.नि.व.७। कट्फलवृक्षे । रा.नि.व.६ । रक्तरसोने । अर्जकवृक्षे, क्षुद्रतुलसीवृक्षे । रा.नि.व.१०। रसोनमात्रे । भा.पू.१भ.ह.व. । चम्पकवृक्षे । श.च. । क्ली । हिङ्गुनि । रा.नि.व.६ । त्रि । उत्कटगन्धयुक्ते ।
**उग्रगन्धा (न्धिका) (न्धी)** । स्त्री । वनयमान्याम् । वनयओयान । भा.पू.१भ.,मद.व.२ । अजमोदायाम् । राँधुनी । भा.पू.१भ.। वचायां। वच । प.मु.,रा.नि.व.६,भा.अने.,वै.निघ.सा.ज्व. अर्कादौ । महाभरीवचायाम् । हिं कुलिञ्जन । भा.पू.१भ.ह.व. । इयं सुगन्धवचाप्युच्यते । छिक्किकायां । हेँचेता । मे. । अजगन्धायां । रा.नि.व.४ । (-गन्धिका) अजमोदायां । वन यओयान । रा नि.व.६। सि.यो.यक्ष्मा-चि.एलादिमन्थे । (-गन्धी) शुक्लरसोने । मद.व.७ । [हे.च. ।
**उग्रनासिकः** । त्रि । दीर्घनासिके । नेको।
**उग्रपन्नकः** । पुं । महानील्याम् । वै.निघ. ।
**उग्रभा** । स्त्री । गोपसवल्ल्याम् । वै.निघ. ।
**उग्रवीर्य्यम्** । क्ली । हिङ्गुनि । रा.नि.व.६ ।
**उग्रा** । स्त्री । धन्याके । धने । रत्ना. । यमान्यां । रा.नि.व.४ । संविदामञ्जर्याम् । गाँजा । अचि. । वचायाम् । भा.म.१भ.कर्णकज्व.चि.। "कटुत्रिकीवाघनकुष्ठलोभिः।" वै.निघ.उ.चि.वचादिचूर्णे, कुटजलेहे । छिक्किकायाम् । हेँचेता । हे.च. ।
**उकुणः** । पुं । उत्कुणे । उकुन । श.मा. ।

**उचितः** । त्रि । अभ्यस्ते । परिमिते । मे.तत्रिकं ।

**उच्चः** । पुं । नारिकेलवृक्षे । रा.नि.व.११ । सरलदेवदारौ । त्रि । उन्नते ।

**उच्चटः** । पुं । वङ्गे । वै.निघ. ।

**उच्चटा** । स्त्री । (Abrus precatorius.) स्वनामख्यातक्षुपे । ওকড়া,উচ্চটে মূল,কুঁচ গাছ इति च प्रसिद्धे । तें गुड़गमुले । रत्ना. । महाभल्लातकगुड़े । लशुनभेदे । हे.च.सु.चि.२६अ. । रक्तगुञ्जायाम् । रा.नि.व.३,वै.निघ.२भ.वय त्रि. इत्यादिमोदके । भूधात्र्याम् । ভুঁই আমলা । रा.नि.व.५ । नागरमुस्तायाम् । रा.नि.व.६ । श्वेतगुञ्जायां । "श्वेतगुञ्जोच्चटा प्रोक्ता ।" भा.म १भ. ग.व. । तृणविशेषे । निर्विषी বা চেঁচুয়া । अ. टी.भ. । [क्ली । चिञ्चोटकपत्रे ।

**उच्चटापत्रः** । पुं । क्षुद्रतालीशपत्रे । वै.निघ. ।

**उच्चटाफलम्** । क्ली । रक्तगुञ्जायां । লালকুঁচ, ওকড়া ফল । भैष.कुष्ठ-चि.महाभल्लातकगुड़े ।

**उच्चटामूलम्** । क्ली । चिञ्चोटकमूले । চেঁচকোর মূল, ওকড়ার মূল । सु.चि.२६अ. ।

**उच्चतरुः** । पुं । नारिकेलवृक्षे । रा.नि.व.११ ।

**उच्चन्द्रः** । पुं । निशाचतुर्थप्रहरे । श.र. ।

**उच्चयः** । पुं । परिधानवस्त्रग्रन्थौ । हे.च.। राशौ।

**उच्चलम्** । क्ली । मनसि । हे.च. ।

**उच्चललाटा (टिका)** । स्त्री । मकरन्दायां । हारा. । उच्चललाटविशिष्टायाम् । चिका. ।

**उच्चाटनम्** । क्ली । उत्खातने । উদাসকরণ । षट्कर्म्मान्तर्गताभिचारकर्म्मविशेषे । तन्त्रम् ।

**उच्चारः** । पुं । विष्ठायाम् । रत्ना. ।

**उच्चिङ्गटः** । पुं । उच्चिटिङ्गनामकीटे । উচ্চিংড়ে । इषगड़मत्स्ये । मे.टचतुष्कं ।

**उच्चिटिङ्गः** । पुं । A sort of cricket. उच्चिङ्गटे । উচ্চিংড়ে । रा.नि.व.१९ । वातप्रकृतिकीटविशेषे । लक्षणम्—"हृष्टलोमोच्चिटिङ्गेन सब्धलिङ्गो भृशार्त्तिमान् । दष्टः शीतोदकेनैव सिक्तान्यङ्गानि मन्यते ॥" तद्दष्टे वातजन्यरोगा भवन्ति । सु.कल्प,८अ. ।

**उच्चूलः** । पुं । ध्वजोर्द्ध्वमुखकूर्च्चे । हे.च. ।

**उच्चैःश्रवाः** । त्रि । वधिरे । पुं । घोटकभेदे ।

**उच्छादनम्** । क्ली । गन्धद्रव्येण शरीरमार्ज्जने । अ.टी. । [क छाती । भागवते ।

**उच्छिलीन्ध्रम्** । क्ली । गोमयच्छत्राके । কোঁড়-

**उच्छिष्टमोदनम्** । क्ली । सिक्थके।रा.नि.व.।

**उच्छीर्षकम्** । क्ली । उपधाने । তাকিয়া । इला. । पुं । शय्यादोषविशेषे । सु.चि.२६अ. ।

**उच्छूनः** । त्रि । स्फीते । वर्द्धिते ।

**उच्छेदः** । पुं । उन्मूलने ।

**उच्छ्र(च्छ्रा)यः** । पुं । उन्नतायां । अम. ।

**उच्छ्रितः** । पुं । सरलदेवदारुवृक्षे । वै.निघ. ।

**उच्छ्वसितः** । त्रि । प्रफुल्ले, विकसिते । हे.च. ।

**उच्छ्वासः** । पुं । प्राणने । मे.सत्रिकं । अन्तर्मुखश्वासे । हे.च. ।

**उज्जासनम्** । क्ली । मारणे । अम. । [म. ।

**उज्जृम्भितः** । त्रि । प्रफुल्ले । क्ली। चेष्टायां । अ-

**उज्ज्वल(न)म्** । क्ली । सुवर्णे । रा.नि.व.१३ । पुं । धान्यभेदे । च. । [त्रि. ।

**उज्ज्वला** । स्त्री । क्रुमरिचे । লঙ্কামরিচ । अ-

**उज्झटा** । स्त्री। भूम्यामलक्यां । ভুঁই আমলা।

**उञ्छः** । पुं । उञ्छशिले । जटा. ।

**उटः** । पुं । शुष्कतृणे । वै.निघ. । [वै.निघ. ।

**उटजा** । स्त्री । पानीयशालायां । पर्णशालायां।

**उटिः(ड़िः)का** । पुं,स्त्री। नीवारधान्ये । উড়িধান । मद.व.१० । गुणाः—"उड़िका तत्र कथिता बल्या श्लेष्मविवर्द्धनी ।" राज. ।

**उट्टङ्कम्** । क्ली । मूत्रे । अस्त्रभेदे ।

**उडु** । क्ली । उदके । अ.टी.भ. ।

**उडुपतिः** । पुं । सोमलताभेदे । सु.चि.२९अ. । See सोम । चन्द्रे । [ड़ । मद.व.३ ।

**उडुपप्रिया** । स्त्री । कमलिन्यां । পদ্মের ঝা-

**उडुम्बरः** । पुं, क्ली । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । अम. । कुष्ठरोगविशेषे । मे. । लक्षणम्—

"उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत् ॥" मा. नि.। ताम्रे। प.मु.। कर्षमाने (२ तो.)। प.प्र.।

**उडुम्बरदला।** स्त्री। दन्तीवृत्ते। रा.नि.व.६।

**उडुम्बरपर्णी।** स्त्री। दन्तीवृत्ते। श.च.।

**उड्डामररसः।** पुं। पित्तगुल्माधिकारे रसः। पाठः—"शुद्धसूतं समं गन्धं सूतांशं मृततामकं। पञ्चांशं शाकवृक्षस्य द्रवैर्मर्द्यं दिनद्वयम्। सर्पाख्यो-त्थैर्द्रवैश्चापि कृत्वा गजपुटे पचेत्। पश्चात् भूधरे पाच्य चूर्णं जैपालतुल्यकं। त्रिगुञ्जं भक्षयेच्चाज्यैः पित्तगुल्मप्रशान्तये। द्राक्षाहरीतकीक्वाथमनुपानं प्रकल्पयेत् ॥" रस.र.गुल्म चि.। পারা ১ ভ. গন্ধক ১ ভ. তাম্র ।॰ সিকি ভ.। শেগুন বা শিরীষ এবং নাগেশ্বরের রস মর্দ্দনীয় দ্রব্যের পঞ্চমাংশ দ্বারা দুই দিন মর্দ্দনপূর্ব্বক গজপুটে ভূধরযন্ত্রে পাক করিয়া দিবাভাগে চূর্ণ কর। শীতল হইলে পরে ঔষধ সমভাগ জয়পাল চূর্ণের সহিত মিশ্রিত করিয়া ৩ কুঁচ ঘৃতে মাড়িয়া সেবন করিবে।

**उड्रः(पुष्पः)।** पुं, क्ली। जवापुष्पवृत्ते। जवापुष्पे। वै.निघ.। [চীনদেশীয় গোলাপ। Wil.

**उड्रः।** पुं, क्ली। जपापुष्पवृत्ते। जवापुष्पे। জবা,

**उण्डुकः।** पुं। मलाशये। सु.शा.५अ.। स चा न्नाशयस्थः शोणितकिट्टप्रभवः। सु.शा.४अ.। "फुफ्फुसस्यात्रणौ द्वे ऊर्द्ध्वतलद्वयं तयोः। उण्डुकः शैशवे मध्ये मध्याह्ने मङ्गतां न हि॥" अत्रि.।

**उत्कटः।** पुं। (Sachharum sara.) शरकाण्डे। শর গাছ। रा.नि.व.८। क्षुद्रक्षुपविशेषे। ওকড়া, কালিয়াবিষর। प.मु.। इक्षौ। रक्तेक्षौ। रा.नि.व.१४। मदे। श.र.,भैष.नै.रो.चि.। मत्तहस्तिनि। ह्वारा.। क्ली। Woody cassia or its bark. त्वग्भेदे। लताविशेषे। শালসা। Wil. गुड़त्वचि.। দারচিনি। प.मु.,रा.नि.व.६, ह्वारा.। गन्धकुसुमे। ह्वारा.। तेजपत्रे। श.टी. भ.। त्रि। उत्ताले। तीव्रे।

**उत्कटा।** स्त्री। सिंहलीपिप्पल्याम्। বন পিপুল। हिं सेतपुष्पी। मं रानपिंपलि, उटकटारा। गुणाः—"सैंहली कटुकोष्णा च जन्तुघ्नी दीपनी परा। कफश्वाससमीरार्त्तिशमनी कोष्ठशोधनी॥" रा.नि.व.६। "उत्कटा रुचिदा चोष्णा तिक्ता तथाप्युदाहृता। मूत्रकृच्छ्रं पित्तवातं मेहं तृष्णाञ्च हृद्गुजं। विस्फोटकं नाशयति बीजमस्यास्तु शीतलं। वृष्यं तृप्तिकरञ्चैव मधुरञ्च प्रकीर्त्तितम्॥" वै.निघ.। [निरासनक्षितौ। सु.चि.६अ.।

**उत्कटा(टुका)सनम्।** क्ली। कठिनासने।

**उत्कण्टकम्।** क्ली। ওকড়া ইতি খ্যাতে वृक्षभेदे। च.चि.१अ.। [यां। श्रम.।

**उत्कण्ठा।** स्त्री। इष्टलाभे कालक्षेपासहिष्णुता

**उत्कता।** स्त्री। (Pothos officinalis.) गजपिप्पल्याम्। श.च.। उत्कण्ठायाम्।

**उत्करः।** पुं। रक्तेक्षौ। রক্ত ইক্ষু। रा.नि.व. १४। धान्यादिराशौ। अम.। उत्कारिकायाम्। পুল্টিশ্। भैष.शूल.चि.।

**उत्कर्णः।** पुं। वायुजन्याश्वरोगे। अत्राश्वस्य कर्णपुच्छमात्राणि स्तब्धीभवन्ति। "कर्णौ स्तब्धौ तथा पुच्छं स्तब्धं गात्रमकिञ्चनं। वातात्मकेन वाहस्य भवेदुत्कर्णकेन हि॥" ज.द.५४अ.।

**उत्कर्षणम्।** क्ली। अधोगतस्य ऊर्द्ध्वाकर्षणे। सु. चि.१५अ.। [कलिकायाम्। কুঁড়ি। त्रिका.।

**उत्कलिका।** स्त्री। उत्कण्ठायाम्। ह्वारा.।

**उत्काका।** स्त्री। प्रतिवर्षप्रसूतायां गवि। श.च.।

**उत्कारिका।** स्त्री। रोटिकायां। রুটী। वा. टी.हेमा.। यवमाषैरण्डबीजातसीकुसुम्भबीजादिभिः पिष्टस्विन्नैः पिण्डिकाकृतिर्यः स्वेदनोपायः स उत्कारिका। পুল্টিশ। अरुणः,वा.सू.१७अ.। गुटिकायाम्। বড়ি। सु.चि.२६अ.। लप्सिकायां। কাই, মোহনভোগ। सु.चि.१४अ.। [च.द.यक्ष्म.चि.।

**उत्कासः(नम्)।** पुं,क्ली। कासे। উৎকাসি।

**उत्कुञ्चिः(का)।** पुं, स्त्री। (Nigela indica.) स्थूलकृष्णजीरके। মোটা কৃষ্ণজীরে। रत्ना.। कुलिञ्जनवृत्ते। মহাভরী বচ।

**उत्कुटम्।** क्ली। उत्तानशयने। চিৎ হইয়া শয়ন। ह्वारा.।

**उत्कुणः।** पुं। केशकीटे। উকুণ। हे.च.।

**उत्कूटः।** पुं। उच्छवारके। ह्वारा.।

**उत्कोठः** । पुं । कोठरोगभेदे । तल्लक्षणं यथा — "असम्यग्वमनोदीर्णपित्तश्लेष्मान्निग्रहैः । मण्डलानि सकण्डूनि रागवन्ति बहूनि च । सानुबन्धस्तु स प्रोक्तैरुत्कोठ इति कथ्यते ।" भा.म.४भ.शी.पि.चि. ।

**उत्क्रोशः** । पुं । पेचके । वै.निघ. । मत्स्यघातिपक्षिणि । माछराङा पाखी । रत्ना. । गुणाः — रक्तपित्तघ्नः शीतलः स्निग्धः वृष्यः वातकरः रसे पाके च मधुरः । सु.सू.४६अ. । कुररपक्षिणि । कर्कटे पाखी । हला. । [See क्लिष्टवर्त्म ।

**उत्क्लिष्टवर्त्म** । क्ली । क्लिष्टवर्त्मनामरोगविशेषे ।

**उत्क्लेशः (दः)** । पुं । शरीरस्थदोषस्य उपस्थितवमनत्वमिव । वमनेच्छायां । च.द.ज्व.चि. । "उत्क्लेशश्चोपशाम्यति ।" वमनोपस्थितिरिव । भा.म.१भ.ज्व.चि । "गौरवं शीतमुत्क्लेशः ।" "उत्क्लिश्यमानं न निगच्छेत्प्रसेकष्ठीवनेरितं । हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥" सु.शा.४अ. ।

**उत्क्लेशकः** । पुं । अग्निप्रकृतिकीटविशेषे । तेन दष्टे पित्तजन्यरोगा भवन्ति । सु.कल्प.८अ. ।

**उत्क्लेशनवस्तिः** । पुं, स्त्री । वस्तिभेदे । यः पूर्व्वम् एरण्डवीजादिकल्केन उत्क्लेशनार्थं दीयते । "दद्यादुत्क्लेशनं पूर्व्वम् — एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा । हवुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः ॥" वै.निघ.वस्तिविधिः । [श.च. ।

**उत्खला** । स्त्री । मुराख्यगन्धद्रव्ये । मुरामांसी ।

**उत्तः** । त्रि । आर्द्रद्रव्ये । भिजा द्रव्य । अम. ।

**उत्तप्तम्** । क्ली । शुष्कमांसे । त्रि । तप्ते । स्नाते । मे. ।

**उत्तमः** । त्रि । उत्कृष्टे । पुं । अश्वविशेषे । लक्षणं — "अश्वन्याश्च महासाराः संग्रामे चैव पूजिताः । अपि शस्त्रहताङ्गाश्च नैव मुञ्चन्ति सादिनं ॥" अ.द.३अ. ।

**उत्तमफलिनी** । स्त्री । (Aclepias rasca.) दुग्धिकायाम् । छोट थिकड़ि । प.मु. ।

**उत्तमवारि** । क्ली । तण्डुलोदके । च.द.मधुकादौ । उत्कृष्टजले ।

**उत्तमवैद्यः** । पुं । कृतसाङ्गवेदाध्ययने वैद्ये ।

**उत्तमा** । स्त्री । दुग्धिकायाम् । छोटथिकड़ि । प.मु., रत्ना. । मनःशिलायाम् । प.मु. । भूम्यामलक्याम् । वै.निघ. । त्रिफलायां । भा.म.१भ.सन्निपातज्व.चि. । "अष्टीसुरतरुश्यामा ।" मुस्तायां । हे. च. । तन्नामकशूकदोषविशेषे । "मुद्गमाषोपमा रक्ता पिड़का रक्तपित्तजा । उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥" सु.नि.शू.दो.चि.१४अ. ।

**उत्तमाङ्गम्** । क्ली । मस्तके । रा.नि.व.१८ । त्रि । उत्कृष्टाङ्गे ।

**उत्तमारणी** । स्त्री । इन्दीवरालतायाम् । इन्द्रचिर्भिट्यां । रा.नि.व.३ । इन्द्रवारुण्याम् । वा.उ.३७अ. । ग्रीष्ममल्लिकायां । युँई । सु.चि.६अ. ।

**उत्तरकालः** । पुं । भाविकाले ।

**उत्तरङ्गम्** । क्ली । द्वारस्योपरितिर्य्यक्काष्ठविशेषे । "उत्तरङ्गं मतं तिर्य्यक् द्वारस्योपरि दारु यत् ।" हला. ।

**उत्तरवस्तिः** । स्त्री । निरूहोत्तरदेयवस्तौ । निरूहेर पर देय पिचकिरि । निरूहादुत्तरं दानादुत्तरवस्तिसंज्ञा । तत्र नेत्रपरिमाणं १२ अङ्गुलम् । तच्छिद्रं मालतीवृन्तच्छिद्रपरिमितं । स्नेहमात्रा पञ्चवर्षीये बाले अर्द्ध प. तदूर्द्धं १ प. । स्त्रीणाञ्च कनिष्ठिकास्थूलं दशाङ्गुलं नेत्रं । स्नेहमात्रा च २ प. । तदुक्तं — "द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकं । मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमं । बालानां पञ्चवर्षाणामधो मात्रार्द्धपालिकी । तदूर्द्धं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः । अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः । स्थितस्य जानुमात्रेण चापि स्निग्धशलाकया । स्निग्धया मेढ्रमार्गञ्च ततो नेत्रं नियोजयेत् । शनैः शनैर्घृताभ्यक्तं मेढ्ररन्ध्राङ्गुलानि षट् । ततश्च पीड़येद्वस्तिं शनैर्नेत्रञ्च निर्हरेत् । ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः । स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्य्याद्दशाङ्गुलं । शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः । योनिमार्गेषु नारीणां स्नेहमात्रां द्विपालिकीं । उत्तानायै स्त्रियै दद्यादूर्द्ध्वजान्वै विचक्षणः । अप्रत्यागच्छति भिषक् वस्तावुत्तरसंज्ञिते । भूयो वस्तिर्विधातव्यः संयुक्तैः शोधनैर्गणैः । फलवर्त्तिं निदध्याद्वा योनिमार्गे दृढां भिषक् । मूत्रैर्विनिःसृतां स्निग्धां शोधनद्रव्यसंयुताम् । दह्यमाने तथा वस्तौ दद्याद्वस्तिविशारद ॥" शार्ङ्ग. । पलार्द्धमुन्मत्री वस्तिः मात्रावस्तिः पलद्वयं । पुष्पनेत्रे हिस्तम्भौ न द्वावेतौ भट्टप्रक्ला-

गजपिप्पल्याम्। वै.निघ.२भ.जिह्वकसन्निपा.ज्व. चि. । [रत्ना. ।

**उषरा** । स्त्री। चारमृत्तिकायाम् । क्षारिमाटी।

**उषर्बुधः** । पुं। रक्तचित्रके । रांगचित्रे । श.च.।

**उषस्** । क्ली, स्त्री । प्रत्यूषे । मे.सत्रिकं ।

**उषा** । स्त्री । गवि । गाई । हे.च. ।

**उषाकलः** । पुं । कुक्कुटे । त्रिका. ।

**उषाक्षारः** । पुं । टङ्कणे । सोहागा । क्षार- मृत्तिकायाम् । रत्ना. ।

**उषितः** । त्रि । दग्धे । व्युषिते । मे.तत्रिकं ।

**उषीरः** । पुं, क्ली । वीरणमूले । अ.टी.रा. । च.द.र.पि.चि.दूर्वाद्यतैले ।

**उष्ट्रः** । पुं । स्वनामख्यातपशुविशेषे । उँट । हिं ऊँट । तन्मांसगुणाः—त्रिदोषशमनं बलपुष्टिप्रदं रुच्यं मधुरं वीर्य्यवर्द्धनञ्च । रा.नि.व.१७। शीतलत्वं लघुत्वं त्रिदोषहरत्वं पुष्टिकरत्वं रुच्यं वीर्य्यवर्द्धनत्वञ्च। रा.नि.व.१५। कटु शोषक्रिमिविषहरं दीपनं वातकफघ्नं कुष्ठगुल्मोदरघ्नञ्च । भा.पू.१भ. ।

**उष्ट्रकण्टकः** । पुं । सकण्टकगुल्मविशेषे । ठाकुरकाँटा । च.द.। गोक्षुरे । भैष.मसूवा.चि."उष्ट्रकण्टकमूलं ।"

**उष्ट्रकाण्डिका (ण्डी)** । स्त्री । पुष्पवृक्षविशेषे । उँटाटी इति भाषा। मं उट्कटारा, उटांटी । गुणाः—तिक्ता उष्णा रुच्या हृद्रोगहरी । तद्बीजं मधुरं शीतं वृष्यं सन्तर्पणञ्च। रा.नि.व.१०।

**उष्ट्रग्रीवः** । पुं,क्ली। पित्तजन्यभगन्दररोगभेदे । "पित्तन्तु प्रकुपितं अनिलेनाधःप्रणुन्नं पूर्व्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिड़कां जनयति। सास्य कण्ड्वादीन् वेदनाविशेषान् जनयति । अप्रतिक्रियमाणा च पाकमुपैति । व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति । उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति । तं भगन्दरं परिस्राविणमित्याचक्षते ।" सु.नि.४अ. । प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिड़कां गुदागताम् । तदाशुपाकां हिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत् ॥ नि. ।

**उष्ट्रधूसरपुच्छिका** । स्त्री । वृश्चिकाल्याम् । बिछाति । र.मा. ।

**उष्ट्रपादिका** । स्त्री । मदनमालत्याम् । मदनमाली, शापरमाली च इति लोके । र.मा. ।

**उष्ट्रप्रमाणः** । पुं । काश्मीरदेशीयशरभे । मद. व.१२ ।

**उष्ट्रप्रियः** । पुं । मरुभूमिजातकण्टकवृक्षविशेषे। टाकुरकाँटा गाछ । हिं करील, टाण्टर । गुणाः करीरशब्दे मृग्याः । भा.पू.१भ. । [नि व ४ ।

**उष्ट्रभक्षिका** । स्त्री । क्षुद्रदुरालभायां । रा.

**उष्ट्रभक्ष्यः** । पुं । वंशकरीरे । बाँशेर कोँड़ । प.मु. ।

**उष्ट्रमूत्रम्** । क्ली । उष्ट्रस्य मूत्रे । गुणाः -- कटु तिक्तोष्णं लवणं पित्तकोपनं बल्यम् उदररोगघ्नं वातदोषघ्नञ्च । रा.नि.व.१५ ।

**उष्ट्रशिरोधरम्** । क्ली । उष्ट्रग्रीवभगन्दरे ।

**उष्ट्रिका (ष्ट्री)** । स्त्री । वृश्चिकालिक्षुपे । बिछाति । रा.नि.व.९ । मृद्भाण्डविशेषे । हारा. । उष्ट्रभार्य्यायाम् । उटिनी । मे.कत्रिकं । तत्क्षीरगुणाः—कुष्ठशोथपित्तार्शःकफाटोपानाहोदरस्थजन्तुगुल्मश्वासनाशित्वम्, ईषद्रूक्षोष्णलवणं, कुष्ठशोफघ्नं पित्तघ्नं अर्शोघ्नं कफाटोपघ्नं आनाहहरं क्रिमिगुल्मोदरश्वासघ्नञ्च । रा.नि.व.१५ । लघु स्वादु लवणं दीपनं तथा क्रिमिकुष्ठकफानाहशोथोदरहरं परम्। भा.पू.१भ. । रूक्षं तथोष्णं लवणं कफस्य निवारणं वातविकारहारि। लघु प्रशस्तं कटुकं । दधिगुणाः —अर्शःकुष्ठक्रिमिशूलोदररोगनाशित्वं कटुत्वं स्वादुत्वञ्च । नवनीतगुणाः —विपाके शीतलत्वं लघुत्वं व्रणक्रिमिकफकासवातविषघ्नत्वञ्च । घृतगुणाः— शीतमधुरत्वं विपाके कटुत्वं क्रिमिकुष्ठगुल्मोदरनाशित्वञ्च । पाके कटु शोषक्रिमिविषघ्नं दीपनं वातकफघ्नं कुष्ठगुल्मोदरघ्नञ्च । अत्रि.८अ. ।

**उष्ट्रीक्षीरम्** । क्ली । उष्ट्रीदुग्धे । See उष्ट्री ।

**उष्णः** । पुं । ग्रीष्मे । त्रि। उष्णस्पर्शे, उष्णवीर्य्ये। पलाण्डौ । रा.नि व. । क्ली । शूरणविशेषे । उष्णं वातकफौ हन्यात्। भा. । [आतुरे । धर. । वै. ।

**उष्णकः** । पुं । पूगवृक्षे । ज्वरे । ग्रीष्मर्त्तौ । त्रि ।

**उष्णगणः** । पुं । भद्रदार्व्वादौ । पिप्पल्यादौ। सु.चि.१७अ. ।

**उष्णगन्धा।** स्त्री। कुलिञ्जनवचे। महाभरी वच। वै.निघ.।

**उष्णजलम्।** क्ली। See उष्णोदकं।

**उष्णफला।** स्त्री। लताविशेषे। कुन्दुरुकी। मं गोडितोंडली। वै.निघ.।

**उष्णमल(मूत्र)त्वम्।** क्ली। पित्तजज्वरोगे।

**उष्णरश्मिः।** पुं। अर्कवृक्षे। अम.।

**उष्णवल्ली।** स्त्री। सारिवायाम्। अनन्तमूल।

**उष्णवातः।** पुं। मूत्राघातविशेषे। लक्षणं यथा —"व्यायामाध्वातपैः पित्तं बस्तिं प्राप्यानिलावृतं। बस्तिं मेढ्रं गुदञ्चैव प्रदहन् स्रावयेदधः। मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा। कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम्॥" भा.।

**उष्णवारणम्।** क्ली। छत्रे। छाता।

**उष्णवाष्पः।** पुं। नेत्रजले। स्वेदे। वै.निघ.।

**उष्णविदग्धदृष्टिः।** पुं। दृष्टिगतरोगविशेषे।

**उष्णवीर्य्यः।** पुं। शिशुमारे। हे.च.। क्ली। कटुस्वद्रव्याश्रयधर्म्मे। गुणाः—"लघु कफवातघ्नं पित्तकरं वृष्यं भ्रमतृड्ग्लानिस्वेददाहाशुपाकता करोति। सु.सू.४१अ.। त्रि। तीक्ष्णवीर्य्ये। [तके।

**उष्णसुन्दरः।** पुं, क्ली। विभीतकवृक्षे। विभी-

**उष्णस्निग्धः।** त्रि। तत् यद्वातघ्नं वस्तु। सु.सू.४१अ.। [वै.निघ.। रा.नि.व.२०।

**उष्णा(ष्मा)।** स्त्री। क्षयरोगे। सन्तापे। पित्ते।

**उष्णा(भि)गमः।** पुं। ग्रीष्मकाले। अम.।

**उष्णाङ्गत्वम्।** क्ली। पित्तजज्वररोगे।

**उष्णान्नम्।** क्ली। उष्णभक्ते। See अन्नम्।

**उष्णाम्बु।** क्ली। सुखोदके। "उष्णाम्बु च सुखोदकम्।" प.प्र.१ख.। See उष्णोदकम्।

**उष्णासहः।** पुं। शरत्काले।

**उष्णिका।** स्त्री। यवाग्वाम्। याउ। रत्ना.।

**उष्णीषः।** पुं, क्ली। शिरस्त्राणे। पागड़ी। हिं पाग। धारणगुणाः—"सुचिरं केश्यं रजोवातातपघ्नं च।" मद.व.१३। चक्षुष्यमायुर्वर्द्धकत्वं शीतोष्णादिनिवारकत्वञ्च॥ राज.।

**उष्णोदकम्।** क्ली। अष्टमांशावशिष्टे, चतुर्थांशावशिष्टे, अर्द्धशिष्टे वा पक्वजले। प.प्र.१ख.। तच्च त्रिविधं पादहीनार्द्धहीनत्रिभागहीनत्वात्। "तत्पादहीनं वातघ्नमर्द्धहीनन्तु पित्तनुत्। कफघ्नं पादशेषन्तु पानीयं लघु दीपनम्॥" पादहीनं हेमन्ते, पादार्द्धेनं शरदि, तथार्द्धावशेषितं प्रावृड्वसन्तग्रीष्मेषु हितं पथ्यञ्च। विशेषाः स्वस्थपर्य्यायेषु मृग्याः। गुणाः—सदापथ्यं कासज्वरविबन्धकफवातघ्नं दीपनं बस्तिशोधनञ्च। रात्रौ तप्तं श्लेष्मघ्नत्वं वातवर्ध्वित्वं अजीर्णजारकत्वञ्च। दिवातप्तं वारि नक्तं जाड्यं गच्छति अतस्तन्न रात्रौ पेयं। एवं रात्रितप्तमपि दिवा गुरु स्यात्, अतस्तदपि दिवा न पेयं। तदात्वमेव तप्तं जलं सदा पेयम्। रा.नि.व.१४।

**उष्णोपगमः।** पुं। ग्रीष्मकाले। अम.।

**उष्मः (कः)।** पुं। बारि। र.मा.। क्षयरोगे। रा.नि.व.२०। ग्रीष्मर्तौ। अम। वसन्तकाले। उष्णतायां। आतुरे। मे.कत्रिकं।

**उष्मजम्।** क्ली। लवणसाधारणे। रत्ना.।

**उष्मस्वेदः।** पुं। उष्मजन्यघर्म्मे। यथा—"उष्मस्वेदः प्रयोक्तव्यः लौहपिण्डेष्टिकादिभिः। प्रतप्तैरम्लसिक्तैश्च कार्य्ये रक्तकवेष्टिते॥ अथवा वातनिर्णाशी द्रव्यक्वाथरसादिभिः। उष्णघटं पूरयित्वा पार्श्वे छिद्रं निधाय च। विमुद्रास्यं त्रिवक्रञ्च धातुजां काष्ठवंशजाम्। ......। सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतं। हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम्॥ अत्र वातघ्नद्रव्यभागाः— शालपर्णी १ भ. पृश्निपर्णी २ भ.कण्टकारी ३ भ. बृहती ४ भ. गोक्षुरं ५ भ. बिल्वं ६ भ. गणिकारी ७ भ. श्योणाकः ८ भ. पाटलिः ९ भ. गाम्भारी १० भ.। वै.निघ.स्वेद.।

**उष्मा (मन्)।** पुं। सन्तापे। पित्ते। क्षयव्याधौ। रा.नि.व.२०। ग्रीष्मर्तौ। भ.टी.नीलकण्ठः।

**उष्मागमः।** पुं। ग्रीष्मकाले। उत्तापे।

**उस्रः (स्रा)।** पुं, स्त्री। वृषे। अर्ज्जुन्याम्। गाई। उपचित्रायाम्। आखुकर्ण्याम्। इन्दुरकाणी। मे.रत्रिकं।

**उक्षः।** त्रि। धौते। सिक्ते।

**उक्षणम्।** क्ली। सेचने।

**उक्षतरः** । पुं । महावृषे । हे.च. ।

**उक्षा (न्)** । पुं । वृषभे । भा.पू.१भ. । ऋषभकौषधे । रा.नि.व.५ ।

**उच्चाभद्रः** । पुं । वृषे । वै.निघ. ।

**उच्चालः** । पुं । वानरे । वै.निघ. ।

---

# ऊ

**ऊची** । स्त्री । भृष्टद्रव्ये । হরাপোড়া इति लोके । See ऊम्बी ।

**ऊज्जः** । पुं । बले । चर. ।

**ऊधः** । क्ली । आपीने । अम. ।

**ऊधस्यम्** । क्ली । दुग्धे । रा.नि.व.१५ ।

**ऊम्बी** । स्त्री । यवगोधूमयोरर्द्धपक्कमञ्जरी तृणाग्निना भर्जिता ऊम्ब्यीत्युच्यते । "मञ्जरी त्वर्द्धपक्का या यवगोधूमयोर्भवेत् । तृणानलेन संभृष्टा बुधैरुम्बीति सा स्मृता ॥" गुणाः—कफदा बल्या लघ्वी पित्तानिलघ्नी च । भा.पू.१भ. ।

**ऊरणः** । पुं । मेषे । प.मु. । [१८ ।

**ऊरुः** । पुं । जानूपरिभागे । উরু । रा.नि.व.

**ऊरुपर्व्वा** । पुं, क्ली । जानौ । হাঁটু । अम. ।

**ऊरुमाणः** । पुं । मायीफले । सु.सू.४६अ. । See उरुमालः ।

**ऊरुसन्धिः** । पुं । जानूपरिस्थसन्धिस्थाने । सु. ।

**ऊरुस्तम्भः** । पुं । Paralysis of the lower extremities. वायुजन्यस्फोटकरोगविशेषे । आढ्यवात इति केचित् । निदानं सम्प्राप्तिः यथा—"शीतोष्णद्रव्यसंशुष्कगुरुस्निग्धैः निषेवितैः । जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरैः । —सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम् । अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते । सक्थ्यस्थिनी प्रपूर्य्यान्तःश्लेष्मणा स्तिमितेन च । तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ इति । परकीयाविव गुरू स्यातामतिभृशव्यथौ । ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राछर्द्दरुचिज्वरैः । संयुक्तौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥" इति रूपम् । मा.नि. । ऊरुस्तम्भे विधिः कार्य्यो वातकोपी कफापहः । युक्त्या जित्वा कफं रूक्षैः पश्चाद्वातं जयेद्भिषक् । पुराणशालिश्यामाकयवकोद्रवमोदनं । अघृतैर्जाङ्गलैर्मांसैः तथाचालवणैर्हितम् । वास्तूकवायसीनिम्बवेत्राग्रकुलकादिभिः । शुष्कमूलकयूषेण पटोलस्य रसेन वा । कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत् । स्थानान्याक्रामयेत् प्रातः प्रतिस्रोतो नदीन्तरेत् ॥ पथ्यम् । रस.र. ।

**ऊरुस्तम्भा** । स्त्री । कदलीवृक्षे । रा.नि.व.११ ।

**ऊर्ज्जः (कः)** । पुं । कार्त्तिकमासे । हे.च. । क्ली । जले । श.र. ।

**ऊर्ज्जाः** । पुं । उत्साहे । वा.सू.२अ. ।

**ऊर्णनाभः** । पुं । मर्कटके । মাকড়শা । अम. ।

**ऊर्णनाभिः** । पुं । ऊर्णनाभे । श.र. ।

**ऊर्णा** । स्त्री । मेषलोम्नि । "ऊर्णा मेषादिलोम्नि स्यात् ।" भ्रूमध्यावर्त्ते । "अन्तरावर्त्तके भ्रुवोः ।" मे.णद्विकं । [नाभौ । हे.च. ।

**ऊर्णायुः** । पुं । कम्बले । मेषे । प.मु. । ऊर्ण-

**ऊर्द्धकण्टा (ण्टिका) (ण्टी)** । स्त्री । महाशतावर्य्याम् । रा.नि.व.४ ।

**ऊर्द्धका** । स्त्री । वायुजन्यरोगविशेषे । উৰ্দ্ধক ।

**ऊर्द्धगः** । पुं । अस्थिभङ्गरोगे । [सु.सू.४१अ. ।

**ऊर्द्धगुणभूयिष्ठः** । त्रि । वमनद्रव्यमात्रे ।

**ऊर्द्धगुदः** । पुं । गुदोर्द्धगरोगे ।

**ऊर्द्धग्रहः** । पुं । अश्वस्य ग्रहदोषजन्यरोगविशेषे । तस्य लक्षणं—जिह्वास्यकृष्णत्वं दर्शनस्मरणनाशश्चेति । "श्यामं जिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भवेत् । ऊर्द्धग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥" ज.द.५७अ. ।

**ऊर्द्धजत्रु** । क्ली । स्कन्धसन्धेरूर्द्धभागः । স্কন্ধসন্ধির উৰ্দ্ধভাগ । "ऊर्द्धजत्रुगदाघ्नी । तत्र रोगेषु ।" च.द.ज्व.चि. । [जानुके । भा. ।

**ऊर्द्धजानुः (ज्ञुः)** । त्रि । ऊर्द्धज्ञौ । उपविष्ट-

**ऊर्द्धतिक्तः (कः)** । पुं । नेपालनिम्बे ।

**ऊर्द्धनाडी** । स्त्री । नाडीविशेषे ।

**ऊर्द्धपातनम्** । क्ली । रसस्योर्द्धोत्क्षेपणकर्म्मणि यथा—रस ३ भ. ताम्र १ भ. जम्बीररसेन ताव-न्मर्द्दयेत्, यावन्न पिण्डतां गच्छति । अथ ऊर्द्धपा-तनायन्त्रं विद्याधरयन्त्रं वा परिकल्प्य तं पिण्डं त-न्मध्यभाण्डे संस्थाप्य तदुपरिस्थभाण्डे जलं दत्त्वा यन्त्रसन्धिं सम्यक् निरोधयेत् । अथ तदधः वह्निं ज्वालयेत् । "स्थालीमूर्द्ध्नि जलं दत्त्वा वह्निं प्रज्वा-लयेदधः । एतद्विद्याधरं यन्त्रं पातनायन्त्रमित्यपि॥" पातनायन्त्रमित्यूर्द्धपातनायन्त्रम् । "हण्डिकोपरि-तलभागेऽन्यां हण्डिकामूर्द्धमुखीं विन्यस्याधोहण्डि-काभ्यन्तरे पाच्यसूतादिकं निवेश्य च द्वयोः सन्धिं निरोधयेत् । तत उपरितनस्थाल्यां जलं दत्त्वा अधो वह्निं प्रज्वालयेदिति ।" र.सा.सं. । একটী হাঁড়ির ভিতর পিণ্ডিত সতাম্র রস রাখিয়া তাহার মুখে আর একটী হাঁড়ি বসাইয়া উভয়ের সন্ধিমুখ উত্তমরূপে লেপিয়া শুষ্ক করিবে । পরে উপরিস্থ হণ্ডিকায় জল পূরণ করিয়া জ্বাল দিবে । সিদ্ধ হইলে নামাইয়া হাঁড়ির গায়ে যে ভূষা লাগিয়াছে, তাহা যত্নে লইয়া তাহা হইতে পারা বাহির করিবে ।

**ऊर्द्धपादः** । पुं । काश्मीरदेशीयशरभमृगे । अष्टपादपशुविशेषे । [See वमनं ।

**ऊर्द्धभागहरः** । त्रि । वमनद्रव्ये । सु.सू.६अ. ।

**ऊर्द्धवर्त्तिः** । पुं । तन्नामकाश्वशूलरोगे । लक्षणं यथा—"यवसन्नादनश्चैव यो वाजी खादितं पुनः । मुखेन प्रोद्गिरत्याशु तं विद्यादूर्द्धवर्त्तिनम् ॥" ज.द. ४३अ. ।

**ऊर्द्धवातः** । पुं । वायुरोगभेदे । उद्गारे । ঢেকুর । लक्षणं—"अधःप्रतिहतो वायुः श्लेष्मणा मारुतेन च । करोत्युद्गारबाहुल्यमूर्द्धवातः स उच्य-ते ॥" निदानम् । [श्वासरोगे । भा.ज्व.चि. ।

**ऊर्द्धवायुः** । पुं । ऊर्द्धगतवायौ । उद्गारबाहुल्ये ।

**ऊर्द्धशोधनम्** । क्ली । अरिष्टकफले । রীঠা ফল । वमने ।

**ऊर्द्धश्वासः** । पुं । श्वासरोगभेदे । "ऊर्द्धं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः । श्लेष्मावृतमुखस्रोता क्रुद्धगन्धवहार्द्दितः ॥ ऊर्द्धदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः । प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीड़ि-तः । ऊर्द्धश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते । मुह्यतस्ताम्यतश्चोर्द्धं श्वासस्तस्यैव हन्त्यसून्॥" मा.नि.। See श्वासः ।

**ऊर्द्धस्थितिः** । पुं । अश्वस्योर्द्धावर्त्ते । त्रिका. ।

**ऊर्द्धासितः** । पुं । कारवेल्ले । করলা উচ্ছে । त्रिका. ।

**ऊर्म्मणः** । पुं । द्रोणपरिमाणे ।

**ऊर्म्मिः** । पुं, स्त्री । तरङ्गे । दुःखे । वेदनायां । पीड़ायां । वेगे । भङ्गे । मे.मद्विकं ।

**ऊर्म्मिकः** । पुं । अश्वस्य पादरोगभेदे । लक्षणं —"ऊर्म्मिकश्चोर्म्मिसंस्थानैर्वलिभिः खुरसम्भवैः ।" ज.द.२९अ. ।

**ऊर्व्वः** । पुं । वाड़वाग्नौ ।

**ऊर्व्वी** । स्त्री । ऊरुस्थमर्म्मभेदे । सु. ।

**ऊर्व्याङ्गम्** । क्ली । गोमयच्छत्रिकायाम् । গুবরে ছাতা । हारा. ।

**ऊर्षा** । स्त्री । देवताड़कतृणे । श.च. ।

**ऊलुपी** । पुं । शिशुमारे । भ.टी. ।

**ऊलूकः** । पुं । पेचके । अयं प्रसहजातीयः । एतन्मांसम् उष्णवीर्य्यम् । एतद्भक्षणात् शोषभस्म-कोन्मादाः चीणशुक्रता च जायन्ते । भा.पु.१भ. । "उलूकपललं भ्रान्तिकरं वातप्रकोपकरञ्च ।" म-द.व. । [रश्मि । मे. । क्ली । प्रभाते । श.र. ।

**ऊषः** । पुं । क्षारमृत्तिकायां । अम. । सन्ध्यायां ।

**ऊषकः** । पुं । कल्लर इति प्रसिद्धे द्रव्यकन्दे । वा.सू.१५अ.ऊषकादि. । "ऊषकस्तुत्थकं हिङ्गु ।" क्षारमृत्तिकायाम् । "ऊषकः क्षारमृत्तिका, वारा-णसीसमीपे वभदरदेशे बाहुल्येन भवति । अन्ये तन्नवं द्रव्यान्तरमाहुः ।" सु.सू.३८अ.ड. । क्ली । प्रत्यूषे । श.र. ।

**ऊषकादिगणः** । पुं । ऊषकतुत्थकहिङ्गुका-सीसद्वयसैन्धवशिलाजतूनीति गणः । गुणाः—मू-त्रकृच्छ्राश्मरीगुल्मभेदःकफघ्नः । "ऊषकस्तुत्थकौ हिङ्गुकाशीशद्वयसैन्धवं सशिलाजतु ।" वा.सू.१५ अ. । च.द.कषायकृते ।

**ऊषणम्** । क्ली । मरिचे । "ऊषणं मरिचे क्लीबम् ।" मे.णत्रिकं । प.मु.। भा.पू.१भ.ह.व.। पिप्पल्यां । च.द.कफज्व.चि.सिन्दुवारादिः । "सिन्दुवारदलक्काथः सोषणः कफजे ज्वरे ।" शुण्ठ्याम् । भा.पू.१भ.ह.व.। पिप्पलीमूले । भा.पू.१भ.ह.व.। पुं । चित्रकवृक्षे । भा.पू.१भ.ह.व. ।

**ऊषणा** । स्त्री । पिप्पल्याम् । रा.नि.व.६ । भा.पू.१भ.ह.व. । चविकायाम् । प.मु.। See चव्यम् । शुण्ठ्यां । वै.निघ. ।

**ऊषरः** । पुं । क्षारभूमौ । रा.नि.व.२ ।

**ऊषरक(ज)म्** । क्ली । औषरके । पांशुलवणे । औषरलवणे। रोमकलामायस्कान्तभेदे। रा.नि.व.१३।

**ऊषरतृणम्** । क्ली । स्वनामख्याततृणे, घासविशेषे । गुणाः—बलदं रुच्यं पशूनां हितञ्च । रा.नि.व.८ ।

**ऊषवान्** । त्रि । ऊषरे । अम. ।

**ऊषसूतम्** । क्ली । मृत्तिकालवणे । "ऊषसूतं बालुकैलं शैलमूलाकरोद्भवं । लवणं कटुकं क्लेदि विहितं कटु चोच्यते ॥" सु.सू.४६अ. ।

**ऊषक्षारः** । पुं । क्षारमृत्तिकायाम् । লোণামাটি । गुणाः—"उष्णोऽनिलघ्नः प्रक्लेदी ऊषक्षारो बलापहः ।" सु.सू.४६अ. ।

**ऊषाकरः** । पुं । कुक्कुटे । श.र. ।

**ऊषापानम्** । क्ली । प्रत्यूषजलपाने । तस्य विधिगुणाः—"अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत् । वातपित्तकफान् जित्वा जीवेद्वर्षशतं सुखीति ॥ तथा—अर्शःशोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकाराः मूत्राघातास्तु पित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः । ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तोस्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः ॥ विगतघननिशीथे प्रातरुत्थाय नित्यं पिबति खलु नरो यो नासरन्ध्रेण वारि । स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो बलिपलितविहीनः सर्व्वरोगैर्विमुक्तः॥"भा.।

**ऊष्मकः** । पुं । पित्ते । रा.नि.व. । ग्रीष्मऋतौ । ज्येष्ठाषाढौ ग्रीष्मऋतुः ।

**ऊष्मा** । पुं । उष्णतायाम् । क्षयरोगे । वै.निघ.।

**ऊष्मापहः** । पुं । हेमन्तऋतौ । वै.निघ. ।

**ऊहः** । पुं । तर्कें ।

**ऊहिनी** । स्त्री । सम्मार्ज्जन्याम् । ঝাঁটা ।

**ऊह्यम्** । क्ली। "यदनिर्द्दिष्टं बुद्धिमता तदूह्यं ।" सु.उ.६५अ. ।

## ऋट

**ऋक्थम्** । क्ली । स्वर्णे । धने । अम. । सु.सू. ३८अ. । [च. ।

**ऋची(जी)षम्** । क्ली । भ्राष्टे । তাওয়া । হে.

**ऋजीकः** । पुं । धूमे ।

**ऋजुश्रेणी** । स्त्री । मूर्वायां । रत्ना. ।

**ऋजुसर्पः** । पुं । सर्पविशेषे । दर्व्वीकरसर्पे । सु.कल्प.४अ. । See सर्पः ।

**ऋतम्** । क्ली । जले । मे. ।

**ऋतुः** । पुं । वसन्तादिषड्विधकाले । रवे राशिसंक्रमात् यत्र दोषाणां चयकोपसमा भवन्ति ते ऋतव उच्यन्ते । "चयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात् ॥" भा.पू.१भ.ऋतुचर्य्या । ते च शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तसंज्ञाः दोषोपचयप्रकोपोपशमननिमित्तानि भवन्ति । तदुक्तं—"माघादयो द्वादशमासा द्विमासिकमृतुकृत्वा षड़ृतवो भवन्ति । ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः । तेषां तपस्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः, शुचिशुक्रौ ग्रीष्मः, नभोनभस्यौ वर्षाः, इषोर्जौ शरत्, सहःसहस्यौ हेमन्तः इति । भाद्रपदाश्वयुजौ शरत्, कार्त्तिकमार्गशीर्षौ हेमन्तः, पौषमाघौ शीतः, फाल्गुनचैत्रौ वसन्तः, वैशाखज्यैष्ठौ ग्रीष्मः, आषाढ़श्रावणौ प्रावृड़िति" च मतान्तरं । सु.सू.६अ. । ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ । सिंहकन्ये स्मृता वर्षाः तुला वृश्चिकयोः शरत् धनुर्ग्राहौ च हेमन्तौ वसन्तः कुम्भमीनको । भा.।

ऋतौ तु तस्य भेदत्रयं स्वीकुर्व्वन्ति यथा—शीत ग्रीष्मवर्षाः। तत्र फाल्गुनादिज्यैष्ठान्ताः ग्रीष्मः, आषाढाद्याश्विनान्ता वर्षाः, कार्त्तिकादिमाघान्ताः शीत इति। ऋतुलक्षणादिकं यथा—“तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भाग्नीनां विदह्यन्ते, विदाहात्पित्तसञ्चयमापादयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयति, स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति।…तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृषः प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्। ऋतूनामत ऊर्द्धमव्यापन्नानां लक्षणानि यथा—वायुर्व्वात्युत्तरः शीतो रजोधूमाकुला दिशः। छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः॥ दर्पिताध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः। रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये॥ शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः। शेषं हेमन्तवत्सर्व्वं विज्ञेयं लक्षणं बुधैः॥ दिशो वसन्ते विमलाः काननैरुपशोभिताः। किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः॥ कोकिलाषट्पदगणैरुपगीता मनोहराः। दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः॥ ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैरृतोऽसुखः। भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव॥ भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः। ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः॥ प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः। अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः॥ कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही। कदम्बनीपकुटजसर्ज्जकेतकिभूषिता॥ तत्र वर्षासु नद्योऽम्भःपूरोद्धतटद्रुमाः। वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः॥ भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता। नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः॥ बभ्रुरूणः शरद्यर्कः श्वेताभ्रविमलं नभः। तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः॥ पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः। वाणसप्ताह्वबन्धूककाशासनविराजिता॥ स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः। विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनां॥ हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत्। वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्॥” सु.सू.६अ.। स्त्रीकुसुमे। अम.। See पुष्पं, आर्त्तवञ्च।

**ऋतुजन्मा ।** स्त्री। पुनर्नवायाम्।

**ऋतुपरीक्षा ।** स्त्री। आर्त्तवपरीक्षायाम्। तद्यथा—“ऋतौ कण्डूयनं योनौ क्वचिदङ्गे च वेदना। बाहुल्यं स्वल्पता वापि चानुबन्धित्वमस्य वा। संरोधः सर्व्वथा वापि वेद्यान्येतानि यत्नतः। आमयेष्वखिलेष्वेव भिषग्भिर्योषितां सदा॥” अत्रि.।

**ऋतुमती ।** त्रि। रजःस्वलायां स्त्रियाम्। तल्लक्षणं यथा—“पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजां। नरकाम्यां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्॥ स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचं। हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति॥ नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्। ईषत्कृष्णं विदग्धञ्च वायुर्योनिमुखं नयेत्॥ तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुनः। जरापक्वशरीराणां याति पञ्चाशतः क्षयम्॥” सु.शा.२।३अ.।

**ऋतुराजः ।** पुं। वसन्तऋतौ। रा.नि.व.२१।

**ऋतुविपर्य्ययः ।** पुं। ऋतुव्यापदि। वसन्तादिस्थाने शरदादिधर्म्मप्रवृत्तौ।

**ऋतुवैषम्यम् ।** क्ली। ऋतुचर्य्याविपरीताचरणे। भा.म.४भ.। “कोपस्तुवैदग्ध्यशिरोभितापैः।”

**ऋतुशूलम् ।** क्ली। ऋतुकाले रजोरोधजन्यशूलरोगे। “पुष्पस्य वातादिभिर्हतत्वं तस्य कारणं।

बहुलं पिच्छिलं स्निग्धं घनं भवति शोणितं । यो-नौ नाभौ तु शूलानि ऋतौ प्रदरमदारुणम् ॥” रस. र.यौ.व्या.चि. ।

**ऋतुषट्कम्** । क्ली । हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु । “चयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवेराशिषु संक्रमात् ॥” भा. ।

**ऋतुसन्धिः** । पुं । ऋतुद्वयसंश्लेषसमये । स च ऋतुद्वयस्याद्यन्तसप्ताहरूपः । तदुक्तं “ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः । तत्र पूर्व्वोविधिस्त्याज्यः सेवनीयः परो विधिरिति ॥” वा. ।

**ऋतुसम्मता** । स्त्री । मुनिखर्जूरिकायाम् । वै.निघ. ।

**ऋतुस्नाता** । स्त्री । रजोदर्शनाच्चतुर्थेऽह्नि स्नातायाम् । “पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत्पुत्रं ततः पश्येत्पतिं प्रियं ॥” सु.शा. २अ. ।

**ऋतुहरीतकी** । स्त्री । ऋतौ ऋतौ हरीतकीभक्षणविधौ । यथा—“सिन्धूत्थशर्करागुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥” च.द. । भट्टारस्तु ग्रीष्ममधिकृत्याह । ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे सार्द्धं शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितामित्थं प्राश्य हरीतकीमिव रुजो नश्यन्तु ते शत्रवः ॥ प्रयोगा.वाजी. । [धान्ये । निर्वुषीकृतधान्ये । श.टी. ।

**ऋद्धम्** । क्ली । सम्यक्पक्वधान्ये । अम. । पक्वमर्द्दित-

**ऋद्धिः** । स्त्री । कोशयामलप्रसिद्धे ऋद्धिवृद्धीति च गौड़प्रसिद्धे स्वनामख्यातलताकन्दे । तदुक्तं “ऋद्धिर्वृद्धिश्च द्वौ कन्दौ भवतः कोशयामले । श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः । तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा । प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत् ॥ रा.नि.व.५ । गुणाः—ऋद्धिर्गुणतुल्या बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः बलैश्वर्य्यकरी मूर्च्छारक्तपित्तहरी च । भा.पू. १भ. । महाशावण्यां । वा.सू.१५अ.पद्मकादौ चक-कः । “पद्मकपुण्ड्रौ वृद्धिर्वृद्धीः ।” एतदभावे वाराही योज्या ।”

**ऋश्यजा** । स्त्री । सर्पगन्धायां । गन्धरास्नायां । प.मु. । अस्याः कन्दोवाराहः । भा.म.१भ. ।

**ऋश्यः (श्यः)** । पुं । मृगे । रुरुमृगे । “ऋश्यो नीलाण्डको लोके स रोहः इति कीर्त्तितः ।” भा.म.१भ. । तन्मांसगुणाः—कषायं मधुरं वातघ्नं पित्तघ्नं हृद्यं तीक्ष्णं वस्तिशोधनञ्च । सु.सू.४६अ. ।

**ऋषभः** । पुं । ऋषभके । कर्णरन्ध्रे । कुम्भीरपुच्छे । मे. । सु.चि.१७अ. बलीवर्द्दे । वृष । मांसगुणाः—अतिमधुरं स्निग्धं पित्तश्लेष्मवर्द्धनं बृंहणं वातघ्नं बल्यं पीनसघ्नञ्च । भा.पू.१भ. ।

**ऋषभकः** । पुं । One of the eight medicaments, carpopogon pruriens. स्वनामख्यातौषधे । ऋषभ इति गौड़े काश्मीरे च प्रसिद्धः । ऋषभक । जीवकर्षभकयोरुत्पत्तिमाह मिश्रभावः—“जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ । जीवकः कूर्चकाकारः ऋषभो वृषशृङ्गवत् ॥” गुणाः—जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । एतदभावे विदारीमूलं प्रयोज्यम् । भा.पू.१भ. । मधुरः शीतः पित्तरक्तविरेकनुत् । शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च सः । रा.नि.व.५ । “ऋषभको वृषभकः ।” सु.चि.८अ. ।

**ऋषभी** । स्त्री । कपिकच्छुलतायाम् । आत्मगुप्ती । र.मा. । नराकारयोषिति । शिरालायाम् । विधवायाम् । मे.भविष्यं ।

**ऋषिः** । पुं । गोरोचनायां । वै.निघ. । [प.मु. ।

**ऋषिकम्** । क्ली । लताविशेषे । सियाड़िलता ।

**ऋषिजाङ्गलकः (ला) (लिका,की)** । स्त्री । ऋक्षगन्धायाम् । सर्पगन्धा । रत्ना. ।

**ऋषिपुत्रकः** । पुं । दमनकवृक्षे । वै.निघ. ।

**ऋषिप्रोक्ता** । स्त्री । माषपर्णीलतायां । प.मु. ।

**ऋषिश्रेष्ठः** । पुं । पुण्डरीकवृक्षे । ऋद्धौ ।

**ऋषिश्रेष्ठा** । स्त्री । ऋद्धौ । वृद्धौ । वै.निघ. ।

**ऋषिसृष्टा** । स्त्री । ऋद्धौ । मद.व.१ ।

**ऋषीकः** । पुं । कामवृक्षे । मद.व.१ ।

**ऋष्यः** । पुं । हरिणे । श्वेतकुष्ठे । वधवाचके ।

शीतहरिद्वे । एतन्मांसं कफघ्नं पित्तघ्नं किञ्चिद्वा- तवर्द्धकं लघु बलञ्च । भा.पू.१भ. ।

**ऋष्यगता** । स्त्री । माषपर्ण्यां । माषाणी । श.र. ।

**ऋष्यगन्धा (न्धिका)** । स्त्री । ऋषिजाङ्ग- लायां । र.मा. । अतिबलायाम् । क्षीरविदार्य्यां । श.र. । श्वेतशर्करकन्दे, रक्तशर्करकन्दे । वै.निघ. ।

**ऋष्यजिह्व(क)म्** । क्ली । महाकुष्ठभेदे । तस्य लक्षणम्—"ऋष्यजिह्वाप्रकाशखररत्नानि ऋष्यजि- ह्वानि ।" सु.नि.५श. ।

**ऋष्यपुष्पी** । स्त्री । अतिबलायाम् । वै.निघ. ।

**ऋष्यप्रोक्ता** । स्त्री । श्वेतवाट्यालके । प.मु. । शतमूल्याम् । महाशतावर्य्याम् । महाबलायाम् । कपिकच्छुलतायाम् । भा.पू.१भ.गु.व. । पीतवाट्या- लके । रमा. । माषपर्ण्याम् । च.सू.४श. । "ऋष्य- प्रोक्ताशतावर्य्यतिबलाशुकशिम्बिषु ।" मे.तत्रत्रिकं ।

**ऋष्याह्वा** । स्त्री । नागबलायाम् । बलायाम् । বেলেড়া । वै.निघ. ।

**ऋषभः** । पुं । मत्कुणे । रा.नि.व.१९ । तन्मांस- गुणाः—स्निग्धं गुरु हृद्यं स्वादु उष्णं वातघ्नम् । मद.व.१२ । हरिणे । हला. । क्षतवेधनी । घोषा लता । मे.षद्विकं । ग्रीवाकन्दके । रा.नि.व.९. ।

**ऋषभगन्धा** । स्त्री । वृद्धदारकवृक्षे । বীজতা- ড়ক । ऋषिजाङ्गलायां । र.मा.च.सू.४श.हंसपदी । श्वेतभूमिकुष्माण्डे । वै.निघ. ।

**ऋषभगन्धिका** । स्त्री । कृष्णभूमिकुष्माण्डे । वृ- द्धदारकलतायां । वै.निघ. ।

**ऋषभप्रियः** । पुं । ऋषभकवृक्षे । रा.नि.व.५ ।

**ऋषभमुखयन्त्रम्** । क्ली । सन्दंशतुल्ये यन्त्रविशे- षे । अत्रि. ।

**ऋषभविट्** । स्त्री । तैलपायिविष्ठायाम् । আ- শৌনার নাদি । वै.निघ.१भ.धर्म्म:-चि.कृष्णाग्नि- दीपलेपे । [व.५ ।

**ऋषभार्द्री** । स्त्री । महामेदालताद्रुपे । रा.नि.

---

# ए

**एककन्दः** । पुं । पानीयालुके । पाणशाक इति प्रसिद्धे कन्दशाके । শোলাকচু । प.मु. ।

**एककुष्ठम्** । क्ली । क्षुद्रकुष्ठभेदे । लक्षणम्— अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं । तदेककु- ष्ठम् । मा.नि. । एककुष्ठं चर्म्मदलमिति केचित् । कृष्णारुणं येन भवेच्छरीरं । तदेककुष्ठं प्रवदन्त्यसा- ध्यम् । सु.नि.५श. ।

**एकचरः** । पुं । गण्डके । গণ্ডার । त्रिका. ।

**एकदृक् (ष्टिः)** । पुं । काके । हला. । त्रि । काणे । কাণা । हे.च. ।

**एकपत्रः (त्रः)** । पुं । चण्डालकन्दविशेषे । रा.नि.व.७ । श्वेततुलस्यां । र.मा. ।

**एकपत्रा (त्रिका)** । स्त्री । सुगन्धशट्याम् । गन्धशटी । मालवे पत्राज इति ख्याते गन्धपत्रवृक्षे । रा.नि.व.६ । पाण्डुरतुलसीवृक्षे ।

**एकपर्णी** । स्त्री । नागवल्लीलतायाम् । वै.निघ. ।

**एकमूलः** । पुं । पुष्करीवृक्षे । পুণ্ডরিয়া । वै.निघ. ।

**एकमूला** । स्त्री । शालपर्ण्याम् । अतस्याम् । गणिनां । संग्रहः । ভেঙ্গরাজ । জটা ।

**एकरजः** । पुं । भृङ्गराजवृक्षे । ভীমরাজ,

**एकरन्ध्रः** । पुं । नदीवटे । वै.निघ. ।

**एकवर्षीया** । स्त्री । एकहायन्यां गवि । এক বছরের বাছুর । हे.च. ।

**एकविंशतिगुग्गुलुः** । पुं । कुष्ठरोगे । च.द. कुष्ठ-चि. । चित्रकं त्रिफला व्योषमजाजीं कारवीं वचाम् । सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम् । विडङ्गान्यजमोदाश्च मुस्तान्यमरदारु च । याव- न्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुं । सङ्कुट्य सर्पिषा सार्द्धं गुडिकां कारयेद्भिषक् । प्रातर्भोजन- काले च भक्षयेत्तु यथाबलम्...... । চিতামূল, ত্রিফলা, ত্রিকটু, জীরে, কৃষ্ণজীরে, বচ, সৈন্ধব, আতইচ, কুড়, চই, এলাইচ, যবক্ষা- র, বিড়ঙ্গ, যমানী, মুতা, দেবদারু প্রত্যেকে সমভাগ। সর্ব্বচূর্ণ সমান গুগ্গুল, ঘৃতের সহিত মর্দনপূর্ব্বক গুড়িকা করিবে।

**एकवीरः ।** पुं। स्वनामख्यातवृक्षविशेषे। এক-বীর। गंडुविकीक। गुणाः—कटुकः तीदवालघ्नः उष्णः गृध्रसीकटिशूलाभिघातघ्नः। रा.नि.व.८।

**एकवीरा ।** स्त्री। बन्ध्याकर्कोट्याम्। गुणाः—"एकवीरा स्मृता तिक्ता चात्युष्णा वातहा स्मृता। पक्षाघातं पृष्ठकटीशूलञ्चैव विनाशयेत्॥" वै.निघ.।

**एकवृन्दः ।** पुं। तन्नामककण्ठरोगविशेषे। येन दुष्टकफशोणिताभ्यां कण्ठे दाहकण्डूमदोषत्पाकी-मन्न मृदुरुन्नतो वृत्तश्च शोथो जायते। लक्षणं—"वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्य-मृदुर्गुरुश्च। नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूतः॥" सु.नि.१६अ.। मा.नि.।

**एकवृन्दः ।** पुं। गलरोगे। वै.निघ.।

**एकशफः ।** पुं। घोटके। त्रिका.। एकखुर-जन्तुमात्रे। यथा—"खरोऽश्वोऽश्वतरो गौरः शर-भश्चमरी तथा। एते चैकशफाः ख्याताः।" भा.।

**एकशफक्षीरम् ।** क्ली। अश्विभागखुरपशुदुग्धे। খুরযোড়া পশুমাত্রের দুধ। गुणाः—उष्णं लि-कशफं लघु शाखावातहरं साम्लमीषल्लवणं जड़ता-करमिति। वा.टी.हेमा.। [प.मु.।

**एकशिखा ।** स्त्री। पाठायाम्। आकनादि।

**एकशृङ्गः ।** पुं। गण्डके। গণ্ডার। वै.निघ.।

**एकहस्ती ।** स्त्री। अश्वस्य शोभनवल्गामेदे। "द्विहस्ती चैकहस्ती च शुभगा शोभना मता।" ज.द.७अ.।

**एकहायनी ।** स्त्री। एकवर्षीयायां गवि। अम.।

**एकाङ्गम् ।** क्ली। चन्दने। हारा.।

**एकाङ्गवातः ।** पुं। पक्षवधरोगे। পক্ষাঘাত। मा.नि.। See पक्षवधः। अश्वस्य वातव्याधिरोग-विशेषे। "एकः प्रलम्बते कर्णः शरीरार्द्धञ्च शुष्य-ति। शूनो भवति चाश्वस्य रोगे एकाङ्गसंज्ञके॥" ज.द.५५अ.।

**एकाङ्गी ।** स्त्री। मुरामांस्यां। মুরামাংসী নামক গন্ধদ্রব্যবিশেষ। गुणाः—तिक्ता हिमा स्वादी लघुः वातपित्तघ्नी ज्वरभूतरक्तरक्षोघ्नी कुष्ठ-कासघ्नी च। भा.पू.१भ.। कटुः कषाया भ्रमभू-र्च्छाहृल्लासविषदाहघ्नी च। रा.नि.व.१२।

**एकाण्डः ।** पुं। तन्नामकदोषान्वितावे। "ए-केन लम्बमानेन मुष्केणैकाण्डसंज्ञकः। ज.द.१अ.।

**एकादशशतिकमहाप्रसारणीतैलम् ।**

क्ली। वातव्याधौ। "शाखामूलदलैः प्रसारणितुला-स्तिस्रः कुरण्टीतुले, छिन्नायाश्च तुले तुले रुबुकतो रास्नाशिरीषात्तुलां। देवाह्वाच्च सकेतकाद्दशशते निः-क्वाथ्य कुम्भांशिके, तोये तैलघटं तुषाम्बुकलसौ द-ध्याढ़कं मस्तुनः॥ शुक्ताच्छागरसाद्धेक्षुरसतः क्षी-राच्च दत्त्वाढ़कं,पृक्काकर्कटजीवकाद्यविकषा काको-लिकाकच्छुराः। सूक्ष्मैला घनसारकुन्दुसरला का-श्मीरमांसीनखैः, कालीयोत्पलपद्मकाह्वयनिशां क-क्कोलकग्रन्थिकैः॥ चाम्पेयाभयचोचपूगकटुकाजा-तीफलाभीरुभिः, श्रीवासामरदारुचन्दनवचाशैले-यसिन्धूद्भवैः। तैलाम्भोदकटम्भराह्विनलिनाव्हक्षीर-कर्चूरकैः,कस्तूरीदशमूलकेतकनतश्यामाश्वगन्धाम्बु-भिः। कौन्तीतार्क्ष्यजशल्लकीफललघुश्यामाशताह्वाम-यैः, भल्लातत्रिफलाजकेशरमहाश्यामालवङ्गान्वितैः। सर्व्वौषैस्त्रिपलैर्महीयसि पचेन्मन्देन पात्रेऽग्निना॥" তিলতৈল ৬৪শ. ক্কাথার্থ সমূলপত্রশাখ গন্ধ-ভাদুলিয়া ৩৭।।০শ. নীলঝাঁটী, গুলুঞ্চ, এরণ্ড-মূল প্রত্যেকে ২৫শ. রাস্না, শিরীষছাল, দে-বদারু, কেয়ার মূল প্রত্যেকে ৬।০ শ. জল ৬৪০০ শ. শে ৬৪ শ. কাঁজি ৬৪ শ. দধিমণ্ড ১৬শ. শুক্ত ১৬শ. ছাগমাংস ৮শ. জল ৬৪শ. শে ১৬ শ. ইক্ষুরস ১৬ শ. দুগ্ধ ১৬ শ.। ক-ল্কার্থ পিড়িং ফল, কাঁকড়াশৃঙ্গী, জীবনীয় দ-শক বা অষ্টবর্গ, কাকোলী, মঞ্জিষ্ঠা, ক্ষীর-কাকোলী, আলাকুশীর মূল, ছোট এলাইচ, কর্পূর, কুন্দুরুখোটী, সরলকাষ্ঠ, কুঙ্কুম, জ-টামাংসী, নখী, কৃষ্ণাগুরু, নীলোৎপল, পদ্ম-কাষ্ঠ, হরিদ্রা, কক্কোল, গেঁঠেলা চাঁপাকলি বা নাগেশ্বর, বেণার মূল, গুড়ত্বক্, শুপারি, জায়ফল, লতাকস্তুরী, শতমূলী, লবণখোটী, দেবদারু, শ্বেতচন্দন, বচ, শৈলজ, সৈন্ধব, শিলারস, মুতা, গন্ধভাদুলিমূল, পুনর্নবা, নালুকা, গন্ধশটী, মৃগনাভি, দশমূল, ময়না-ফল, প্রিয়ঙ্গু, শাল, কেয়া, তগরমূল, অশ্বগ-ন্ধা, বালা, রেণুকা, রসাঞ্জন, শিমূলমূল, কট্-ফল, অগুরু, শ্যামালতা বা অনন্তমূল, কুড়-ভেলার মুটী, ত্রিফলা, শুলফা, পদ্ম নাগেশ্বর,

लवङ्ग, ত্রিকটু প্রত্যেকে ৩পল। प्रयोगा.भैष.। ध्याममिति पाठे गन्धतृणम्।

**एकादशायसः** । पुं । व्रणग्रन्थ्याधिकारे । पाठः—"सूतायः पुरुषः शुल्वं खगो दरदगन्धकौ । गगनं पुष्परागश्च शोणितश्चेश्वरोरगौ । विडङ्गत्रिफलाहिङ्गुयमानीजीरकद्वयं । सजीफलवचाशृङ्गी मरिचं पिप्पलीद्वयं चवी दुरालभा वह्निः शुण्ठीद्रावैर्विमर्द्दयेत् ॥" पुरुषः रसः । खगः स्वर्णमाक्षिकम् । पुष्परागः तन्नामकमणिः रसाञ्जनं वा । शोणितं कुङ्कुमं । ईश्वरः पित्तलं । रस.र.व्रण-चि. । प्रयोगामृते तु शुल्वस्थाने शङ्खः, शुण्ठीद्रावैर्विमर्द्दयेदित्यत्र 'भावयेदार्द्रकद्रवैः' इति पाठान्तरं । प्रयोगामृते पुरुषः गुग्गुलुः । पुष्परागं रसाञ्जनं । शोणितं ताम्रं । ईश्वरः रसः । जारितलौहं पारदः गन्धः ताम्रं स्वर्णमाक्षिकं अभ्रं हिङ्गुलं कुङ्कुमं पोखराज मणिः शीषं दि·लं विडङ्ग त्रिफला हिङ्गु यमानी जीरकं कृष्णजीरकं पियालफलं वचा कर्कटशृङ्गी मरिचं पिप्पली गजपिप्पली चवी दुरालभा चित्रकमूलं एषां प्रति समभागः। आर्द्रकरसेन भाव्यं।

**एकादशेन्द्रियम्** । क्ली । श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्पाणिपायूपस्थपादमनःसु । एषु प्रथमं पञ्चज्ञानेन्द्रियं, अन्यच्च कर्म्मेन्द्रियं । सु.शा.१अ. ।

**एकादिवीरः** । पुं । एकवीरवृक्षे । वै.निघ.।

**एकान्तः** । पुं । यदवधारणोच्यते । यथा—"त्रिवृद्विरेचयति मदनफलं वामयतीति ।" सु.उ. ६५अ. । [वै.निघ. ।

**एकाष्ठी** । स्त्री । कार्पास्यां । कार्पासवीजकोषे ।

**एकाष्ठीका** । स्त्री । पाठायाम् । আকনাদি, নিমুকা । वै.निघ. ।

**एकाष्ठीलः (ला)** पुं,स्त्री । वकवृक्षे । अम.। हिं वहहील, सरी । भा.पू.१भ. । (ला) पाठायां । र.मा. । रा.नि.व.६ । वनतिक्तिकायाम् । मे.लचतुष्कं पुष्पवृक्षभेदे । भा.पू.१भ.। See अगस्त्यः।

**एकाब्दा** । स्त्री । एकवर्षायां गवि । अम. ।

**एकाक्षः** । पुं । काके । त्रि। एकनेत्रे । কাণা। श.च. । [—हिमं पित्तघ्नं वातश्लेष्मकृच्च । मद. ।

**एकैषिकतैलम्** । क्ली । तन्नामकतैले । गुणाः

**एकैषि(कोषि)का** । स्त्री । वकपुष्पवृक्षे । पाठायाम् । আকনাদি । त्रिवृतायाम् । "एकैषिकाजशृङ्गी च" । सु.सू.३६अ.चि.१७,१८अ. । तत्तैलं मधुरम् अतिशीतं पित्तहरं वातकोपनं श्लेष्मवर्द्धनञ्च । सु.सू.४५अ.। [हाड़मुल । वै.निघ.।

**एकैषी** । स्त्री । पाठायां । আকনাদি । मं प-

**एकोषि(षि)का** । स्त्री । पाठायाम् । আকনাদি । र.मा. । वकवृक्षे इति केचित् ।

**एडः** । त्रि । बधिरे । কালা । अम. ।

**एडकः (काख्यः)** । पुं । पृथुशृङ्गमेषे । ভেড়া । प.मु. । वनच्छगले । त्रिका. । "एडकः पृथुशृङ्गः स्यान्मेदःपुच्छस्तु दुम्बकः । एडकस्य पलं ज्ञेयं मेषामिषसमं गुणैः । मेदःपुच्छोद्भवं मांसं हृद्यं वृष्यं श्रमापहम् । पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनम् । भा.पू.१भ.मांसव. । तृणविशेषे । ছোগলা । सु.चि.७अ. । मञ्जिष्ठायां । च. ।

**एडकघृतम्** । क्ली । एडकनवनीतोत्थघृते । गुणाः—अतिगुरुत्वाद्दुर्ज्यं सुकुमाराणाम्, बुद्धिपाटवकरं बलकरञ्च । रा.नि.व.१५ ।

**एडका** । स्त्री । मेष्यां । ভেড়ী । अ.टी.रा. ।

**एडगजः (जा)** । पुं, स्त्री । चक्रमर्द्दक्षुपे । চাকন্দা গাছ, চাটাকাটা इति च भाषा । रा.नि.व.५ । भा.पू.१भ.सोमराजतैले । च.सू. ३अ. । वन्यैलायां । বন এলাচ । च.द.कुष्ठ चि.।

**एडमूकः** । त्रि । बधिरे । वाक्श्रुतिवर्ज्जिते । কালা বোবা । मे.कचतुष्कं ।

**एडहस्ती** । पुं । चक्रमर्द्दे । চাকন্দা গাছ ।

**एडुकः** । त्रि । बधिरे । मे. ।

**एणः** । पुं। हरिणे । रा.नि.व.१६। कृष्णमृगविशेषे । কৃষ্ণসার হরিণ । हिं करीसाइलहरिण । अयं जङ्गालजातीयः । अस्य मांसगुणाः—कषायं मधुरं हृद्यं रक्तपित्तकफवातघ्नं रुचिकरं धारकं बल्यं । सु.सू.४६अ. । भा.पू.१भ. । विशेषतो ज्वरे प्रशस्तमिति चक्रपाणिः । लघुशीतलं वृष्यं त्रिदोषहरं षड्रसजं रुच्यञ्च । रा.नि.व.१७ । "मृगेष्वेणो हरिणः श्रेष्ठः बल्यो रोचनदीपनः । त्रिदोषघ्नो लघुः पाके मधुरो ज्वरिणां हितः ॥ चते चयार्शसोः पाण्डावरोचकनिपीडिते । कासश्वासातुराणाञ्च एणमांसं सुखावहम् ॥" अत्रि.२०अ. ।

**एणकः** । पुं । हरिणे । श.र. । कृष्णसारे ।

**एणीदाहः** । पुं । सन्निपातज्वरविशेषे । लक्षणं—"परिधावतीव गात्रे वृकपार्श्वे भुजङ्गपतङ्गहरिणगणः । वेपथुमतः सदाहस्त्वैणीदाहज्वरार्त्तस्य ।" भा.म.१भ. । [See सर्पः ।

**एणीपदः** । पुं । मण्डलिसर्पे । सु.कल्प.४अ. ।

**एणीपदी** । स्त्री । असाध्यलूताभेदे । सु.कल्प. ८अ. । See लूता ।

**एतः** । पुं । हरिणे । श.र. । घोटके ।

**एतनः** । पुं । निश्वासे । हे.च. ।

**एता** । स्त्री । हरिण्याम् । वै.निघ. ।

**एधतुः** । पुं । पुरुषे । [निघ. । See एरका ।

**एरकम्** । क्ली । होगलतृणे । হোগলা । वै.

**एरका** । स्त्री । गुन्द्रातृणे । तृणविशेषे । হোগলা । मं मोथीतृण । च.सू.३अ. । गुणाः—हिमा शुक्रवृद्धिकरी चक्षुष्या वातकोपना। मूत्रकृच्छ्राश्मरी दाहपित्तशोणितघ्नी च । रा.नि.व.८। शीता हृष्या चक्षुष्या वातकोपनी मूत्रकृच्छ्राश्मरीदाहपित्तशोणितघ्नी च । भा.पू.१भ. ।

**एरङ्गः (ङ्गी)** । पुं, स्त्री । मत्स्यभेदे । অরঙ্গ মাছ, এলেং মাছ, রামকড়া । हिं भरङ्गा । गुणाः—मधुरः स्निग्धः विष्टम्भी शीतलः गुरुश्च । भा.पू.१भ.मत्स्यव. । मञ्जिष्ठायाम् । च. ।

**एरण्डः** । पुं । Castor oil plant. (Ricinus communis.) स्वनामख्यातवृक्षविशेषे । ভেরেণ্ডা গাছ । हिं एरण्ड, रेंढ़ि । तें आमिदपुचेट्टु । एरण्डः त्रिविधः स्थूलशुक्लरक्तभेदेन गुणाः—मधुरोष्णः गुरुः शूलशोथकटीशूलवस्तिशूलशिरःशूलोदरज्वरब्रध्नश्वासकफानाहकासकुष्ठामदोषवातहरश्च । तत्कोमलपत्रं गुल्मवस्तिशूलकफवायुकृमिहृद्धिघ्नम् । तस्याग्रगुणाः—मलभेदकः वातकफोदरघ्नश्च । भा.पू.१भ.गु.व.। श्वेतैरण्डस्य मूलगुणाः—शूलवायुकफनाशित्वं शुक्रजनकत्वं। आमवातनाशित्वं अतिदीपनत्वं पित्तकोपनत्वञ्च। राज.। श्वेतादीनां गुणाः स्वस्वपर्याये द्रष्टव्याः ।

**एरण्डकः** । पुं । एरण्डे । भरतः ।

**एरण्डजम्** । क्ली । एरण्डतैले । वा. ।

**एरण्डतैलम्** । क्ली । Castor oil. एरण्डबीजोद्भवतैले । प्रा.एरंतेल । ভেরেণ্ডার তৈল । हिं रेंढ़िका तेल । गुणाः—मधुरगुरुश्लेष्मवर्द्धकत्वं वातरक्तगुल्महृद्रोगाजीर्णज्वरघ्नत्वञ्च । राज. । ईषत्तिक्तं ईषत्कटुकं रेचकं गुल्मानिलकफोदरमुष्कवृद्धिविषमज्वरवाघ्यादिशोथरुजश्च जयेत् । तीक्ष्णोष्णं पिच्छिलं विस्रञ्चेति रक्तैरण्डजतैलगुणाः । वा.टी. हेमा.तैलव. । एरण्डतैलं कृमिदोषनाशनं वातामयघ्नं सर्व्वाङ्गशूलघ्नं । कुष्ठघ्नं स्वादु रसायनं श्रेष्ठं पित्तकोपनं अतिदीपनञ्च । रा नि.व.१५ । "एरण्डजं यद्यपि शीतमेव सदुक्तं । वृद्धिलिङ्गाकट्युरुशूलानाहविबन्धनुत् ॥ तैलमेरण्डजं बल्यं गुरुष्णं मधुरं तथा । तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तमेरण्डसम्भवम् ॥ अत्रि.१४अ. ।

**एरण्डतैलमूर्च्छा** । स्त्री । मूर्च्छाद्रव्याणि—मञ्जिष्ठा मुस्तकं धान्यं त्रिफला जयन्तीपत्रं बालकं वनखर्ज्जूरी वटशुङ्गा हरिद्रा दारुहरिद्रा नलिका केतकी (কেয়ার নামাল) दधि काञ्जिकञ्च । हरिद्रादिपर्य्यायेण पूर्व्ववत् मूर्च्छा कार्य्या ।

**एरण्डपत्रविटपा (त्रिका) (त्री)** । स्त्री। क्षुद्रदन्तीवृक्षे । रा.नि.व.६ ।

**एरण्डफला** । स्त्री । क्षुद्रदन्तीवृक्षे । रा.नि. व.६ । भा.पू.१भ. ।

**एरण्डमूलम्** । क्ली । एरण्डशिफायां । च.द. विषमज्व.चि.' एरण्डमूलसिद्धं वा ।"

**एरण्डवीजम्** । क्ली । एरण्डफले ।

**एरण्डशिफा** । स्त्री। एरण्डमूले । भा.वा.व्या.।

**एरण्डसप्त(द्वादश)कः** । पुं । शूलरोगे । अत्र क्षारादीनां माषचतुष्टयं प्रक्षेप्यम् । पाचनादिद्रव्यात्कर्षात्पादिकः । प्रक्षेपः पादिकः क्वाथ्यात् । तथा माषिकं हिङ्गुसिन्धूत्थं जरणाद्यास्तु शाणिकाः। इति परिभाषानियमात् । पृश्निपर्णीद्वयस्यैका चाकुलिया, अन्या कलस्वीपत्रतुल्यदीर्घपत्रा च । च.द. शूल.चि. । এরণ্ডমূল, বেলছাল, চাকুলিয়া, সিংহপুচ্ছীচাকুলিয়া, ছোলঙ্গমূল, পাথরকুচি, গোক্ষুর প্রত্যেকে ২৩ রতি । যবক্ষার, হিঙ্গু, সৈন্ধব, এরণ্ডতৈল প্রত্যেকে ১ মাষা । इति एरण्डसप्तकः । এরণ্ডবীজ, এরণ্ডমূল, বৃহতী, কণ্টিকারী, গোক্ষুর, শালপানি, চাকুলিয়া,

मुगानी, मासाणी, डानकुनी, सिंहपुच्छीचाकुलिया, थागड़ामूल प्रत्येके ১৩।০র। प्रक्षेप यवक्षार ৪ मा.। एरण्डकादशक:।

**एरण्डा।** स्त्री। वृहद्दन्तीवृक्षे। मद.व.१। पिप्पल्याम्। श.च.।

**एरण्डादि:।** पुं। वदादिद्रव्यवर्गे। यथा— "एरण्डमारिवाद्राक्षा शिरीषश्च प्रसारणी। माषमुद्गाल्पपर्णिन्यौ विदारीकन्दकेतकी। एरण्डादिगणो ह्येष वातपित्तविकारनुत्॥" रसचन्द्रिका। এরণ্ডমূল, অনন্তমূল, কিস্‌মিস্‌, শিরীষ, গন্ধভাদুলিয়া, মুগানী, মাষাণী, ভুঁইকুমড়া, কেতকীমূল প্রত্যেকে ১৮ র.।

**एर्व्वारु: (रुका)।** पुं, स्त्री। कर्कटीलतायां। কাঁকুড় বা ফুটী গাছ। हिं फुट। तें नक्कदोस। शीतकर्कटी। त्रिज.र.। सा मधुरतुद्रभेदेन द्विविधा। गुणा:—पित्तहरी शीतला मधुरा मूत्ररोधघ्नी रुचिकरी सन्तापमूर्च्छाहरी च। अतिसेवनात् वातकोपकरी च। रा.नि.व.७। शीतला रूक्षा मधुरा ग्राहिणी गुरु:। आमा सा रूक्षा पित्तघ्नी च, पक्वा तृष्णाग्निपित्तकरी च। भा.पू. १भ.शा.व.। कोमलैर्व्वारुकं तिक्तं लघु स्वादतिमूत्रलम्। शीतं रुच्यं रक्तपित्तमूत्रकृच्छ्रादिदोषजं। तत्पक्वं पित्तलं चाग्निदीपनञ्च तृषापहं। उष्णं त्रिदोषशमनं क्रिमिदाहहरं मतम्। गदहे जीर्णन्तु तज्ज्ञेयमुष्णं पित्तकरं मतं। कफवायुर्विनाशकरं शीतकामायुर्व्विदैर्जनै:। क्षुद्रमैर्व्वारुकं शीतं मधुरं रुचिकारकं। कासपीनसकारि स्यात् पाचकं श्रमपित्तहं। आध्मानवायुः शमनं। वै.निघ.। विलेशयमगे। [र.मा.। भैष.क्षुद्रटी.चि.।

**एर्व्वारुकम्।** क्ली। कर्कटिकफले। কাঁকুড়।

**एर्व्वारुतैलम्।** क्ली। कर्कटीबीजतैले। কাঁকুড়বীজের তৈল। गुणा:—विभीतकतैलगुणम्। "वातपित्तघ्नं केश्यं श्लेष्मकरं गुरु शीतलञ्च। वा.तैलव.।

**एल:।** पुं। एलायां। एलवालुके। सि.यो.चरोग.चि.शीतकष:। "तालैलवितुन्नवचीसमानां।" च.द.वात.व्या.रात्रादि:।

**एलक:।** पुं। मेषे। रा.नि.व.१८।

**एलङ्ग:।** पुं। मत्स्यविशेषे। रायकला। शाखाड़ा, एलङ्गा। गुणा:—मधुरो वृष्य: चाक्षी कफवातघ्न: मेधाग्निपुष्टिकर: शीतल: गुरुश्च। रा.नि.व.१८।

**एलवालम्।** क्ली। एलवालुके। भा.म.४भ. ने.रो.चि.सामान्याञ्जने। "सैन्धवं चैलवालम्।"

**एलवालु (कम्)।** क्ली। Name of a perfume, a red powder sold under those names, seed of some plant. स्वनामप्रसिद्धगन्धद्रव्यविशेषे। अम.। श.र.। कक्कोलसदृशं कुष्ठगन्धि। भा.म.१भ.। নালুকা, এলাবালুক। हिं एलवा। मं कलंगडलें। तें कुरुवडमचेट्टु। गुणा:—कटुपाकं कषायं लघु शीतलं कण्डूकुष्ठक्रिमिघ्नं तृषाच्छर्दिकफपित्तरक्तमूत्रहरं। भा.पू.१भ.। मद.व.३। अगुरुं कषायं कफवातनुत् मूर्च्छाज्वरदाहघ्नं रोचनञ्च। रा.नि.व.४। वा.सू. १५अ.रोधादि.। कुष्ठघ्नं क्रिमिघ्नं विषघ्नं हृद्रोगहरञ्च। प.मु.। "सैलवालुपरिपेलवमोचा:।" तेजवल इति च.सू.४अ.। बालके। বালা। वै. निघ.२भ.र.पि.चि.दूर्व्वाद्यघृते।

**एला।** स्त्री। Cardamom, the seed of Elettaria cardamomum. स्वनामख्यातपण्यद्रव्ये। এলাইচ। हिं इलाचीपूरवी। मं एलची। तें यवकुलकि, एलुकचेट्टु। एला द्विधा —सूक्ष्मा स्थूला च। सूक्ष्मा गुजराटी, स्थूला च बड़एलाचि इति भाषा। एतदुभयगुणा:—शीतलतिक्तोष्णसुगन्धि पित्तघ्नं कफघ्नं हृद्रोगकरं मलार्त्तिवान्तिपुंस्त्वघ्नं। रा.नि.व.६। पित्तकफनाशित्वं शूलकोष्ठवद्धताहृष्णाच्छर्दिवायुनाशित्वम्। राज.। सूक्ष्मैलाविशेषगुणा:--मूत्रकृच्छ्रनाशित्वं कफश्वासकासार्शोहरत्वञ्च। स्थूलैला कटुकी पाके रसे चानलकृल्लघु:। रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा। हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत्॥ भा.पू.१भ.। नील्याम्। [व.४।

**एलागन्धिकम्।** क्ली। एलवालुके। रा.नि.

**एलादिगुडिका।** स्त्री.रक्तपित्ते हिता। मधुना तोलकद्वयं भक्ष्यं। एलापत्रत्वचोऽर्द्धाक्षा: पिप्पल्यर्द्धपलं तथा। सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिता:। सचूर्ण्य मधुना युक्ता गुडिका कारयेद्भिषक्॥ च.द.। रस.र.। এলাবীজ, তেজপত্র,

गुड़त्वक् প্রত্যেকে ১ তো. পিপুল ৪ তো. শর্করা, যষ্টিমধু, পিণ্ডখেজুর, দ্রাক্ষা প্রত্যেকে ৮ তো. सञ्चूर्ण्य मधुना गुड़ी कार्य्या । शा.कौ.।

**एलादिगणः** । पुं । एलादिद्रव्यवर्गः। स च एलायुग्मतुरुष्क-कुष्ठफलिनी-मांसी जल ध्यामकस्पृक्का-चोरक-चोच-पत्र तगरस्थौणेयजातीरस शुक्ति-व्याघ्रनखामराह्वागुरुश्रीवासककुङ्कुमचण्डा गुग्गुलुदेवधूपखपुरपुन्नागनागाह्वयात्मकः । गुणाः—वातकफघ्नो विषघ्नो वर्णप्रसादनः कण्डूपिटिकाकोठघ्नश्च । वा.सू.१५अ. । वा.टी.हेमा. ।

**एलादिचूर्णम्** । क्ली । छर्द्यधिकारे । च.द. भैष. । पाठः—"एलात्वक् मरिचं शुण्ठी पिप्पली नागकेशरं । यथोत्तरं भागवृद्ध्या चूर्णन्तु सितया समं ॥" रस.र.राजयक्ष्म.चि. ।

**एलादितैलम्** । क्ली । वातव्याधौ । तिलतैलं ४ श. एलादीनां कल्कः मिलितशरावमितः दुग्धं १६ श. दधि १६ श. वाय्यालककाथः १६ श. वाय्यालकं १२॥०श. जल ६४ श. शे १६श. । एला मुरामांसी सरलकाष्ठं शैलजं देवदारु रेणुकं चोरपुष्पी शटी जटामांसी चम्पकत्वी नागकेसरं ग्रन्थिपर्णं गन्धरसः खट्टासी तेजपत्रम् उशीरमूलं चन्दनं कुन्दुरुखोटी नखी बालकं गुड़त्वक् कुष्ठं कालागुरु मुस्तकं सामुद्रकर्कटः श्वेतचन्दनं मञ्जिष्ठा जातीफलं कुङ्कुमं पिङ्गपुष्पं शिलारसः अगुरु एषां प्रति २ तो. । च.द. ।

**एलादिमन्थः** । पुं । यक्ष्मरोगे । एलादीनां (एला यमानी आमलकं हरीतकी विभीतकं खदिरसारः निम्बः पीतशालः शालः विड़ङ्गं भल्लातकास्थि चित्रकमूलं त्रिकटुकं मुस्तकं पङ्कपर्पटी) प्रत्येकं ८ प. एकत्र १५ श. जलेन साधयित्वा ३॥० शरावावशिष्टे क्वाथं वस्त्रपूतं ग्राह्यं । तेन घृतं (३२प.) विपाच्य पाकशेषे शर्करायाः ३०प. वंशरोचनायाः ६ प. मधुनः ३२प. प्रक्षिप्य मन्थमदण्डे नालोड़येत् । च.द.रा.य.चि. । इयं वाभटोक्ता प्रक्रिया ज्ञेया । मतान्तरे तु एलादीनां प्रत्येकं २ प. ६ तो. ८ र. जलं ६४ श. ।

**एलानम्** । क्ली। फलविशेषे । নারেঙ্গা লেবু । मं हिरवेफल । गुणाः—"आममेलानमम्लं स्यात्तरं वीर्य्यं गुरु स्मृतम्। वातघ्नञ्चैव सम्प्रोक्तं पक्कं तच्छीतलं मधु । बलकृद्वातपित्तघ्नमृषिभिः परिकीर्त्तितम् ॥ रा.नि.व.११ ।

**एलापर्णी** । स्त्री । वृक्षविशेषे । কাঁটা আমরুলী, এলানি । रास्नायाम् । भा.पू.१भ. ।

**एलाफलम्** । क्ली । एलवालुके । रा.नि.व.४ । पुं । मधूकवृक्षे । মউল গাছ । वै.निघ. ।

**एलावालुकम्** । क्ली । एलवालुके । रा.नि. व.४ । कुष्ठगन्धिफलसदृशे । कट्फलसदृशं । सु. सू.३७अ. ।

**एलाबूः** । स्त्री । अलाब्वाम् । লাউ । अ.टी. ।

**एलायुग्मम्** । क्ली । एका सूक्ष्मा अन्या स्थूला च । ছোট এলাচ, বড় এলাচ । वा.सू.१५अ. एलादिः । 'एलायुग्मतुरुष्ककुष्ठफलिनी ।"

**एलालु (कम्)** । क्ली । एलवालुके । रा.नि. व.६ । भा.पू.१भ. ।

**एलाह्वम्** । क्ली । एलवालुके । रा.नि.व.४ ।

**एलीका** । स्त्री । सूक्ष्मैलायाम् । रा.नि.व.६ ।

**एलीयः** । पुं । एलवालुके । वै.निघ. ।

**एलुकम् (काख्या)** । क्ली,स्त्री । एलवालुके । सु.चि.१८अ. ।

**एल्वम्** । क्ली । एलवालुके । सु.चि.१८अ. ।

**एल्ववालु(ल्वालु)कम्** । क्ली । एलावालुके । रा.नि.व.४ । मद.व.३ ।

**एषणः** । पुं । सप्तकीटवृक्षे । वै.निघ. ।

**एषणिका** । स्त्री । स्वर्णादिपरिमाणतुलायाम् । নিক্তি । अम. ।

**एषणी** । स्त्री । Probe. व्रणमार्गानुसारिशलाकायाम् । सा च गण्डूपदाकारमुखी । गतिरन्वेषणी श्लक्ष्णा गण्डूपदमुखैषिणी । भेदनार्थेऽपरा सूची सुखामूलनिविष्टखा । इति ॥ सु.सू.८अ.। तुलाभिदि । নিক্তি । "एषणीव्रणमार्गानुसारिस्यात्तु तुलाभिदि ।" मे.षत्रिकं ।

**एष्यः** । त्रि । एषणार्हे । माध्यादौ रोगे ।

**एष्या** । स्त्री । आमलकीवृक्षे । रत्ना. ।

# ऐ

**ऐकशफम्** । क्ली । गर्द्दभीदुग्धे । सु. । See गर्द्दभीदुग्धम् । त्रि । एकखुरसम्बन्धीये ।

**ऐकाहिकः** । त्रि । एकदिवससम्पन्ने । एकदिनान्तरभवे । [See चलेद्युष्कः ।

**ऐकाहिकज्वरः** । पुं । एकदिनान्तरगतज्वरे ।

**ऐङ्गुदः** । पुं । इङ्गुदीवृक्षे । क्ली । इङ्गुदीफले । चम. । भैष. ।

**ऐणः(णेयः)** । त्रि । एणमृगचर्म्मादौ ।

**ऐणेयकम्** । क्ली । एलवालुके ।

**ऐन्दवी** । स्त्री । सोमराज्याम् । रा.नि.व.४ ।

**ऐन्द्रः** । पुं । देवसर्षपवृक्षे । क्ली । मूलविशेषे । বন আদা । गुणाः—कटुत्वं रुचिबलाग्निकरत्व । रा.नि.व.१ ।

**ऐन्द्रयवः** । पुं । इन्द्रयवे । मद.व.१ ।

**ऐन्द्रलुप्तिकः** । त्रि । इन्द्रलुप्तरोगविशिष्टे । টেকো । [রাখালশশা । मद.व.१ ।

**ऐन्द्रवारुणी** । स्त्री । इन्द्रवारुणीलतायाम् ।

**ऐन्द्रिः** । पुं । काके । मे.रत्रिकं ।

**ऐन्द्री** । स्त्री । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा.नि.व.६ । वै.निघ.२भ.तालीशादिचूर्णे । इन्द्रवारुण्यां । রাখালশশা । प.मु.रा.नि.व.३,च.सू.४च. । गोरक्षकर्कट्यां । च.सू.४च.प्रजास्थापने । भा.चवे. ।

**ऐन्द्रीफलम्** । क्ली । इन्द्रवारुणीफले । রাখালশশাফল । च.द.उ.मा.चि. । "पक्वैन्द्रीफलमूत्रकम् ।"

**ऐन्द्रीरसायनम्** । क्ली । रसायनविशेषे । अत्र ऐन्द्री (গোরক্ষচাকুলে), मत्स्याक्षी (তণ্ডুলীয়মূল), ब्रह्मसुवर्चला (সুবর্চলা ভেদ), ब्रह्मपुष्पी (ডানকুনী), ऐन्द्र्यादिविषाणानां प्रत्येकं यवत्रयं वैचसं सर्वं यवत्रयं विषस्य तिलं घृतस्य च पलं । च.चि.१च. ।

**ऐभी** । स्त्री । हस्तिघोषालतायाम् । रा.नि.व.३ ।

**ऐरावतः** । पुं । लकुचवृक्षे । মান্দার । नागरङ्गे । নারাঙ্গা লেবু । मे.तचतुष्कं । रा.नि.व.११, प.मु. । क्षुद्रद्वीपान्तरखर्ज्जूरे । क्ली । प्रखाकुरवीरे । रत्ना. । ऐरावतफले । तत्फलं अम्लरक्तपित्तकृद्दन्तशठञ्च । सु.सू.४६च. ।

**ऐरावतकः** । पुं । हस्तिशुण्ड्यां । হাতিশুঁড়ে । च.चि.३च. । नागरङ्गवृक्षे । वै.निघ. ।

**ऐरावतपदी** । स्त्री । काकजङ्घायाम् । महाज्योतिष्मतीलतायाम् । বড় লতাফটকী ।

**ऐरावती** । स्त्री । वटपत्रपाषाणभेदरूपे । বড় পাথরকুচি । रा.नि.व.५ । नागरङ्गवृक्षे । भा. । गुणाः—"ऐरावती रसे पाके लघ्वोष्णा च सुगन्धिका । वातं कासं श्वासरुजं नाशयेदिति कीर्त्तिता ॥" वै.निघ. । [नि.व.५ ।

**ऐरिणम्** । क्ली । सैन्धवलवणे, पांशुलवणे । रा.

**ऐरेयम्** । क्ली । मद्ये । वै.निघ. । एलवालुके । चम. ।

**ऐर्व्वारुः** । पुं । कर्कटीविशेषे । বড় কাঁকুড় । मद.व.७। च.द.प्रदर.चि.।See एर्वारुः, कर्कटी ।

**ऐलवालुकम्** । क्ली । एलवालुके । अ.र. ।

**ऐलेय(क)म्** । क्ली । नलुकायाम् । एलवालुके । चम. । "ऐलेयविश्वधान्याकम् ।" सि.यो., च.द.र. पि.चि.वासाखण्डकुष्माण्डे ।

**ऐल्वालु** । क्ली । एलवालुके । मद.व.३ ।

**ऐशमूलम्** । क्ली । लाङ्गलीमूले । ঈশলাঙ্গুলিয়ার মূল । रस.र.बाल.चि. ।

**ऐशानः** । पुं । ईशानकोणभववायौ । स च कटुकः शीतलश्च । भा. ।

**ऐश्वर्य्यम्** । क्ली । श्वेतभूस्तुरके । वै.निघ. ।

**ऐषिका** । स्त्री । पाठायाम् । चित्रलतायाम् । वै. निघ. । [मद्ये । जटा. ।

**ऐक्षवम्** । क्ली । इक्षुविकारे, गुड़ादौ । इक्षु-

**ऐक्षवी(सुरा)** । स्त्री । इक्षुरसकृतमद्ये । तस्याः गुणाः—शीतलं अतिमादकञ्च । रा.नि.व.१५ ।

# ओ

**ओकः** । पुं, क्ली (कस्) । गृहे । आश्रये । अम. ।

**ओकणः** । पुं । केशकीटे । উকুণ । श.र. ।

**ओकणिः (णी)** । पुं, स्त्री । उकुणे । श.र. ।

**ओकोदनी** । स्त्री । यूके । উকুণ । श.र. ।

**ओक्कणी** । स्त्री । उकुणे । श.र. ।

**ओजः (स्)** । क्ली । बले । मे.सम्विक्लि । तेजसि । रसादिसर्व्वधातुसारभागधातुविशेषे । गुणाः—सर्व्वशरीरस्थितत्वं स्निग्धत्वं शीतलत्वं स्थिरत्वं शुक्लवर्णत्वं कफात्मकत्वं शरीरबलपुष्टिकारित्वञ्च । हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकं। ओजः शरीरे सङ्ख्यातं तन्नाशान्नाशमृच्छति । वै.निघ.। अष्टविन्दुप्रमाणं तदीषद्रक्तं सपीतकं । अग्निसोमात्मकत्वेन द्विरूपं वर्णितञ्च तत् ॥ चर. । ओजश्च तेजोधातूनां शुक्लान्तानां परं स्मृतम् । हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ वा. । दीप्तौ । मे. ।

**ओजस्करः** । त्रि । ओजोधातुवर्द्धके ।

**ओड़िका (ड़ी)** । स्त्री । नीवारे । উড়িধান্য । प.मु. । गुणाः—ओषधी रुक्षा कफवायुवृद्धिकरी पित्तनाशिनी च । राज. । See नीवारः ।

**ओड्रः (कः)** । पुं । The China rose. (Hibiscus mutabilis.) जवाकुसुमवृक्षे । জবাফুলের গাছ । हिं वीड़हुल । मं जासविन्द । रा.नि.व.१० । गुणाः—संग्राही केशहितश्च । भा. पु.१भ.पुष्पव. । मलमूत्रसम्भनरञ्जनश्च । राज. । कटुरुक्षः इन्द्रलुप्तहरः विस्फर्द्दिजन्तुजनकः सूर्य्याराधनश्च । रा.नि.व.१० । माघा २मा. । [नि.व.१० ।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्षे । रा.

**ओड्रपर्य्यायः** । पुं । सूर्य्यकान्तपुष्पवृक्षे स्वनामख्याते । जवा । अम. । [फूल । प.मु. । See ओड्रः ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुमे । रक्तजवा

**ओड्रपुष्पा** । स्त्री । जवावृक्षे । वै.निघ. ।

**ओड़ापलक्षणा** । स्त्री । गोरक्षदुग्धाम् । वै. निघ. । [वनविड़ालि । वै.निघ. ।

**ओतुः** । पुं, स्त्री । विड़ाले । বিড়াল । अम. ।

**ओदः** । पुं । अन्ने ।

**ओदनः** । पुं । अद्रवे सिक्थे । स च मधुरादिभ्यो गुरुः । वा.टी.हेमा. । क्ली । भक्ते । प.मु. । अन्ने । रा.नि.व.२० । পিটুলি । सा.कौ.ज्व.बस्तिः ।

**ओदनपाकी** । पुं । नीलझिण्ट्याम् । च.चि. ३अ.चन्द.तैले ।

**ओदना (निका) (नी)** । स्त्री । महासमङ्गायाम् । বেলেড়াবিশেষ । वाट्यालके । বেলেড়া । रा.नि.व.४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां । रा.नि.व.४ । वाट्यालके । हिं खिरिहिटी । मद.व.१ ।

**ओलः (लः)** । पुं । स्वनामख्यातकन्दशाके । ওল গাছ । र.मा.,भा.पु.१भ. । गुणाः—अग्निकरः कफघ्नः रुचिकरः लघुः अर्शसि पथ्यः । ग्राम्यकन्देसु दोषल इति । राज. । See शूरणः । त्रि । आर्द्रे । मे.लद्विकं ।

**ओल(ल)कन्दः** । पुं । शूरणे । ওল । र.मा. । वनोल्ले । বুনা ওল । पानीयभक्तवट्याम् ।

**ओषः** । पुं । दाहे । प्लोषः ओषः इति पर्य्यायशब्दः । अम.भरतः ।

**ओषणः (णिः)** । पुं । कटुकरसे । ঝাল । हे.च. । (णी) पुरातिशाके । পুরতিশাক । गुणः—कफवायुनाशित्वम् । राज. । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे ।

**ओषधिः** । स्त्री । फलपाकान्तशालादौ, कदलीधान्यादिके । हे.च. । द्रव्येषु । तास्ति पुनरोषधयः । ताश्च द्विविधाः स्थावराः जङ्गमाश्च । तासां स्थावराः चतुर्धा यथा—वनस्पतिः वृक्षः, वीरुत्, ओषधिश्चेति । तासु अपुष्पफलवान् वनस्पतिः, पुष्पफलवान् वृक्षः, प्रतानवती लता, फलपाकनिष्ठा च ओषधिः । जङ्गमा अपि चतुर्धा जरायुजाण्डजस्वेदजोद्भिज्जभेदेन । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोऽण्डजाः । कृमिकीटप्रभृतयः स्वेदजाः । मण्डूकादयः उद्भिज्जा इति । सु.सू.१प. ।

**ओषधिगणः** । पुं । रासायनिकौषधिगणे । ताः सोमसमवीर्य्या महौषधय इति ख्याताः ।

तासाञ्च सोमवत्क्रियाशीःस्तुतय: शास्त्रे कथिता:। तास्वाष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणु: अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्च्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति। एताश्चार्ब्बुदगिर्य्यादिषु लभ्या:—“यासाञ्च या: क्षीरवत्यस्तासां क्षीरं कुड़वमितं सकृदेव उपभुञ्जीत। यास्तु अक्षीरा मूलवत्य: तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे। श्वेतकापोती समूलपत्रा भक्षयितव्या। गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डश: कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपभुञ्जीत। चक्रकाया: पय: सकृदेव। ब्रह्मसुवर्च्चला: सप्तरात्रमुपभोक्तव्या:। भक्ष्यकल्पेन शेषाणां पञ्च पलानि क्षीराढ़कक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत। सोमवदाहारविहारौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदानिर्गमादिति। अथासां पृथग्विज्ञानमुच्यते—मण्डलै: कपिलैश्चित्रै: सर्पाभा पञ्चपर्णिनी। पञ्चारत्निप्रमाणा वा विज्ञेयाजगरीबुधै:॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलिसम्मिता। सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां। द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिं॥ सक्षीरां रोमशां मृद्वीं रसेनेक्षुसमोपमां। एवं रूपरसाञ्चापि कृष्णकापोतिमादिशेत्॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा। एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे। जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते॥ कान्तैर्द्वादशभि: पत्रैर्मयूराङ्गरुहोपमै:। कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी॥ करेणु: सुमहत्क्षीरा कन्देन गजरूपिणी। हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी॥ अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी। अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा॥ श्वेतां विचित्रकुसुमां काकादन्या: समां क्षुपां। चक्रकामौषधिं विद्याज्जरामृत्युनिवारिणीम्॥ मूलिनी पञ्चभि: पत्रै: सुरक्तां शुक्लकोमलै:। आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी॥ कनकाभा जलान्तेषु सर्व्वत: परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्च्चला॥ अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितै:। पुष्पैर्नीलोत्पलाकारै: फलैश्चाञ्जनसन्निभै:, श्रावणी महती ज्ञेया कनकाभा पयस्विनी॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा। गोलोमी चाजलोमी च रोमशे कन्दसम्भवे॥ हंसपादीव विच्छिन्नै: पत्रैर्मूलसमुद्भवै:। अथवा शङ्खपुष्पी च समाना सर्व्वरूपत:॥ वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा। एषा वेगवतीनाम जायते ह्यम्बुदक्षये॥···देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे। दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्च्चला॥ आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये। दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे॥ काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्। करेणुस्तत्र कन्या च छत्रातिच्छत्रिके तथा॥ गोलोमी चाजलोमी च महती श्रावणी तथा। वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते॥ कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वत:। क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयं॥ विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु। मलये नलसेतौ च वेगवत्यौषधी ध्रुवा॥ कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषित:। सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितम्॥” इत्यादि। गुणा:—युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनं। कुर्य्युरेता: क्रमेणैव त्रिसहस्रायुषं नरम्॥ अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बर:। चरत्यमोघसङ्कल्पो नभस्यम्बुददुर्गमे॥ व्रजन्ति पक्षिणो येन जलदाश्च तोयदा:। गति: सौषधिसिद्धस्य सोमसिद्धगति: परा॥ सु.चि.३०अ.। [वै.निघ.।

**ओषधी**। स्त्री। ओषधी। भरत:। लघुवृत्ते।

**ओषधीपति:**। पुं। कर्पूरे। हे.च.।

**ओषधीश:**। पुं। कर्पूरे। अम.। [व.१८।

**ओष्ठ:**। पुं। दन्तच्छदे। উপরঠোঁট। रा.नि.

**ओष्ठधर:**। पुं। ओष्ठे। ঠোঁট। [व्रण। मा.नि.।

**ओष्ठपाक:**। पुं। तन्नामकरोगविशेषे। ওষ্ঠ-

**ओष्ठपुष्प:**। पुं। बन्धुजीवपुष्पवृक्षे। বান্ধুলী গাছ। रा.नि.व.१०। See बन्धुजीव:।

**ओष्ठप्रान्त:**। पुं। सृक्कभागे। रत्ना.।

**ओष्ठफला (भा)**। स्त्री। विम्बीलतायाम्। তেলাকুচা। मं गोडतोंडली।.वै.निघ.।

**ओष्ठरञ्जनी**। स्त्री। ताम्बूले। পান। प.मु.।

**ओष्ठरोग:**। पुं। ओष्ठाश्रयगतरोगविशेषे; ओष्ठ-

-अभ्यादौ। वातजपित्तजश्लैष्मिकसान्निपातिकरक्तजमांसजमेदोजाभिघातजभेदादष्टविधः। तत्र कर्कशत्वादिलक्षणा वातजाः, पिडकाचितत्वादिलक्षणा पित्तजाः, कण्डूमत्त्वादिलक्षणा कफजाः, कृष्णपीतश्वेतत्वादिसर्व्वलक्षणयुक्ताः सन्निपातजाः, सवद्रक्तखर्ज्जूरफलवर्णत्वादिलिङ्गा रक्तजाः, गुरुस्थूलत्वादिलक्षणा मांसजाः, सर्पिर्मण्डसवर्णत्वादिलक्षणा मेदोजाः, क्षतजातत्वादिलक्षणा अभिघातजा इति। भा.म ४भ.मुखरो.चि.। "आनूपपिशितक्षीरदधिमत्स्यातिसेवनात्। मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषा कफोत्तराः॥ इति। मा.नि.। [प.मु.।

**ओष्ठा (ष्ठी)** । स्त्री। बिम्बायां। তেলাকুচা।

**ओष्ठाधरौ (रं)** । पुं, क्ली। ओष्ठद्वये।

**ओष्ठोपमफला (लिका)** । स्त्री। बिम्बिकायां। তেলাকুচা গাছ। हिं कुन्दुरू। भा.पू.१भ.।

—०<>०<>०—

# औ

**औड़(डु)म्बरम्** । क्ली। कुष्ठरोगविशेषे। मे.। तस्य लक्षणं—"रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरं। औदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्॥" मा.नि.। ताम्रे। जटा.। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औड्रपुष्पम्** । क्ली। जवापुष्पे। है.च.।

**औत्सुक्यम्** । क्ली। उत्कण्ठायाम्। है.च.।

**औदनिकः** । पुं। सूपकारे। अम.। [पेटुके।

**औदरिकः** । त्रि। क्षुधिते। उदरमात्रपोषके।

**औदर्य्यम्** । क्ली। ताम्रे। मदनफले। उदुम्बरफले। [है.च.।

**औदश्वित(त्क)म्** । क्ली। अर्द्धजलयुक्तघोले।

**औदुम्बरम्** । क्ली। ताम्रे। हारा.। महाकुष्ठरोगविशेषे। गुणाः—"पित्तेन पक्वोदुम्बरफलाकृतिवर्णानि औदुम्बराणि।" सु.नि.५अ.। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औदुम्बरच्छदः** । पुं। दन्तीवृक्षे। वै.निघ.।

**औदुम्बरी** । स्त्री। कृमिभेदे।

**औद्दाल(क)म्** । क्ली। स्वर्णवर्णे वल्मीककारिकीटकृतमधुनि। উইমধু। रा.नि.व.१४। गुणाः—कषायम् उष्णं कटु कुष्ठविषनाशि च। राज.। राजनिघण्टुतु भूमेः उद्दलनात् औद्दालकाभिधाः कपिलकीटाः तैः वल्मीकसमीपे सञ्चितं मधु। "औद्दालाः कपिलाः कीटा भूमिरुद्दलनात् स्मृताः। वल्मीकात्तत्समुत्पन्नमौद्दालकमुदीर्य्यते। कुष्ठादिदोषघ्नं सर्व्वसिद्धिदञ्चेति।" रा.नि.व.१४। "प्रायोवल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः। कुर्व्वन्ति कपिलं स्वल्पं तस्मादौद्दालकं मधु॥" रुच्यं स्वर्य्यं कुष्ठविषघ्नं कषायं उष्णमम्लं कटुपाकं पित्तकरञ्च। भा.पू.२भ.मधुव.।

**औद्दालकशर्करा** । स्त्री। औद्दालमधुकृतशर्करायां। सा गुणैरौद्दालमधुसदृशी। रा.नि.व.१४।

**औद्भिज्जम्** । क्ली। पांशुलवणे। সোরা। रा.नि.व.६। शाम्भरिलवणे। [राज.।

**औद्भिदम्** । क्ली। औद्भिदलवणे। সোরা।

**औद्भिदजलम्** । क्ली। उद्भिदो जाते जले। प्रस्तरसलिले। तस्य गुणाः—मधुरं पित्तशमनं अविदाहि च। राज.। लघु। रा.नि.व.१४। "विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्। तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः॥ औद्भिदं वारि पित्तघ्नं अविदाह्यतिशीतलं। प्रीणनं मधुरं बल्यमीषद्वातकरं लघु॥" भा.पू.१भ.वारिव.। वर्षासु औद्भिदं पथ्यम्। मद.।

**औद्भिदद्रव्यम्** । क्ली। उद्भिद्य पृथिवीं जायते इत्युद्भिम्। तच्च वनस्पतिलतावानस्पत्यौषधात्मकम्। See च.सू.१अ.वनस्पत्यादिः।

**औद्भिदलवणम्** । क्ली। पांशुलवणापरनामधेयलवणे, यद्भूगर्भतः स्वयमुत्पद्यते। সোরা। सि.यो.यक्ष्म.चि.चित्रगुड़िकायां। च.द.महाषट्पलघृते। गुणाः—क्षारयुक्तं गुरु कटु स्निग्धं शीतं वातघ्नञ्च। भा.पू.१भ.ह.व.। रक्तकं सूक्ष्मं लघु वातानुलोमनञ्च। मद.व.२। तीक्ष्णं उत्क्लेदजनकं क्षारयुक्तं कटु तिक्तं कोष्ठबद्धतानाहशूलघ्नञ्च। राज.।

**औधस्यम्** । क्ली। पयदुग्धे।

**औनीतम्** । क्ली। अक्षरोगविशेषे। गुरुभोज-

व्याभिचरिन्द्रियाश्रयवश्याचीसेवावर्ज्जनात् शुक्रं स्खला-नच्युतं मेढ्रे प्रतिहन्यते,तेन मूत्रकृच्छ्रं भवेत्। ततः शोषितं कुपितं मेढ्रे शूलं जनयति। मेढ्रस्य छिन्नं पक्वं वाच्छूनमपिच्छलायुक्तं मक्षिकावृतं भवति, स्खलनाच न प्रविशति। ज.द.५१अ.।

**औन्दूवरम्।** क्ली। ताम्रे। भा.म.१भ.।

**औपवस्तम्।** क्ली। उपवासे। लङ्घने। हे.च.।

**औपसर्गिकः।** पुं। सन्निपातादिरोगविशेषे। तस्य लक्षणं—"कफोऽनुलोमवातेन यदि पित्तानुगो भवेत्। स्वेदश्चेत्यादिभिर्जुष्टस्तदा भवति मानवः॥ प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात्। औपसर्गिक एवान्यः सन्निपात उदाहृतः॥" वैद्यशास्त्रं।

**औपस्थ्यम्।** क्ली। उपस्थेन्द्रियसुखे।

**औपीनम्।** क्ली। उप्यसेवे। रा.नि.व.२।

**औमीनम्।** क्ली। अतसीक्षेत्रे। मशिनार क्षेत।

**औरभ्रः (कः)।** पुं। कम्बलभेदे। मेषे। हे.च.। क्ली। मेषमांसे। भाड़ार मांस। मं मेंडी-करमांस। गुणाः—मधुरं शीतलं गुरु विष्टम्भि वृंहणञ्च। मेषसमूहे। ऊर्णावस्त्रे। रा.नि.व.१७।

**औरिषम्।** क्ली। मृत्तिकालवणे। यवक्षारे। सोरा। वै.निघ.।

**औरुबुकम्।** क्ली। एरण्डतैले। च.द.।

**और्व्वम्।** क्ली। मृत्तिकालवणे। यवक्षारे। पांशुलवणे। रा.नि.व.६।

**औलम्।** क्ली। श्वेतशूरणे। वै.निघ.।

**औलूकम्।** क्ली। उलूकसमूहे। जटा.।

**औशीरम्।** क्ली, पुं। बालके। वाला। चामर-दण्डे। आसने। त्रि। उशीरजे। मे.रचिकं।

**औषणम्।** क्ली। कटुरसे।

**औषधम्।** क्ली। गुग्गुलम्। र.सा.सं.औषध-मारणगणे। रोगघ्नद्रव्ये। ঔষধ। "वैद्यो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम्"। चनि.। औषधं पञ्चविधम्। यथा—रसचूर्णकषायावलेहकल्काः। "तत्र पञ्चविधं प्रोक्तं स्वसंयोगविशेषतः। रसचूर्णं कषायश्चावलेहः कल्क इत्यपि॥" तत्र पुनः द्विविधं शोधनशमनलक्षणं। तयोः शोधनरूपं वस्तिविरेक-वमनम्। कुपितदोषान् बहिर्निःसार्य्य रोगोपश-मनं करोति। शमनरूपं तैलघृतमधुरूपं स्वस्थान-स्थितानामेव साम्यहेतुः। भा.टी.। अतएव। तत्र वातस्य वस्तिः (गुदप्रक्षिप्यमेढ्रादि)। पित्तस्य विरेकः (मुखपीतं गुदमार्गेणान्तःस्थितस्य निः-सारणं)। कफस्य वमनं (मुखेन पीतं तेनैव दो-षस्य निःसारणम्)। शमनं—वातस्य तैलं, पित्तस्य घृतं, कफस्य च मधु। विन्ध्यशैलजानि औषधानि क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि। वल्मी-कश्मशानादिजानि न ग्राह्याणि। औषधोत्पत्त्य-मन्योऽप्यस्ति स्थानाभावान्नोक्तः। औषधद्रव्याङ्गग्र-हणं यथा—खदिरादीनां सारः,निम्बादीनां त्वक्, दाड़िमादीनां फलं,पटोलादेश्च छदः ग्राह्यः। सारः स्यात् खदिरादीनामित्यादि। शार्ङ्गधरमते न्यग्रो-धादेः त्वक् वीजकादेः सारः तालीशादेः पत्रं त्रि-फलादेश्च फलं ग्राह्यमिति। काष्ठगर्भमहामूलानां वल्कलं क्षुद्रमूलानां सर्व्वाङ्गो ग्राह्यमिति। अति-स्थूलजटायास्त्वचः तथा सूक्ष्ममूलानि सर्व्वाणि ग्रा-ह्याणि। यत्र द्रव्याङ्गावयवो याहृशो निर्दिष्टः, तत्र तादृश एव ग्राह्यः। यथामृतादिक्वाथे अमृतादीनां पत्रमेव ग्राह्यम्। अङ्गसामान्योक्तौ मूलवल्कलम्, "अङ्गेऽप्यनुक्ते विहितन्तु मूल"मिति वचनात्। विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि सर्व्वौषधं सर्व्वकार्य्यार्थं, विरेकवमनार्थं वसन्ते। शिशिरे मूलं, ग्रीष्मे पत्रं, वर्षावसन्तयोः त्वक्कन्दौ, शरदि क्षीरं यथर्त्तुपुष्पं फलञ्च हेमन्ते सारञ्च ग्रा-ह्यम्। सामान्योक्तौ—मूत्रपात्रं, उत्पले नीलोत्पलं, शकृद्रसे गोमयरसः, चन्दने रक्तचन्दनं, सर्षपे सि-तार्थः, लवणे सैन्धवं मूत्रे गोमूत्रं, घृतदुग्धेषु ग-व्यमेव, चतुष्पदे स्त्रीः, पक्षिणि पुमान्, वयस्थ-जाङ्गलानां चर्म्मादि हित्वा ग्राह्यम्। मांसे कथिते चाजं क्वौत्वञ्च प्रकल्पयेत्। अनुक्ते ग्रहणं यथा—कालेऽनुक्ते प्रभातं, अङ्गेऽनुक्ते जटा, भागेऽनुक्ते सा-म्यं, द्रवेऽनुक्ते जलं। प.प्र.१ख.। चूर्णलेहासवकार्य्ये तु श्वेतचन्दनं क्वाथप्रलेपे रक्तचन्दनं ग्राह्यम्। भ-क्षणीयौषधविधाने—अजमोदोक्तौ यमानी, वाह्य-प्रलेपे तु वचा ग्राह्या। भा.।

**औषधकालः।** पुं। औषधसेवनस्य समयः। स च दशविधः—"निर्भक्तं प्राग्भक्तमधोभक्तं मध्येभ-क्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्त-रञ्चेति। तत्र निर्भक्तं केवलमौषधमुपयुज्यते। प्रा-ग्भक्तं यत्तु प्राग्भक्तस्योपयुज्यते। अधोभक्तं यद्भक्ते

पीयते। मध्येभक्तं यन्मध्ये भक्तस्य पीयते। अन्तराभक्तं नाम यदन्तरा पीयते पूर्व्वापरयोर्भक्तयोः। सभक्तं औषधेषु यत्साध्यते भक्तम्। सामुद्गं नाम यद्भक्तस्यादावन्ते च पीयते। मुहुर्मुहुर्य्यासं सभक्तम् भक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते। ग्रासान्तरं ग्रासिक्यामिश्रम्।" तत्र निर्भक्तगुणाः—"वीर्य्याधिकं भवति भेषजमन्नहीन"मित्यादि। प्राग्भक्तस्य यथा—"शीघ्रं विपाकमुपयाति बलं न हिंस्यादित्यादि।" अधोभक्तस्य यथा—"पीतं यदन्नमुपभुज्य तदूर्द्धकाये इत्याद्रदाम् बहुविधांश्च बलं ददाति।" मध्येभक्तस्य यथा—"मध्ये तु पीतमुपहन्त्यविसारि भावाद् ये मध्यदेहमभिभूय भवन्ति रोगाः।" अन्तराभक्तस्य यथा—"हृद्यं मनोबलकरन्त्वतिदीपनीयम्।" सभक्तस्य यथा—"पथ्यं सभक्तमबलाबलयोर्हि नित्यमित्यादि।" सु.उ.६४अ.।

**औषधालयः**। पुं। औषधगृहे। ঔষধের ঘর।

**औषधिः (धी)**। स्त्री। गुडूच्यां। रास्नायां। दूर्व्वायाम्। श्वेतदूर्व्वायाम्। हरीतक्याम्। मद्ये। औषधे। रत्ना.। फलपाकान्तव्रीह्यादौ। हे.च.।

**औषधिगन्धः**। पुं। आघ्राणेन ज्वरादिकरौषधीनां गन्धे। च.द.ज्वरातिसार-चि.।

**औषधिप्रतिनिधिः**। पुं। यदौषधं न लभ्यते तस्य स्थाने तत्समगुणद्रव्यान्तरग्रहणे। यथा—मेदाभावे अश्वगन्धा महामेदे च शारिवा। जीवकर्षभकाभावे गुडूची वंशलोचना इत्यादि। चित्रकाभावे दन्ती अपामार्गक्षारो वा, धन्वयासाभावे दुरालभा, तगराभावे कुष्ठं, मूर्व्वाभावे जिङ्गिनीत्वक्, अहिंस्रालक्ष्मणाभावे मानकमयूरपुच्छग्रहणं, वकुलाभावे कह्लारोत्पलपद्मग्रहणम्। नीलोत्पलाभावे कुमुदं, जातीपुष्पाभावे लवङ्गं, अर्कादिक्षीराभावे तत्पत्ररसः, पुष्करमूलाभावे कुष्ठं, लाङ्गलकीग्रन्थिपर्णाभावे कुष्ठञ्च ग्राह्यं। भा.पू.१भ.। चविकाभावे गजपिप्पली, पिप्पलीमूलम्, सोमराज्याभावे चक्रमर्द्दफलम्, दार्व्व्यभावे हरिद्रा, रसाञ्जनस्याभावे दार्व्वीक्वाथः, सौराष्ट्रयभावे फटिकारी, तालीशाभावे स्वर्णताली, भार्ग्यभावे तालीशं कण्टकारीमूलं वा, वचकस्याभावे पांशुलवणं, यष्टीमध्वभावे धातकीपुष्पम्, अम्लवेतसाभावे चुक्रं। द्राक्षाभावे गाम्भारीफलम्, तदभावे पीतशालपुष्पं, मधुकाभावे लवङ्गम्, कस्तूर्य्यभावे काकोली, तदभावे जातीपुष्पम्. कर्पूराभावे ग्रन्थिपर्णी (गाँठिआला) सुगन्धिमुस्तकं वा, कुङ्कुमाभावे कुसुम्भं, श्रीखण्डचन्दनाभावे कर्पूरम् तदुभयाभावे रक्तचन्दनं ग्राह्यं। मध्वभावे जीर्णगुडः, पुरातनाभावे आमचतुष्टयशुष्कः गुडः, क्षौराभावे मौद्गो मासूरश्च रसः, शर्कराभावे खण्डं, शाल्यभावे षष्टिकं, दाड़िमाभावे वृक्षाम्लं, सौराष्ट्रमृदभावे पर्पटी, लौहाभावे तन्मलं, चव्यगजपिप्पल्यभावे पिप्पलीमूलं, मुञ्जातिकाभावे तालमुस्तं ग्राह्यम्। माजुफलमिति केचित्। प.प्र.१ख.।

**औषधिवीर्य्यम्**। क्ली। शीतोष्णादिरूपे। तच्च शीतमुष्णं रूक्षं स्निग्धं तीक्ष्णं मृदु पिच्छिलं तीव्रं विशदञ्चेति। तदुक्तं "वीर्य्यं द्विविधमुष्णं शीतञ्चाग्निसोमीयत्वाज्जगतः। केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म्म कुर्व्वन्तीति।" सु.सू.४०अ.।

**औषधीपञ्चामृतम्**। क्ली। गुडूचीगोक्षुरमुषलीमुण्डीशतावरीषु।

**औषर(क)म्**। क्ली। अयस्कान्तभेदे। पांशुलवणे। रुचिकालवणे। शारी नुन्। सैन्धवलवणे। ऊषरदेशजलवणे। गुणाः—क्षारं तिक्तं वातकफघ्नं विदाहि पित्तकृत् ग्राहि मूत्रशोधकञ्च। रा.नि.व.६। क्षारे। मद.व.२।

**औष्ट्रकम्**। क्ली। उष्ट्रसमूहे।

**औष्ट्रतक्रम्**। क्ली। उष्ट्रीदुग्धजातघोले। गुणाः—"औष्ट्रं तक्रन्तु विरसं गुरुकण्ठदोषलम्। पीनसश्वासकासेषु शस्तमुक्तम्।" वै.निघ.।

**औष्ट्रनवनीतम्**। क्ली। उष्ट्रीदुग्धजातनवनीते। गुणाः—लघुपाकं शीतलं व्रणक्रिमिकफरक्तदोषघ्नं वातघ्नं विषघ्नञ्च। रा.नि.व.१५।

**औष्ट्रमूत्रम्**। क्ली। उष्ट्रमूत्रे। गुणाः—उन्मादशोफार्शःक्रिमिशूलोदरघ्नञ्च। मद.व.८।

**औष्ट्रक्षीरम्**। क्ली। उष्ट्रीदुग्धे। See उष्ट्री।

**औष्ट्रीघृतम्**। क्ली। उष्ट्रीनवनीतजघृते। गुणाः—मधुरं पाके कटु शीतलं क्रिमिकुष्ठहरं वातकफगुल्मोदरघ्नञ्च। रा.नि.व.१५।

**औष्यम्**। क्ली। उष्णतायाम्।

# क

**कम्** । क्ली । जले । रा.नि.व.१४ । सुखे । मे. । केशे । धर. । [पानपत्रे । अ.टी. ।

**कंसः** । पुं, क्ली । कंसमाक्षिके (महाद्रावके) ।

**कंसम्** । क्ली, पुं । ताम्रवङ्गयोरुपधातौ, कांस्यधातौ । काँसा । प.मु. । आढ़कपरिमाणे (८श.) । भा. । तैजसपात्रमात्रे । त्रिका. । [हे.च. ।

**कंसकम्** । क्ली । पुष्पकासीसे । इदं श्वेतवर्णम् ।

**कंसहरीतकी** । स्त्री । शोथाधिकारे । हरीतकी १०० शतं, दशमूलं प्रत्येकं ६प. शती. १॥० माषा मिलितं ६४प. वारि ५१२ प. (६४श.) शे. १२८ प. (१६ श.) पुरातनगुड़: १०० प. । पक्वा लेहवद्भूते, शुण्ठीचूर्णं ८ तो. मरिचचूर्णं ८ तो. पिप्पलीचूर्णं ८ तो. यवक्षार: ८ तो. गुड़त्वक् २ तो. तेजपत्रं २ तो. एलाचूर्णञ्च २ तो. प्रक्षेपो देय: । मधु २ श. वा १६ प. । मतान्तरे क्वाथ: ८ श. । पाठ: —"द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुड़ाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च । प्रस्थार्द्धमात्रं मधुन: सुशीते किञ्चिच्च चूर्णादपि यावशूकात्, एकाग्रत: प्राश्य ततश्च लेहात् शक्तिं निहन्ति श्वयथुं प्रवृद्ध"-मित्यादि । सा.कौ. ।

**कंसास्थि** । क्ली । कांस्यधातौ । काँसा । "कंसे तु कांस्यं कंसास्थि" । त्रिका. । [च. ।

**कंसोद्भवा** । स्त्री । सौराष्ट्रमृत्तिकायाम् । हे.

**ककन्दः** । पुं । स्वर्णे । उणा. ।

**ककरीमुखः** । पुं । केशे । रा.नि.व.१८ ।

**ककारपूर्व्वद्रव्यम्** । क्ली । ककारपूर्व्वकद्रव्येषु । तानि यथा—कटुक:, कालशाकं, कुष्माण्डं, कर्कटी, कर्कन्धु:, कर्कोटक:, कलिङ्ग:, करमर्द्द:, करीर:, कतक:, कशेरु:, काञ्जिकञ्चेति रक्तपित्ते वर्ज्यम् । भा.म.र.पि.चि. ।

**ककुञ्जिनी** । स्त्री । ज्योतिष्मतीलतायाम् । लताफट्की । भा.म.१भ. । [राज. ।

**ककुण्डलः (ला)** । पुं, स्त्री । चातकपक्षिणि ।

**ककुण(न)कः** । पुं, क्ली । बालरोगविशेषे । See ककूणक: ।

**ककुत् (दः)** । स्त्री, पुं, क्ली । वृषाङ्गे । ষাঁড়ের ঝুঁটি । प्राधान्ये । अम. । ध्वजे । मे । दर्व्वीकरसर्पभेदे । सु.कल्प.४अ. । See सर्प: ।

**ककुद्मती** । स्त्री । कटौ । পাছা, নিতম্ব । अम. । त्रि । ककुद्विशिष्टे । [वृषे । हे.च. ।

**ककुद्मान्** । पुं । ऋषभकक्षुपे । रा.नि.व.५ ।

**ककुन्दरम्** । क्ली । नितम्बगर्त्ताधिष्ठाने वैकल्यकरे पृष्ठसन्धिमर्म्मद्वये । मेरुदण्डोभयत: पार्श्वजघनबहिर्भागे ईषदधस्तस्य स्थानम् । तत्र स्पर्शाज्ञानमध:काये चेष्टोपघातश्च । सु.शा.६अ. । ककुन्दरौ तु सर्व्वेषां स्यातां जघनकूपकौ । रा.नि.व.१८ । पुं । वृक्षविशेषे । गुणा:—"ककुन्दर: कटुस्तिक्त: ज्वरघ्नशोथकृन्मत: । रक्तकफदाहानां तृषायाश्च विनाशन: ॥" अस्यार्द्रमूलञ्च मुखे धारितं मुखदोषनुत् । वै.निघ. । [भक्षितं ।

**ककुप्** । स्त्री । चम्पकमालायां । प्रवेण्याम् । मे.

**ककुभः** । पुं । अर्ज्जुनवृक्षे । प.मु. । वृषे ।

**ककुभत्वक्** । स्त्री । अर्ज्जुनवृक्षवल्कले । च.द. । सि.यो.यक्ष्म.चि.ककुभादौ ।

**ककुभशाखा** । स्त्री । भार्य्याम् । रत्ना. । [च. ।

**ककुभादनी** । स्त्री । नलीनामकगन्धद्रव्ये । श.

**ककूणकः** । पुं, क्ली । शिशोर्नेत्रवर्त्मजरोगे । কতো। ছিং কোথুবাহ। लक्षणं यथा—"ककूणक: क्षीरदोषाक्षिशूनामक्षिवर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहु: । शिशु: कुर्य्याल्ललाटाक्षिकूटनासावघर्षणं । शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षम: ॥ मा.बालरो.नि. । ककूणकं क्षीरदोषाक्षिशूनामक्षिवर्त्मनि । जायते सरुजं नेत्रं कण्डूरञ्च स्रवेन्मुहु:... ॥ भा.म.४भ. ।

**ककूल(क)म्** । क्ली, पुं । गोधूमादिचूर्णसन्तापे । वा.टी.अरुण: । अपूपपचनार्थं सश्रयपात्रे । "ककूलं सकुभि: कौष्ठे स्वभे ना तु तुषानल: । तेन च सश्रयसुतानमपूपपचनपात्रं लक्ष्यते" । वा.टी. हेमा. ।

**ककेरुकः** । पुं । क्रिमिभेदे । See क्रिमि: ।

वा। नन्दीवृक्षे। परिधानाञ्चले। কাচা। ইং.च.। जलप्रान्ते। अम.।

**कच्छकाण्डनः** । पुं। अश्वत्थभेदे। গয়া অশ্বথ। [কাছা, কোঁচা। म.र.।

**कच्छ(च्छा,च्छो)टिका** । स्त्री। कच्छे।

**कच्छपः** । पुं। स्वनामख्यातजन्तुविशेषे। কাছিম, গুন্দি, কাঠা, বারকোল। मं कामठ। एतन्मांसगुणाः—वातहरं शुक्रदं चक्षुष्यं बल्यं मेधास्मृतिकरं पथ्यं शोषघ्नञ्च। तच्चर्म पित्तहरं। तत्पादः कफघ्नः। तदण्डं स्वादु वाजीकरञ्च। रा.नि.व.१९। "कच्छपो मधुरः स्वादुः शुक्रवृद्धिकरो मतः। वातश्लेष्मप्रजननी बृंहणी रुच एव च।" चक्रि.२२अ.। नन्दीवृक्षे। তুঁদ গাছ। रा.नि.व.१२। मदिरायन्त्रे। श.च.। श्लेष्मजन्यतालुरोगविशेषे। तत्र कूर्म्मवदुत्सन्नोऽवेदनः नातिशीघ्रोऽतिशीघ्रं जायते। "कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मारोगो ज्ञेयः कच्छपः श्लेष्मलः स्यात्।" भा.म.ख.४भ.मुखरो.चि.।

**कच्छपयन्त्रम्** । क्ली। औषधपाकयन्त्रविशेषे। लक्षणं—"जलपूर्णपात्रमध्ये दत्त्वा खर्परन्तु विस्तीर्णं। तदुपरि रसविह्निः स्थाप्यः सूतो मृदः कच्छाम्॥ लघुलौहकोटरिकया कृतपटुसन्धिलेपमाच्छाद्य। देया तदुपरि सिकता चैकाङ्गुलिपरिमापि॥ तत्खर्परं पूर्य्यं चाङ्गारकवनोपलैर्नोपचितम्॥" चक्रि.। "जलपूर्णपात्रमध्ये कृत्वा पुटकर्परं सुविस्तीर्णं। तदुपरि विड्मध्यगतः सूतः स्थाप्यः कोष्ठगो॥ लघुलौहकटोरिकया कृतपटुसन्धिमाच्छाद्य। पूर्णान्तरपुटखर्परमध्ये चाङ्गारैः खदिरकाष्ठभवैः॥ स्वेदनतो मर्द्दनतः कच्छपयन्त्रस्थितो रसो जयति।" इदमेव कच्छपयन्त्रं चाकण्ठभूनिवेशितं जलपात्रनिकासुखस्थितशरावे दत्त्वा रसमन्येन प्रकीर्णवदनेन सर्व्वमाच्छाद्य उपरि सिकताभिरङ्गुलिमानेनाच्छाद्य भूमिभागैः कुकुटपुटादधः कच्छपयन्त्रोऽयमीरितः।

**कच्छपिः** । पुं। क्षुद्ररोगे। तालुरोगे।

**कच्छपिका** । स्त्री। विषमुष्टौ। महानिम्बे। रा.नि.व.४। कृष्णनिर्गुण्ड्याम्। वै.निघ.। वातश्लेष्मजन्यप्रमेहपिटकानामक्षुद्ररोगविशेषे। "ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यां पिड़का ज्ञेया कच्छपिका बुधैः॥" इति निदा.। [পিকাঝাম্। মাদিকাছিম্। अम.।

**कच्छपी** । स्त्री। क्षुद्ररोगे। मे.षत्रिकं। कच्छ-

**कच्छपोलिः (का)** । स्त्री। जलवेतसे। वै.निघ.।

**कच्छरुहा** । स्त्री। दूर्व्वायाम्। जटा.। नागरमुस्तायां। "नागरोत्थाकच्छरुहा।" रा.नि.व.१३।

**कच्छा** । स्त्री। भद्रमुस्तायाम्। श्वेतदूर्व्वायाम्। चीरि(ड़ि)कायां। ঝিঁঝিঁ পোকা। वाराहीकन्दे। मे.छद्विकं। [दूर्व्वा। रा.नि.व.८।

**कच्छान्तरुहा** । स्त्री। श्वेतदूर्व्वायाम्। শ্বেত

**कच्छारुहा** । स्त्री। स्वर्णकेतक्याम्। वै.निघ.।

**कच्छालङ्कारकः** । पुं। कामठपे।

**कच्छुः (च्छूः)** । स्त्री। खर्जूरोगे। চুলকোনা। तल्लक्षणं—"सूक्ष्मा बहवः पिड़काः स्राववत्यः पामेत्युक्ताः कण्डुमत्यः सदाहाः। सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रास्फिचोश्च।" मा.नि.। [পাফলম্বপে। रा.नि.व.४।

**कच्छु(च्छू)घ्ना (घ्नी)** । स्त्री। पटोले। हबु-

**कच्छु(च्छू)मती** । स्त्री। शूकशिम्ब्यां। श.च.।

**कच्छु(च्छू)रः** । त्रि। कच्छूरोगयुक्ते। খোসরোগী। पुंश्चले। मे.रत्रिकं।

**कच्छु(च्छू)रा** । स्त्री। कपिकच्छौ। আলাকুশী। रा.नि.व.३। रक्तदुरालभायां। দুরালভাবিশেষ। कर्पूरशट्याम्। आम्रहरिद्रायाम्। महाबलायाम्।

**कच्छुरालः** । पुं। शेलुवृक्षे।

**कच्छुरी** । स्त्री। धातक्याम्। ধাই ফুল।

**कच्छेष्टः** । पुं। कच्छपे। रा.नि.व.१९। स्त्री। भद्रमुस्तायाम्।

**कच्छोत्था** । स्त्री। मुस्तायां। रा.नि.व.६।

**कच्छोरम्** । क्ली। शट्याम्। र.मा.।

**कजम्** । क्ली। कमले। अमृते। मे.जद्विकं।

**कज्जलम्** । क्ली। नीलकमले। अञ्जने। কাজল। इं.च.। त्रिका.सि.यो.कामला.चि.। पुं। कज्जल्याम्। चक्रि.।

**कज्जला (लिः) (लिका) (ली)** । स्त्री । मीनविशेषे । Sulphuret of mercury. (Aethiop's mineral.) मर्द्दितरसगन्धके कज्जलीति लोके । श.र. । "एषा कज्जलिकाख्याता हंहणी वीर्य्यवर्द्धनी । नानानुपानयोगेन सर्व्वव्याधिविनाशिनी ॥" वै.निघ.२भ. । "अपापवरसेनाथ वर्द्धमानरसेन च । रसं संशोधयेत्तेन तत्समं शोधयेद्बलिं ॥ भृङ्गराजरसैः पिष्टा शोधयेदर्करश्मिभिः । सप्तधा वा त्रिधा वापि पश्चाच्चूर्णञ्च कारयेत् । चूर्णयित्वा समं तेन रसेन सह मर्द्दयेत् । नष्टसूतं यदा चूर्णं भवेत्कज्जलसन्निभम् ॥" भा.म.१भ. । "शुद्धसूतं गन्धकञ्च समं सम्मर्द्दयेद्दिनं । निश्चन्द्रं कज्जलीभूतं ततो योगेषु योजयेत् ॥ पृथग्योगेषु यत्रोक्तौ समौ पारदगन्धकौ । तत्र भागद्वयं योज्यं कज्जलस्येति निश्चयः ॥ यावान् स्यादधिकः सूतात् तावत्तं गन्धकं पुनः । त्रिपेद्योगे विधानज्ञो नात्र कार्य्या विचारणा ॥ यत्र सूतोऽधिको योगे गन्धपाषाणतो भवेत् । तत्र तन्मानतः कुर्य्यादादावेव हि कज्जलं ॥" ऋचि. ।

**कच्चटः (ड़ः)** । पुं, क्ली । गजपिप्पल्याम् । वै.निघ. । जलतण्डुलीयापरनाम-स्वनामख्यातशाके । काँचड़ा दाम । र.मा. । हिं चवडाइभेद । कलोटिवाशाके । च.द.,सि.यो.कच्चटादिः । चौराइशाकभेदे । भा.म.१भ.अ.सा.चि. । गुणाः— धारकत्वं हिमत्वं पित्तरक्तनाशित्वं लघुत्वञ्च । राज. । वातहरत्वं तिक्तत्वञ्च । भा.पू.१भ.शा.व. । कच्चड़ो हि कच्चटभेदे । [पाठा] रस.र.ग्रहणीकवाटरसे ।

**कच्चटपत्रकम्** । क्ली । कच्चटच्छदे । काँचड़ा

**कच्चटपल्लवः** । पुं । कच्चटे । सि.यो.ग्रह.चि. जम्बादिः ।

**कच्चटादिः** । पुं । अतिसारे कषायविशेषे । अत्र कच्चटादीनां पत्रं ग्राह्यम् । "कच्चटदाड़िमजम्बूशृङ्गाटकपत्रह्रीवेरं । जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥" च.द.अ.सा. । काँचड़ा पाता, दाड़िमपाता, जामपाता, शिঙেড়া পাতা, বালা, মুতা, শুঁট, প্রত্যেকে ২৩ র. জল /॥० শ. শে. ৵० আদ পোয়া ।

**कच्चटावलेहः** । पुं । ग्रहण्यधिकारे—अत्र कच्चटस्य (কাঁচড়াদাম) १ श. तालमूल्याः १ श. जलं १६ श. शे. ४ श., क्वाथे शर्करा १ श. पक्का पादशिष्टे तत्र वराहक्रान्ताधातकीपाठाबिल्वपेशीपिप्पलीभङ्गापत्रातिविषायवक्षार-सौवर्च्चलरसाञ्जनमोचरसानां प्रत्येकं चूर्णं कर्षमितं दत्त्वा पाकशेषं कुर्य्यात् । शीते मधुनः कुडवार्द्धं देयम् । च.द. । सा.कौ. । কাঁচড়া ১ শ. তালমূলী ১ শ. জল ১৬ শ. শে. ৪ শ. চিনি ১ শ. পাক করত পাদশেষ হইলে তাহাতে বরাক্রান্তা, ধাইফুল, আকনাদি মূল, বেলশুঁটা, পিপুল, সিদ্ধি, আতইচ, যবক্ষার, সচল লবণ, রসাঞ্জন এবং মোচরস প্রত্যেকে চূর্ণ ২ তোলা দিয়া পাক শেষ করিবে। শীতল হইলে মধু ১ পোয়া দিবে ।

**कच्चनः** । पुं । काञ्चनद्रुमे । वै.निघ. ।

**कञ्चिका** । स्त्री । वेणुशाखायां । कञ्चि । श.च. । क्षुद्रस्फोटे । रा.नि.व.२० ।

**कञ्चुः (कः)** । पुं । सर्पत्वचि । সাপের খোলশ । हे.च. । उष्ट्रे । चोलके । কাঁচুলি । औषधविशेषे । मे.कचित्रः ।

**कञ्चुकशाकः** । पुं । शाकविशेषे । गुणाः— "कञ्चुकीशाकश्चत्रु वातला ग्राहिणी मता । पुष्टिकरी कफपित्तानां नाशिनी परिकीर्त्तिता ॥" वै.निघ. । [वै.निघ. ।

**कञ्चुका** । स्त्री । अश्वगन्धायाम् । कञ्चुकशाके ।

**कञ्चुकालुः** । पुं । सर्पे । कालसर्पे । কেউটে সাপ । श.च. ।

**कञ्चुकिः** । पुं । यवे । रा.नि.व.१६ ।

**कञ्चुकी** । पुं । चणकद्रुमे । सर्पे । यवे । रा.नि.व.१६ । जीङ्गकद्रुमे । मे.नचतुष्कं । तन्नामकदोषान्वितघोटके । लक्षणं यथा—"स्कन्धे बाहुसिवाहौ च अंसदेशे तथैव च । अन्यवर्णो भवेद्यस्मिन् कञ्चुकी सः प्रकीर्त्तितः ॥" ज.द.१अ. । स्त्री । चीरीशद्रुमे । र.मा. । কোঁচড়া । र.सा.सं. । उत्, चीरसागर । चीरकञ्चुकीति रस.र.वह्निभल्लातके, महाभल्लातकगुडे । मरपुङ्खायाम् । कञ्चुकशाके । औषधिविशेषे । मे. । [भाषा । हे.च.नाना. ।

**कञ्चुलिका** । स्त्री । अङ्गरक्षिकायाम् । काँचुलीति

**कञ्जः** । पुं । केशे । मे.जद्विकं । क्ली । अमृते

दृषे । वै.निघ. । [काञ्जला । श.च. ।

**कञ्जकः** । पुं । पक्षिविशेषे । मयना पाखि,

**कञ्जनः (लः)** । पुं । कञ्जकपक्षिणि । श.च. ।

**कञ्जमूलम्** । क्ली । कमलकन्दे । वै.निघ. ।

**कञ्जयोनिः** । पुं । ब्रह्मणि । कञ्जस्य पद्मस्य योनिरुत्पत्तिः । श.च. ।

**कञ्जरः** । पुं । गजे । केशे । स्त्री । धातक्याम् । पाटलायाम् । उदरे । मे.रत्रिकं । [हे.च. ।

**कञ्जलिका** । स्त्री । भस्त्रविशेषे । काँचुली ।

**कञ्जारः** । पुं । जठरे । गजे । मे.रत्रिकं ।

**कञ्जिकम्** । क्ली । काञ्जिके । च.टी.भ. ।

**कञ्जिका** । स्त्री। भार्ग्यां । बामुनहाटी । श.र.।

**काटः** । पुं । करिगण्डस्थले । किलिञ्जके । माडुर, दरमा, मरायेर बड़ । मे.टद्विकं । तृणे । धरणिः । कटिप्रदेशे । शवे । नले । समये । हे.च.। क्ली । अश्वचालनाय रचितभूमौ । ज.द.७अ. ।

**काटकः** । पुं, क्ली । सामुद्रलवणे । कड़कच । रत्ना.। पारिहार्य्ये । हारा. । हस्तिदन्तमण्डने । मे.कत्रिकं ।

**कटकी** । पुं । गजे । श.र. । [त्रिका. ।

**कटकोलः** । पुं । निष्ठीवनपात्रे । पिकदानि ।

**कटखदिरः** । पुं । काके । शृगाले । मे. ।

**कटखादकः** । पुं। काचलवणे । काचकलसे । बलिपुष्टे । जम्बुके । शेयाल । मे.कपञ्चकं ।

**कटङ्कटः** । पुं । अग्नौ । दारुहरिद्रायां । भैष. मु.रो.बृहत्खदिरवटी । [गाछ । द्रव्याभि. ।

**कटङ्कटा** । स्त्री । आम्रकुकवृक्षे । आछकुलेर

**कटङ्कटी** । स्त्री । दारुहरिद्रायाम् । वै.निघ. ।

**कटङ्कटेरी** । स्त्री । दारुहरिद्रायाम् । प.मु. । हरिद्रायाम् । त्रिका. ।

**कटपञ्चकम्** । क्ली । अश्वचालनाय पञ्चविधभूमिषु । एका मण्डलाकारा, द्वितीया चतुरस्रा, तृतीया गोमूत्रा, चतुर्थी अर्द्धचन्द्रा, पञ्चमी नागपाशा चेति । तदुक्तं नकुलेन । "धनुरष्टादशे योज्यं वाजिनां मण्डलं क्रमात् । सङ्कोचयेञ्चवं यावदाव-टकपञ्चकम । तदर्द्धं मण्डली योज्या गोमूत्रा तदनन्तरम् । ऋजुवर्त्मसु वर्त्मी च गोमूत्रा सर्व्वकर्म्मसु । युज्यमाना न हृश्यन्ते प्रायशो हि विपश्चिता ।" ज.द.७अ. ।

**कटप्रोथः** । पुं । स्फिचि । कट्याम् । श.चि. ।

**कटभङ्गः** । पुं । हस्तेन शस्यच्छेदे । हारा. । हाते शस्य तोला । शुण्डायां । त्रिका. ।

**कटभिः (भी)** । स्त्री । कण्टकशिरीषे । काँटाशिरीष । रत्ना. लताशिरीषे । श्वेत अपराजिता । प.मु. । लघुज्योतिष्मतीलतायाम् । लताफट्की । रा.नि.व.३,२३ । वै.निघ.२भ.उन्मा. चि.निशादिघृते। मुषल्यां । तालमूली । रा.नि. व.२३। अपराजितायाम् । अप.चि.स्मृतिसागररसे । क्रिणाहीत्यपरनामभेयवृक्षविशेषे । सा द्विविधा कृष्णश्वेतभेदेन । तयोः श्वेता पुनः महाक्षुद्रभेदेन द्विविधा । कृष्णाया गुणाः— कटूष्णा गुल्मघ्नी विषाध्मानशूलघ्नी वातकफाजीर्णहरी च । श्वेता ततः अधिकगुणयुक्ता । रा.नि.व.६ । "कटभी कटुका चोष्णा तुवरा तिक्तका मता । नाडीव्रणं रक्तकर्जं प्रमेहञ्च विषं क्रमीन् । श्वित्रकुष्ठं कफञ्चैव चिरदोषञ्च व्रणान्तथा । शिरोरोगमजीर्णञ्च नाशयेदिति कीर्त्तिता । फलञ्चास्या धातुवृद्धिकरं कफवर्द्धकञ्च । "निर्यासोऽस्या गुरुर्वृष्यो बल्यो वातविनाशनः ।" इति महाश्वेतकटभी-तत्फलनिर्यासगुणाः । "क्षुद्रा च कटभी चोष्णा कटुका कुष्ठहा मता । कफहा रक्तदोषघ्नी मेदोरोगहरा परा । नाडीव्रणं विषं मेहं क्रमींश्चैव विनाशयेत् । कटभीवत्फलगुणा ज्ञेयाः···।" क्षुद्रकटभीगुणाः । वै.निघ. । [चि. ।

**कटभीत्वक्** । स्त्री। कटभीवल्कले च.द.उन्मा.

**कटमालिनी** । स्त्री । मदिरायाम् । श.च. ।

**कटम्ब(भ)रा (टुम्भरा)** । स्त्री । कटुक्यां। कट्की । मे. । र.मा.भा.पू.१भ.गु.व.। कटभी महाली च । सि.यो.उन्मा.चि.श्रीकण्ठः । "कटम्भरा हविकाली ।" गन्धप्रसारण्यां । गन्धभादुलि। हस्तीवृक्षे । गोधायां। बध्यां । हारा.। श्योणाकवृक्षे। भा.पू.१भ.वने. । करिण्याम् । कलम्बिकायां । मूर्व्वायां । पुनर्णवायां । मे.रचतुष्कं । राजबलायां । भम. । महाबलायाम् । रा.नि.व.४ ।

**कटम्भरः** । पुं । श्योणाकवृक्षे । रा.नि.व.९ । कटभीवृक्षे । वै.निघ. ।

**कटशर्करा** । स्त्री । गाङ्गेरुकीलतायाम् । नटा इति गौड़े । हारा. । ओषधिविशेषे ।

**कटसारिका** स्त्री । झिण्टीसामान्ये । झाँटी। इि कटसरैया । भा.पू.१भ. ।

**कटाकुः** । पुं । पक्षिविशेषे । उणा. ।

**कटायनम्** । क्ली । वीरणे । বেণা । श.च. ।

**कटाहः** । पुं । कूर्म्मकर्परे । मे.हत्रिकं । जायमानविषाणाग्रभागे महिषशिशौ । हारा. । तैलपाकपात्रे । কড়া । श.च. । सूर्पे । त्रिका. ।

**कटाहकः** । पुं । मातुलुङ्गादेरभ्यन्तरस्थान्तर्भागे । আঁতি । चत्रि.सू.१७अ. । [रा.नि.व.१० ।

**कटाह्वयम्** । क्ली। पद्मकन्दे । পদ্মের গেঁড়ো।

**कटाक्षः** । अपाङ्गदृष्टौ । अम. । चक्षुस्त्र श्रङ्ग-कर्णयोरन्तरभागे । ज.द.२अ. ।

**कटिः** । पुं, स्त्री । श्रोण्याम् । কাঁকাল । रा.नि.व.१८ । कलत्रे । कास्याम् । कटीरे । हे.च. ।

**कटितटम्** । क्ली । नितम्बे ।

**कटित्रम्** । क्ली । रसनायाम् । मे.रत्रिकं ।

**कटिदेशः** । पुं । कट्याम् । কাঁকাল ।

**कटि(टी)प्रोथः** । पुं । स्फिचि । रा.नि.व.१८ । कटिदेशस्थमांसपिण्डे । পোঁদের পেলো । अम. । [मा. ।

**कटिरोहकः** । पुं । करिपश्चाद्भागारोहके । श.

**कटिल्लम्** । क्ली । कारवेल्लफले । भा.पू.१भ. ।

**कटिल्लकः** । पुं । कारवेल्लके । করলা । प.मु.। रक्तपुनर्नवायाम् । मे.कचतुष्कं । [हला. ।

**कटिशीर्षकः** । पुं । कटिदेशे । কাঁকাল ।

**कटिशूलः** । पुं । कटिदेशस्थे शूलरोगे । कुम्री इति भाषा । [মরের ঘুঁঘুর । हारा. ।

**कटिशृङ्खला** । स्त्री। कटिकिङ्किण्याम् । কো-

**कटी (इन्)** । पुं । हस्तिनि । खदिरवृक्षे । रा.नि.व.८ । स्त्री । श्रोणिफलके । কাঁকাল । अम.। पिप्पल्याम् । मे.टत्रिकं। स्फिक्प्रदेशे । रत्ना.।

**कटीकतरुणम्** । क्ली । नितम्बगर्त्तसन्धिमर्म्मणि । तत्स्थानं पृष्ठदण्डोभयतः जघनपार्श्वबहिर्भागे ईषन्नीचैः । पृष्ठवंशोभयतः प्रतिश्रोणीकाण्डं मर्म्मणी । अम. । सु.शा.६अ. ।

**कटीकपालम्** । क्ली । कटीफलके । त्रिका.२.॥

**कटीग्रहः** । पुं । कटीगतवातरोगे । কোমরের বাত । लक्षणं—"वायुः कट्याश्रितः स्तम्भः सामो वा जनयेद्रुजम् । कटिग्रहः स एवोक्तः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥" भा.म.१भ. ।

**कटीरः** । पुं, क्ली । जघनस्थले । जटा. । कटिदेशे । কাঁকাল । हे.च. । कटिपार्श्वे । भ.टी. ।

**कटीरकः** । नितम्बस्थले । रा.नि.व.१८ ।

**कटुः** । स्त्री । लतायाम् । राजिकायाम् । मे.टद्विकं । कटुकायाम् । কটকী । रा.नि.व.६ । कटुवल्ल्यां । লতাবিশেষ । रा.नि.व.३ । प्रियङ्गुवृक्षे । हे.च. । पुं । कटुपटोले । তিৎপলতা । वै.निघ.२भ.उन्मा.चि. । चम्पकवृक्षे । अर्कवृक्षे । श.च. । जलजतृणविशेषे । कुचकविषे । ছাতারিবিষ । श.र. । कुटजतरौ । राजसर्षपे । हारा. । चीनकर्पूरे । रा.नि.व.१२ । वाय्वग्निगुणभूयिष्ठे षड्रसान्यतमरसे । ঝালরস । मं तिखट् । स मरिचादौ व्यक्तः । रा.नि.व.२० । तस्य लक्षणं —"यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीते नासिकाश्च स्रावयति स कटुकः ।" सु.सू.४२अ. । अपि च "संवेदयेद्यो रसनां निपाते तुदतीव च । विदहन्मुखनासाक्षि संस्रावः स कटुः स्मृतः ॥" चर.। गुणाः—उष्णलघुरूक्षः मुखशोधनः प्राणाक्षिविरेचनः कृमिहरश्च । तद्विपाकोऽपि कटुः, तद्विपाकगुणाश्च वातला कफपित्तघ्ना वाय्वग्निगुणभूयिष्ठाश्च । सु.सू.४२अ. । कफकण्ठदोषशोफमन्दानिलश्वित्ररोगघ्नः। अतिसेवितश्चेत् चयवीर्य्यबलचयञ्च करोति । रा.नि.व.२० । कटुरुष्णश्च तीक्ष्णश्च विशदो वातपित्तकृत् श्लेष्मकृल्लघुरग्नेयः कृमिकण्डूविषापहः । रुचत्यन्यहरश्चापि मेदःस्थौल्यापकर्षणः । अभुदो नासिकास्याक्षिजिह्वायोद्वेजको मतः । दीपनः पाचनो रुच्यः नासिकाशोषणो भ्रमम् । क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषण इति मतान्तरम् । सोऽतियुक्तो भ्रान्तिदाहमुखताल्वोष्ठशोषकृत्… ॥" भा.म.१भ. । त्रि । कटुनि, तिक्तरसे । रत्ना. । सुगन्धे । मे. । दुर्गन्धे । तीक्ष्णे । भ.टी.स्वा. ।

**कटुकः** । पुं । तन्नामकरक्तपाके । सु.सू.४०अ. ।

কটুরসে। কটুপটোলে। বৈ.নিঘ.২ভ.জ্ব.চি.কটুফলাদৌ। সুগন্ধতৃণে। শ.র.। কুটজবৃক্ষে। অর্কবৃক্ষে। শ.চ.। আর্দ্রকে। রাজসর্ষপে। হারা.। লশুনে। মে.। ক্লী। ত্রিকটৌ। মে.কত্রিকং। মরিচে। রা.নি.ব.৬। ভা.প্র.১ভ.কণ্ঠকুব্জ.স.জ্ব.চি.। "কটুকট্‌ফলাম্ভোধরৈঃ।" কটুক্যাং। চ.দ.কফজ্ব.চি.। "কটুকং চিত্রকং নিম্বম্।"

**কটুকণ্টকঃ।** শাল্মলীবৃক্ষে। রা.নি.ব.৮।

**কটুকত্রয়ম্।** ক্লী। ত্রিকটৌ। চ.দ.জ্ব.চি. কবলধারণে। "সৈন্ধবং কটুকত্রয়ম্।"

**কটুকন্দঃ।** পুং। শিগ্রুবৃক্ষে। সজিনা গাছ। আর্দ্রকে। আদা। লশুনে। মে.দচতুষ্কং। ক্লী। মূলকে। মূলা। প.মু.।

**কটুকন্দরী।** স্ত্রী। গোবিন্দীতি কোঙ্কণে প্রসিদ্ধা। প্রা. বাঘেঁবী। গুণাঃ—"কটুকন্দরিকা চোষ্ণা তিক্তা বাতকফাপহা। বিসূচ্যাদীন্নাশয়তি।" বৈ.নিঘ.।

**কটুকফলম্।** ক্লী। কক্কোলকে। কাঁকোল। রা.নি.ব.১২। বৈ.নিঘ.২ভ.বা.ব্যা.। মহারাস্নাদৌ।

**কটুকরসঃ।** পুং। ষড্রসান্যতমরসবিশেষে। ঝালরস। See কটুঃ।

**কটুকরোহিণী।** স্ত্রী। কটুক্যাম্। কট্‌কী। বা.চি.১ভ.। পটোলাদৌ। "পত্রং কটুকরোহিণী।" চ.দ.জ্ব.চি.মুস্তাদ্যগণে। "বলাকটুকরোহিণী।"

**কটুকবর্গঃ।** পুং। কটুকদ্রব্যসমূহে। যথা— শিগ্রুমধুশিগ্রুমূলকলশুনসুমুখাসিতশিফকুষ্ঠদেবদারুহরেণুকাবল্গুজফলচণ্ডাগুগ্‌গুলুমুস্তলাঙ্গলিকাশুকনাসাপীলুপ্রভৃতীনি পিপ্পল্যাদিগণঃ সালসারাদিগণঃ সুরসাদিগণশ্চেতি। সজিনা, রক্তসজিনা, মূলা, রশুন, শ্বেততুলসী, মোরা, কুড়, দেবদারু, রেণুক, সোমরাজীবীজ, শঙ্খপুষ্পী, গুগ্‌গুল, মুতা, বিষলাঙ্গুলিয়া, শ্যোণাপাত এবং পীলু প্রভৃতিকে পিপ্পল্যাদি (পিপুল, পিপুলমূল, চই, চিত্রকমূল, শুঁট, মরিচ, গজপিপ্পলী, রেণুক, এলা, যমানী, ইন্দ্রযব, আক্‌নাদি, জীরক, সর্ষপ, ঘোড়ানিম্, মদনফল, হিঙ্গু, বামুনহাটী, মূর্গামূল, আতইচ, বচ, বিড়ঙ্গ এবং কট্‌কী), সুরসাদি (তুলসী, শ্বেত তুলসী, গন্ধপলাশ, বাবুইতুলসী, গন্ধতৃণ, মহাগন্ধতৃণ, রাইসরিষা, বনবাবুই, কাসমর্দ্দ, হেঁচেতা, বনতুলসী, বিড়ঙ্গ, কট্‌ফল, শ্বেতনিশিন্দা, নীলনিশিন্দা, কুকুরশোঁকা, ইন্দুরকাণী পানা, বামুনহাটী, কেউয়াবুঁটী, গুড়কাঁউলী, ঘোড়ানিম্) ও শালসারাদিগণকে (শাল, পিয়াশাল, খদির, শ্বেতখদির, বিট্‌খদির, শুপারি, ভূর্জপত্র, মেষশৃঙ্গী, তিন্দুক, চন্দন, রক্তচন্দন, শিশু, শিরীষ, বক, ধব, অর্জ্জুন, তাল, শেগুন, করঞ্জ, নাটাকরঞ্জ, কৃষ্ণাগুরু, অগুরু, লতাশাল) কটুকবর্গ কহে। সু.সূ.৪২অ.।

**কটুকবল্লী।** স্ত্রী। কটুকীনামলতাবিশেষে। কটুকা। তৈ রৈমহু। গুণাঃ—কটুঃ শীতা কফশ্বাসঘ্নী নানাজ্বরহরা রুচ্যা রাজযক্ষ্মঘ্নী। রা.নি.ব.৩।

**কটুকশর্করা।** স্ত্রী। পিত্তশ্লেষ্মজ্বরে কটুরোহিণীশর্করাযোগে। অত্র প্রত্যেকং তোলকমিতং। বৈদ্যপ্রসারকে কু.টী.। চক্রস্তু কটুরোহিণ্যা ১২ মা. সিতায়াশ্চ ৪ মা.।

**কটুকস্নেহঃ।** পুং। সর্ষপতৈলে। বৈ.নিঘ.।

**কটুকা(কী)।** স্ত্রী। (Picrorrhiza kurroa.) কটুক্যাম্। কট্‌কী। হিং কুটকী। তৈং নল্লকোলকর। কেদারকটুকীতি দাক্ষিণাত্যে প্রসিদ্ধা। রা.নি.ব.৬। "কটুকামুষ্ণবারিণা।" চ.দ.পিত্তশ্লেষ্মজ্ব.চি.। "সিতাং কটুকয়া যুক্তাং পীত্বা চোষ্ণেন বারিণা।" আয়ুর্ব্বেদসারে। গুণাঃ—সারকরুক্ষকফঘ্নী। রাজ.। তিক্তাতিকটুঃ শীতা পিত্তরক্তদাহবলাসারোচকঘ্নী চ। বা.। শ্বাসজ্বরভেদনী (অর্থাৎ) বদ্ধমবদ্ধং বা মলপিণ্ডিতং মলাদিকং ভিত্ত্বাধঃ পাতয়তি। চক্র.দ.। কটুঃ তিক্তা রুক্ষা শীতা লঘুঃ ভেদকা দীপনী হৃদয়গ্রাহী কফপিত্তজ্বরপ্রমেহশ্বাসকাসরক্তদাহকুষ্ঠকৃমিঘ্নী চ। ভা.পূ.১ভ.হ.ব.। কটুতুম্ব্যাম্। তিৎলাউ। ক্ষুদ্রচুঞ্চুপে। রা.নি.ব.২৪। পীতরোহিণ্যাং। নেপালপাষাণ ইতি লোকে। রত্না.। লতাকস্তূর্য্যাম্। চ.দ.বা.ব্যা.চি.।

**কটুকাখ্যা।** ক্লী। কটুক্যাম্। শ.।

**কটুকাদ্যলোহম্।** ক্লী। শোথাধিকারে।

पाठ:—"कटुकं चूषणं दन्ती विडङ्गं त्रिफला तथा। चित्रको देवदारुश्च त्रिवृद्धारणपिप्पली॥ चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयोरजः। चौरेण तु लयेतच्च श्रेष्ठं श्वयथुनाशनं॥ भैष.रस.र.शोथ.चि.। त्रिकटु, कटकी, दन्तीमूल, विडङ्ग, त्रिफला, চিতারমূল. দেবদারু, তেউড়ীমূল, গজপিপুল সমান ভাগ। সর্ব্বদ্বিগুণ লৌহচূর্ণ।

**कटुकापाली** । स्त्री । कण्टकपालीवृक्षे । কাঁটাগুড়কাঁডলী। रत्ना.। प.मु.।

**कटुकारोहिणी** । स्त्री । कटुकायां । रा.नि.व. ६ । च.द.पित्त.ज्व.चि.मृद्वीकादौ । "कटुकारोहिणी समा।" [लाउ। र.मा.।

**कटुकालाबु:** । पुं । तिक्ततुम्ब्याम् । তিৎ-

**कटुकीट:** (क:) । पुं। मशके । मशा॥ जटा.।

**कटुकाण:** । पुं । टिट्टिभे । তিতির পাখী। हे.च.।

**कटुग्रन्थि** । क्ली । पिप्पलीमूले । शुण्ठ्याम् । रा.नि.व.६ । लशुने । वै.निघ. । [हारा.।

**कटुङ्गता** । स्त्री । नित्यकर्मसमाचारनिष्ठुरत्वे ।

**कटुचातुर्जातकम्** । क्ली । समभागत्वगेलापत्रमरिचेषु । "एलात्वक्पत्रकैस्तुल्यैर्मरिचेन समन्वितैः। कटुपूर्व्वमिदञ्चान्याच्चातुर्जातकमुच्यते॥" रा.नि.व.२२ । [र्जके। गन्धतुलसी। वै.निघ.।

**कटुच्छद:** । पुं । तगरवृक्षे । श.र.। सुगन्धा

**कटुजीरक:** । पुं । जीरके । रा.नि.व.५ ।

**कटुता (त्वम्)** । स्त्री, क्ली । तीक्ष्णतायाम् । ঝাল। दौर्गन्ध्ये।

**कटुतिक्त:** (क:) । पुं । किराततिक्तके । চিরেতা। भा.पू.१भ.। महाशणवृक्षे। বড় শণ। शणक्षुपे। रा.नि.व.४।

**कटुतिक्त(क्ति)का** । स्त्री । महाशणे । प.मु.। कटुतुम्ब्याम्। তিৎলাউ। श.र.।

**कटुतिक्ता** । स्त्री । कटुतुम्ब्यां । তিৎলাউ। कटुतुम्ब्याम्। কটুতরুই বা তিৎপল্তা। रा. नि.व.३ । [श.च.।

**कटुतिन्दुक:** । पुं । कुचेलके । কুঁচিলা।

**कटुतुण्डिका (ण्डी)** । स्त्री । तिक्ततुण्ड्यां। কটুতরাই, তিৎপলতা, তেতকুন্দুরুকী। मं कं कडुतोंडली, कडितोंडे, तीतकुंदरु, वनटिंडुराकडुआ। गुणा:—कटुः तिक्ता कफवान्तिविषघ्नी अरोचकरक्तपित्तघ्नी रोचनी च। रा.नि. व.३ । विम्ब्याम्। তেলাকুচা।

**कटुतुम्बि(म्बी)का** । स्त्री। Wild variety of lagenaria vulgaris. तिक्तालाब्वाम्। তিৎলাউ। हिं कडुटुमिया, तुम्बी, तीत्लौकी। मं कं कडुभोंपला,कडुदुधी, कडिसोरे। तें चेतिआनव। गुणा:- पाण्डुकृमिकफवातनाशित्वं लघुपाकित्वञ्च। राज.। "कटुतुम्बी रसे पाके कटुर्वृष्या च शीतला। तिक्ता वान्तिकरी श्वासकासहृच्छोधनी मता। वातशोफव्रणविषशूलपित्तज्वरापहा। पक्वं पाके तु मधुरं मूत्रशोधनमुत्तमम्। पित्तशान्तिकरं ज्ञेयं फले पर्णसमा गुणा:॥" वै.निघ.। [व.३।

**कटुतुम्बिनी** । स्त्री । तिक्तालाब्वां। रा.नि.

**कटुतैलम्** । क्ली। सार्षपतैले। সরিষার তৈল। हिं कडुयातेल। मं शिरशेल। गुणा:—"कटु तिक्तं तथा ग्राहि उष्णं स्यात्कफवातनुत्। कृमिपाण्डुशोधनं स्यात्पित्तकृत्सार्षपं स्मृतम्। कर्णरोगे कृमिरोगे तथा वातामयेषु च। कण्डूकुष्ठामये चैव कफमेदोगुणेषु च। प्रशस्तं सार्षपञ्चैव रोगाणाञ्च विभावयेत्। वस्तिकर्म्मणि नो शस्तं पित्तदाहकरं महत्।" अत्रि.सू.१४अ.। कटूष्णं तीक्ष्णं लघु कफशुक्रानिलहरं पित्तास्रकोठकुष्ठार्शोव्रणजन्तुजिच्च। वा.टी.हेमा.तैलव.। "सार्षपं तिक्तकटूष्णं वातकफविकारघ्नम्। पित्तास्रदोषदं कृमिकुष्ठघ्नं तिलजवच्च चक्षुष्यम्॥" रा.नि.व.१५।

**कटुतैलमूर्च्छा** । स्त्री । सफेनतामतादिदोषनाशार्थमामतैलस्य पाकेन निष्फेनीकृतस्यावतार्य्य सजलहरिद्रादिवारिक्षेपेण शनैः शनैः शीतलीकरणे। तेन पाककाले स्फोत्याद्युपद्रवो न जायते। मूर्च्छाद्रव्याणि यथा—आमलकी हरिद्रा मुस्ता विल्वत्वक् दाड़िमत्वक् नागकेशरं कृष्णजीरकं वालकं नलुका बिभीतकञ्च। "वयस्था रजनीमुस्तविल्वदाड़िमकेशरैः। कृष्णजीरकह्रीवेरनलिकैः सबिभीतकैः॥ एतैः समांशैः प्रस्थे च कर्षमात्रं प्रयोजयेत्। अक्षयाविपलं तत्र तोयमाढ़कसम्मितम्। कटुतैलं पचेत्तेन आमदोषहरं परम्॥" भैष.ज्व.

वि.। তৈল ৪ শ. পাক করিয়া নিষ্ফেন হইলে, নামাইয়া অগ্রে মঞ্জলহরিদ্রা তাহার পর মঞ্জলমঞ্জিষ্ঠা তৎপরে অন্যান্য দ্রব্য ক্রমে ক্রমে প্রক্ষেপ দ্বারা উক্ত তৈলকে শনৈঃ শনৈঃ শীতল করিবে। পরে ১৬শ. জলে পাক করিবে। মঞ্জিষ্ঠা ২প. ও অন্যান্য দ্রব্য প্রত্যেকে ২ তো. দিবে।

**कटुत्रय(त्रिक)म्** । क्ली । त्रिकटुके । শুঁট, পিপুল, মরিচ । रा.नि.व.२२ । भा. ।

**कटुदला** । स्त्री । कर्कटिकायाम् । কাঁকুড় । रा.नि.व.७ ।

**कटुदुग्धिका** । स्त्री । तिक्तालाब्वां । वै.निघ.।

**कटुनिष्पाव:** । पुं। वदीनिष्पावधान्ये । श.च.।

**कटुपत्र: (क:)** । पुं । पर्पटे । ক্ষেৎপাবড়া। सितार्जके । শ্বেতপত্র ক্ষুদ্রতুলসী । रा.नि.व.५।

**कटुपत्रिका (त्री)** । स्त्री । लघुवृश्चुपे । कारीवृक्षे । रा.नि.व.८ ।

**कटुपर्णिका (र्णी)** । स्त्री। चीरिण्यां । यन्मूले चोक् इति उच्यते । "कटुपर्णी हैमवती हेमक्षीरी हिमावती । हैमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते । गुणा:—हैमाह्वा रेचनी तिक्ता भेदिन्युत्क्लेशकारिणी । कृमिकण्डूविषानाहकफपित्तास्रकुष्ठनुत् ॥" भा.म.१भ. ।

**कटुफल:** । पुं । पटोले । रा.नि.व.३ । कक्कोलवृक्षे ।श्वेतकर्कटिकायाम् । कारवेल्लके । क्ली । इन्द्रयवे । वै.निघ.२भ.वा.व्या. ।

**कटुफला** । स्त्री । श्रीवल्लीकण्टकवृक्षे । तिक्तालाब्वाम् । रा.नि.व.३ । वृहत्यां । कण्टकार्य्याम् । त्रिचोटके ।

**कटुभङ्ग:** । पुं । शुण्ठ्याम् । त्रिका. ।

**कटुभद्रम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ । आर्द्रके । भा.पू.१भ. ।

**कटुमञ्जरिक: (का)** । पुं, स्त्री । शुक्लापामार्गे । শ্বেত আপাং। रा.नि.व.४ ।

**कटुमूलम्** । क्ली । पिप्पलीमूले । रा.नि.व.६ ।

**कटुमोदम्** । क्ली । गन्धराजे৷ থাটাসী । रा.नि.व.१२ ।

**कटुम्भरा** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া । च.द.वा.व्या.एकादशशतिकप्रसारणीतैले ।

**कटुरम्** । क्ली । तक्रे । ঘোল । जटा. ।

**कटुरव:** । पुं । भेके । रा.नि.व.१९ ।

**कटुरा** । स्त्री। आर्द्रहरिद्रायां । কাঁচা হরিদ্রা।

**कटुरुणा** । स्त्री । चिह्नतायां । रत्ना. ।

**कटुरोहिणी** । स्त्री । कटुकायाम् । र.मा. । रा.नि.व.६। वा.सू.१५अ.पटोलादि: । च.द.पित्तज्व.चि.दुरालभादि: । "भूनिम्बवासा कटुरोहिणीनाम् ।" च.द.कफज्व.चि.मुस्तादि: । "त्रिफला कटुरोहिणी ।" अष्टाङ्गाङ्गकषाये । "पटोलं कटुरोहिणी ।" च.द.ज्व.चि.शठ्यादि: ।

**कटुलता** । स्त्री । कटुकायाम् । কটকী । भैष.।

**कटुवार्त्ताकी** । स्त्री । तिक्तवार्त्ताक्यां । তেতবেগুন । श्वेतकण्टकार्य्याम् । रा.नि.व.४। (कि-णी) । क्षुद्रवृहत्याम् । वै.निघ. ।

**कटुवाष्पिका** । स्त्री । महाराष्ट्र्याम् । प.मु. ।

**कटुविपाक:** । पुं । द्रव्यस्य पाककटुत्वे । तदाश्रयश्च कटुतिक्तकषायरसद्रव्यमात्रम् । कटुविपाकं बन्नु लघु वातलं शुक्रघ्नं कफपित्तघ्नञ्च । सु. सू.४०अ. ।

**कटुवीजा** । स्त्री । पिप्पल्यां । रा.नि.व.६ ।

**कटुवीरा** । स्त्री। (Capcici.) Capcicum. कुमरिचे । লঙ্কামরিচ, গাছমরিচ,ঝাল গাছ । हिं लालमरिच । गुणा:—"कटुवीराग्निजननी दाहिनी बलासघ्नी पजीर्णविसूचीव्रणक्लेदघ्नी तन्द्रामोहप्रलापस्वरभङ्गारोचकघ्नी । सन्निपातजडीभूतं छलेन्द्रियञ्च नरं जीवयति ।" पचि. ।

**कटुशृङ्गाट(ल)म्** । क्ली। चित्रकूटदेशप्रसिद्धगौरसुवर्णशाके । रा.नि.व.७ ।

**कटुस्नेह:** । पुं । (Sinapis dechotoma.) सर्षपवृक्षे । त्रिका. । कटुतैले । भैष.वाल.चि. । गौरसर्षपे । रा.नि.व.७ । [नि.व.७ । कर्कट्याम् ।

**कटुहुञ्ची** । स्त्री । कारवेल्ले। উচ্ছে গাছ । रा.

**कटूत्कट(क)म्** । क्ली । शुण्ठ्याम् । आर्द्रके । आद्य । र.मा. ।

**कट्दरी** । स्त्री । गोविन्दीति कोङ्कणे ख्याते क्षुपे । गुणाः---विसूचीघ्नी कटूष्णा कफवातहा । वै.निघ. ।

**कटूषणम् (णा)** । क्ली,स्त्री । पिप्पलीमूले । शुण्ठ्याम् । रा.नि.व.६ । पिप्पल्यां । वै.निघ. ।

**कटोरम्** । क्ली । मृत्पात्रे । কটরা । श्र.च. ।

**कटोरा** । स्त्री । स्वनामख्यातपात्रे । টাটী, কটরা । श्र.च. ।

**कटोलः** । पुं । कट्फले । उणा. ।

**कट्टरतैलम्** । क्ली । ज्वरे विदाहे च हितम् । मूर्च्छिततिलतैलं ४श्र. कल्कद्रव्याणि समभागानि १ श्र. तक्रं २४ श्र. यथाविधि पाच्यम् । सचललवणं शुण्ठी कुष्ठं मूर्वामूलं लाक्षा हरिद्रा मञ्जिष्ठा चेति द्रव्याणि । "सुवर्चिका नागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः । तैलं ज्वरे षड्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुच्च ।" वै.निघ. ।

**कट्तृणम्** । क्ली । गन्धतृणे । सि.यो.वा.व्या.चि.माषबलादिः । सुगन्धरोहिषतृणे । रामकर्पूर । वा.उ.३७अ. । See कतृणम् ।

**कट्फलः** । पुं (Myrica sapida.) स्वनामख्यातवृक्षे । কট্ফল, কট্ছাল । हिं कायफर । मं कं कायफल, किरुसिवलि । तं पापरवुडम । प.मु. । र.मा. । गुणाः—कटुः उष्णः कासश्वासज्वरघ्न उग्रदाहहरः रुच्यः मुखरोगशान्तिकरश्च । रा.नि.व.६ । सु.सू.३८अ.लोध्रादि.ड. । सु.सू.३८सुरसादौ.ड. । वार्त्ताकवृक्षे । वै.निघ. । क्ली । कट्फले । गुणाः—तुवरं तिक्तं कटु वातकफज्वरघ्नं श्वासार्शःप्रमेहकासकण्ठामयारुचिघ्नञ्च । भा. । मद.व.१ । सि.यो.कफज्वरावलेहे । वा.सू.१५अ. । परूषकादौ अरुणः । "कट्फलं कतकाफलम् ।" वा.सू.१५अ.रोध्रादि.अरुणः । "जिङ्गिनीसरलकट्फलयुक्ताः ।" वा.सू.१५अ.सुरसादिः । "खरबुसहयकर्णौ कट्फलं कासमर्द्दः ।" च.द.पित्त.ज्व.कलिङ्गादिः । "कलिङ्गकट्फलं मुस्तम् ।" कङ्कोले । रा.नि.व.१२ ।

**कट्फला** । स्त्री । गाम्भारीवृक्षे । र.मा. । रा.नि.व.९ । उदुम्बर्यां । काकमाच्याम् । वार्त्ताक्यां । रा.नि.व.४ । देवदाल्यां । দেবতাড়া । रा.नि.व.३ । श्रीपर्ण्यांवृक्षे । रा.नि.व.७ ।

**कट्फलादिः** । पुं । कासरोगे कषायविशेषे । पाठः—"कट्फलं कतृणं भार्गीं मुस्तं धान्यं वचाभया । शृङ्गी पर्पटकं शुण्ठी सुराह्वञ्च जले शृतं । मधुहिङ्गुयुतं पेयम्… ॥" अत्र प्रक्षेप्यहिङ्गुमधुनोर्मानः । उत्तमादौ पलांशादिकं देयम् । माषिकं हिङ्गुसिन्धूत्थमित्यादि परिभाषावचनात् । च.द.कास.चि. ।

**कट्फलादिपानम्** । क्ली । दीर्घकालानुबन्धिज्वरे । गुणाः—त्रिदोषदाहतृष्णाघ्नम् । कट्फलं त्रिफला देवदारु रक्तचन्दनं परूषकफलं (फलसा) कटुकी पद्मकाष्ठं उशीरञ्चेति द्रव्याणि एषां प्र.१६ रक्तिकं वारि २श्र शे. १ श्र. । भा.म.१भ.ज्व.चि. ।

**कट्वङ्गः** । पुं । तिन्दुकवृक्षे । তেঁদ গাছ । वा.टी.वत्सकादिगणे.हेमाद्रिः । श्योणाकवृक्षे । শোণাপাতা । रा.नि.व.९ । भैष.स्त्रीरो.पुष्यानुगचूर्णे । च.सू.४अ.२१दशके । वै.निघ.अप.चि.कटभ्यादितैले । वा.सू.३५अ.अम्बष्ठादौ । "कट्वङ्गः कमलोद्भवं रजः ।" सु.सू.३८अम्बष्ठादिः । क्ली । टुण्टुकफले । শোণা ফল । "कट्वङ्गफलाजमोद… ।"

**कट्वम्बरा** । स्त्री । प्रसारण्याम् । ज.द. ।

**कट्वरम्** । क्ली । Butter-milk. दधिकूर्चिकायां । दधिसरे । र.मा. । तक्रे । 'तक्रं कट्वरमिष्यते ।' प.प्र.३ख. । व्यञ्जने । उणा. ।

**कट्वरतैलम्** । क्ली । See कट्टरतैलम् ।

**कट्वी** । स्त्री । कटुक्यां । কট্কী । रा.नि.व.६ । वै.निघ.२भ.कण्ठकुष्ठज्व.चि. । भैष.कुष्ठ.चि.भल्लातकगुडे । सु.सू.४०अ. । कटुकवल्लयां । কটুকী-লতাবিশেষ । रा.नि.व.३ ।

**कठरः** । त्रि । कठिने । जटा. ।

**कठा** । स्त्री । करिण्याम् । श्र.च. ।

**कठाकुः** । पुं । पक्षिणि । •

**कठाहकः** । पुं । A gallinule. दात्यूहपक्षिणि । श्र.र. । [वै.निघ. ।

**कठिका** । क्ली । तुलसीवृक्षे । खटिकायाम् ।

**कठिञ्जरः** । पुं । (Ocymum sanctum.) पर्णासवृक्षे । कृष्णतुलसी वृक्षः । रा.नि.वै.१० । पर्णासे । কাল তুলসী । भा.पू.१भ.पु.व. ।

**कठिनम्** । क्ली । यवान्यशाकीविकटभुम्बिका-दिद्रव्येषु । श.च. । स्थाल्याम् । त्रि । सञ्जे । मे.।

**कठिनपृष्ठ:(क:)** । पुं । कूर्म्मे । रा.नि.व.१८।

**कठिनफल:** । पुं । कपित्थवृक्षे । रा.नि.व.११।

**कठिना** । स्त्री । गुडशर्करायाम् । मे.नत्रिकं । काकोदुम्बरिकायाम् । रा.नि.व.११ । [हारा. ।

**कठिनिका** । स्त्री । खटिकायाम् । थड़ी ।

**कठिनी (का:)** । स्त्री, पुं । खटिकायाम् । थड़ी । र.मा. । प.मु.,त्रिका. । मे.नत्रिकं ।

**कठिनोपल:** । पुं । कौसुम्भीशाली । शालिधान्यविशेष । रा.नि.व.१६ ।

**कठिल्ल: (क:)** । पुं । कारवेल्लके । करला, उच्छे । प.मु.। भा.पू.१भ.। कर्कटे । काँकरोल, वनकाँकरोल । प.मु..च.चि.१७. । "कर्कटोऽरण्यसम्भूत: कठिल्ल: शठघातक: ।" वै.निघ. । पुनर्नवायाम्। रा.नि.व.५। भैष.मध्यनारायणतैले । रक्तपुनर्नवायां । भा.पू.१भ.। तुलसीवृक्षे । त्रिका.।

**कठिल्ल(ल्लि)का** । स्त्री । (Momordica chanartia.) कारवेल्लवृक्षे । उच्छे गाछ। तुलस्यां । रक्तपुनर्नवायां । गादापुण्ये । ज.द.११ष.।

**कठोर: (ल:)** । त्रि । कठिने । भ.टी.। [मा.।

**कडकम्** । क्ली । सामुद्रलवणे । कड़कच । र.

**कडङ्गर:** । पुं । तुषे । वै.निघ. ।

**कडङ्ग:** । पुं । सुराविशेषे । उणा. ।

**कडङ्गर:** । पुं । तुषे । तुष, आगड़ा । हे.च.।

**कडम्ब: (क:)** । पुं । कलम्बिशाके । शाकनाड़िकायाम् । डाँटा । See कलम्बी ।

**कडम्बी(म्बुका)** । स्त्री। कलम्बीशाके । श.र.।

**कडार:** । पुं। पिङ्गलवर्णे । अम.। [रा.नि.व.७।

**कडुची** । स्त्री। क्षुद्रकारवेल्ले । छोट उच्छे।

**कण:** । पुं । पिप्पल्यां । वा.सू.१५ष.शोधनव. । "कणलवणयवैला···।" कणोऽतिसूक्ष्मे धान्यांशे । मे.णद्विकं। लेशे । हे.च.। वनजीरके । रा.नि.व.६।

**कणगुग्गुलु:** । पुं । श्वेतजीरके । खनामख्यातगुग्गुली । गुग्गुलविशेष, कणगुग्गुल । गुणा: —कटूष्ण: सुरभि: वातघ्न: शूलगुल्मोदराध्मानकफघ्न: रसायनश्च । रा.नि.व.१२ ।

**कणजिह्विका** । स्त्री । महासमङ्गायाम् । बड़ बेलेड़ा । सारिवायाम् । बहुपुत्रिकायाम् । शतमूली वा भूँइ आमला । रा.नि.व.२३ ।

**कणजीर: (कम्)** । पुं, क्ली । शुक्लजीरके । मद.व.२ । क्षुद्रजीरके । श.च. । रा.नि.व.६ ।

**कणजीर्णा** । स्त्री । श्वेतजीरके । रा.नि.व.६ ।

**कणनिर्यास:** । पुं । गुग्गुलौ । रत्ना. ।

**कणप्रिय:** । पुं । मल्लचटके । वै.निघ. ।

**कणभ:** । पुं । पुष्पवृक्षविशेषे । गुनछिया । रत्ना. । तन्नामककीटे । तद्दष्टलक्षणम् विसर्प: श्वयथु: शूलं ज्वरश्छर्दिरथापि च । लक्षणं कणभैर्दष्टे दंशश्चैवावसीदति ॥ मा.नि. । अग्निप्रकृतिकीटविशेषे । तेन दष्टे पित्तजरोगा भवन्ति । अन्यजातीयकीटे । स चतुर्विध:—"त्रिकण्टक: कुणी हस्तिकक्ष: अपराजितश्चेति । तैर्दष्टस्य श्वयथुरङ्गमर्द्दो गुरुता गात्राणां दंश: कृष्णता च भवति । सु.कल्प. ८ष. । [पि । वाबुई, डाबुई । रा.नि.व.१६ ।

**कणभक्षक:** । पुं । श्यामचटके । भारिटपक्षि-

**कणमूलम्** । क्ली। पिप्पलीमूले। पञ्चतिक्तघृते।

**कणाह्वी** । स्त्री । लताशिरीषे । प.मु. ।

**कणा** । स्त्री । पिप्पल्याम् । प.मु.रा.नि.व.६ । जीरके, शुक्लजीरके, कृष्णजीरके । भा.पू.१भ. । कुम्भीरमक्षिकायाम् । कुमीरे पोका । हारा. । "कणा जीरककुम्भीरमक्षिकापिप्पलीषु च ।" मे.णत्रिकं । [भ.अजीर्णवड़वानलचूर्णे ।

**कणाजटा** । स्त्री । पिप्पलीमूले । वै.निघ.२

**कणाटीन: (र:, क:)** । पुं । खञ्जनपक्षिणि । त्रिका. । श.र. ।

**कणादिगण:** । पुं । पिप्पल्यादिगणे । स च —पिप्पलीपिप्पलीमूलचव्यचित्रकनागरं । मरिचैलाजमोदेन्द्रपाठारेणुकजीरकम् । भार्गीमहानिम्बफलं हिङ्गु रोहिणिसर्षपम् । विडङ्गातिविषे मूर्वा चेत्यर्थं कीर्त्तितो गण: ॥ च.द.कफज्व.चि. ।

**कणादिवटी** । स्त्री। श्लीपदाधिकारे । "कणाकणादावपुनर्नवानां चूर्णं सविल्वं समहद्दारकम् ।

(तस्यार्द्ध चैतस्य निहन्ति वक्त्र: समाक्षिकः श्लीपद-ग्रुवेगम् ॥'' पिপুল, বচ. দেবদারু, শ্বেত-গুঞ্জা, বেলছাল, বৃদ্ধদারকবীজ প্রত্যেকে চূর্ণ সমভাগ। মাত্রা ৩ রতি। অনুপান কাঁজি। र.सा.सं.।

**कणादीप्य:** । पुं । श्वेतजीरके । रा.नि.व.६ ।

**कणाद्यलौहम्** । क्ली । अतिसाराधिकारे । योगरत्नाकरस्य । अत्र "त्रिवर्गत्रितयेन चेति ।" त्रिकटुत्रिमदत्रिफलाभिः । र.सा.सं. । "कणाना-गरपाठाभिस्त्रिवर्गहितयेन च । बिल्वचन्दनह्रीवेरैः समं लौहं प्रदापयेत् । सर्व्वातीसारशमनः संग्रह ग्रहणीहरः ॥'' त्रिवर्गहितयं त्रिमदत्रिफले । পি-পুল, শুঁট, পাঠা, আমলা, বহেড়া, হরীত-কী, মুতা, চিতে, বিড়ঙ্গ, রক্তচন্দন, বেল-শুঁটা, বালা সমভাগ। সমচূর্ণ সমান লৌহ। জলে মর্দ্দন। रस र. । र.चि.८अ. ।

**कणाह्वा** । स्त्री । श्वेतजीरके । रा.नि.व.६ ।

**कणिक:** । पुं । पिपपल्याम् । शुष्कगोधूमचूर्णे । रा.नि.व.१६ ।

**कणिका** । स्त्री । अग्निमन्थवृक्षे । अतिमूक्षवस्तु-नि । मे.कत्रिकं । ' शुष्कगोधूमचूर्णन्तु कणिका स-मुदाहृता ।'' रा.नि.व.१६ कणायां । तण्डुलवि-शेषे । अ टी.रा. ।

**कणितम्** । क्ली । आर्त्तनादे । हे.च. ।

**कणिशम्** । क्ली । शस्यमञ्जर्य्याम् । धान्यादिर शीष । अम. । हे.च. । [कायां । अ.टी.भ. ।

**कणी** । स्त्री । हयकण्ठलतायाम् । श.र. । कणि

**कणीची** । स्त्री । गुञ्जायाम् । किरांचीति ख्या-तायाम् । पुष्पितलतायाम् । शटके । मे.चत्रिकं ।

**कणेर:** । पुं । कर्णिकारवृक्षे । কনকে ফুল, চীনের করবী । उणा. ।

**कणेरा** । स्त्री । हस्तिन्याम् । श.च. ।

**कणेरु:** । पुं । कर्णिकारवृक्षे । मे. ।

**कण्ट:** । पुं । वकुलवृक्षे ।

**कण्टक:** । पुं. क्ली । गोक्षुरक्षुपे । रा.नि.व.४। मदनवृक्षे । मयनाकाঁটা । रत्ना. । मत्स्यादिकीक-शे । मৎস্যাদির কাঁটা । द्रुमाङ्गे । গাছের কাঁটা । मे.कत्रिकं । विल्ववृक्षे । इङ्गुदीवृक्षे । वनमुद्गे । पू-गानी । वर्ब्बूरकवृक्षे । বাবলা গাছ । रोमाञ्चे । चिका. । पद्मबीजे । वेणौ । हे.च. ।

**कण्टककरञ्ज:** । पुं । करञ्जभेदे । কাঁটাক-রঞ্জ, গেঁটেকরঞ্জ । अ.टी.भ. ।

**कण्टककिंशुक:** । पुं । कण्टकीपारिजाते । পালিধামান্দার । मं পাঙ্গারা । वै.निघ. ।

**कण्टकच्छद:** । पुं । श्वेतकेतकवृक्षे । वै.निघ. ।

**कण्टकत्रयम्** । क्ली । कण्टकारीत्रये । रा.नि. व.२२ । बृहती कण्टिकारी गोक्षुरश्च । गुणा:— "कण्टकत्रितयं प्रोक्तं त्रिदोषभ्रमनाशकम् । ज्वरं पित्तञ्च हिक्काञ्च तन्द्रालापञ्च नाशयेत् ।'' वै.निघ. । See कण्टकारीत्रयम् ।

**कण्टकदला** । स्त्री । केतकीवृक्षे । वै.निघ. ।

**कण्टकद्रुम:** । पुं । शाल्मलीवृक्षे । रा.नि.व. ८ । खदिरवृक्षे । र.मा. ।

**कण्टकपञ्चमूलम्** । क्ली । स्वल्पमहत्तृणवल्ली-कण्टकसंज्ञकपञ्चमूलेषु । सि.यो.तृष्णा.चि.श्रीकण्ठ: । सु.सू.३८अ.,चि १७अ.विसर्परोगे । एतत्तु पक्वाश-यशोधनं वातकफहरञ्च । करमर्द्दगोक्षुरहिंस्राभि-ण्टीशतावरीषु । "करमर्द्दः श्वदंष्ट्रा च हिंस्रा भि-ण्टी शतावरी । कण्टकाद्यं पञ्चमूलम्" प.प्र.शख. । हिंस्रा কেলেকড়া । "रक्तपित्तहरं शोथश्लेष्मकफचय-विनाशनम् सर्व्वमेहहरञ्चैव शुक्रदोषविनाशनम् ।" सु.सू.३८अ. ।

**कण्टकपाली** । स्त्री (Caparis sepiaria) स्वनामख्यातवृक्षे । কালিয়া কড়া । हिं हिनस् । प.मु. । [नि.व.५ । कण्टसैवत्याम् । वै.निघ. ।

**कण्टकप्रावृता** । स्त्री । घृतकुमार्य्याम् । रा.

**कण्टकफल:** (ला) । पुं, स्त्री । पनसवृक्षे । কাঁঠাল গাছ । अ.टी.भ. । गोक्षुरे । र.मा. । कण्टकार्य्याम् । एरण्डवृक्षे । धुस्तूरवृक्षे । देवदा-ल्याम् । कुसुम्भवृक्षे । शृङ्गाटकीवृक्षे । करञ्जवृक्षे ।

**कण्टकभुक्** । पुं । उष्ट्रे ।

**कण्टकलता** । स्त्री । त्रपुषायां । कर्कटिकायां ।

**कण्टकवृन्ताकी** । स्त्री । वार्त्ताकीवृक्षे । বে-গুন গাছ । रा.नि.व.७ । [शल्लकीमृगे । शल्लक ।

**कमलोत्तरम् ।** क्ली । कुसुम्भपुष्पे । है.च. ।
**कमोदपुष्पम् ।** क्ली । जलपुष्पविशेषे ।
**कम्पः** । पुं । वेपथौ । रा.नि.व.२० ।
**कम्पनः** । पुं, क्ली । कम्पे । मे.नत्रिकं । शिशिरकाले । रा.नि.व.२१ । तन्नामकश्लेष्मोल्बणसन्निपातज्वरे । लक्षणम्—"जड़ता गद्गदा वाणी राची निद्रा भवत्यपि । प्रसक्ते नयने चैव सुखमाधुर्य्यमेव च । कफोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ।...कम्पनसंज्ञकः ॥" भा.म.ख.१भा. ।
**कम्पलक्ष्मा ।** स्त्री । वायौ । श.र. ।
**कम्पवायुः** । पुं । वायुरोगविशेषे । "सर्व्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः ।" मा.नि. ।
**कम्पाकः** । पुं । वायौ । है.च. । [युक्ते ।
**कम्पितम् ।** क्ली । चलने । श.र. । त्रि । कम्प-
**कम्पिलः** । पुं । श्वेतत्रिवृतायाम् । वै.निघ.२भ.
**कम्पिला ।** स्त्री । कुमार्य्याम् । घृतकुमारी ।
**कम्पिल्लः (कः)** । पुं । रेणुवद्गुण्डारोचन्याम् । कमलागुँड़ि । र.मा. । रा.नि.व.१३ । रञ्जनके । वा.सू.१५अ विरेचने । कुङ्कुमे । च.द.ज्व.चि.सुखादिगणे । "नीलीकम्पिल्लकं त्रिवृत् । कम्पिल्लको रोचनिकः स्वनामख्यातः" । ड. ।
**कम्पिल्लमालकः ।** पुं । वकुलभेदे ।
**कम्प्रः** । त्रि । कम्पयुक्ते । अम. ।
**कम्बलः** । पुं । लोणिकाशाके । वनशुनिया । प.मु. । मेषादिरोमजातवस्त्रादौ । कम्बल । अम. । सास्नायाम् । रत्ना. । नागराजे । कृमौ । उत्तरासङ्गे । मे.लत्रिकं । मृगभेदे । जटा. क्ली । जले । मे.लत्रिकं ।
**कम्बलिवाह्यकम् ।** क्ली । वृषवाह्यशकटे । गरुर गाड़ी । अम. ।
**कम्बिः** । स्त्री । दर्व्व्याम् । श.च. । वंशांशे । बाँशेर पाब । मे.बत्रिकं । वंशाङ्कुरे ।
**कम्बुः (कः)** । पुं, क्ली । शङ्खे । शाँक । रा.नि.व.१३ । शम्बूके । वलये । गजे । मे.बत्रिकं । शोणितवद्वनायाम् । ग्रीवायां । नलके । नलि, हाड़ । है.च. । मानभेदे ।

**कम्बुककुसुमा ।** स्त्री । शङ्खपुष्प्याम् ।
**कम्बुका ।** स्त्री । अश्वगन्धावृक्षे । र.मा. ।
**कम्बुकाष्ठा ।** स्त्री । अश्वगन्धाक्षुपे । रा.नि.व.४ ।
**कम्बुग्रीवा** स्त्री । शङ्खाकृतिरेखात्रयाढ्यग्रीवायाम् । रा.नि.व.१८ । [व.३ ।
**कम्बुपुष्पी ।** स्त्री । शङ्खपुष्पीलतायां । रा.नि.
**कम्बुमालिनी ।** स्त्री । शङ्खपुष्पीलतायाम् । रा.नि.व.३ ।
**कम्बूः** । स्त्री । शङ्खे । वलये ।
**कम्बूपूतः ।** पुं । शङ्खे । शाँक । रा.नि.व.१३ ।
**कम्बोजः** । पुं । शङ्खविशेषे । हस्तिविशेषे मे. जत्रिकं ।
**कम्बुातायी(इन्)** । पुं । शङ्खचिल्ले ।
**कम्भारी ।** स्त्री । गाम्भार्य्यां । गामर गाछ । रा.नि.व.९ ।
**कम्भु** क्ली । उशीरे । रा.नि.व.१२ ।
**कम्रः** । त्रि । मैथुनेच्छायुक्ते । अम. ।
**कयस्था ।** स्त्री । हरीतक्यां । काकोल्यां । अ. टी.स्वा. । सूक्ष्मैलायां । च.द.उन्मा.चि.महापैशाचघृते ।
**कयाहः** । पुं । पक्वतालसदृशवर्णाश्वे । लक्षणं यथा—"पक्वतालनिभो वाजी कयाहः परिकीर्त्तितः ।" ज.द.३अ. ।
**करः** । पुं । आहुल्यक्षुपे । तवरड़ इति काश्मीरे रा.नि.व.४ । वर्षोपले । रश्मौ । पाणौ । शुण्डादण्डे । मे.रद्विकं । हस्ते । रा.नि.व.१८ ।
**करकः** । पुं । दाड़िम्बवृक्षे । रा.नि.व.११ । पलाशवृक्षे । हारा. । वकुलवृक्षे । कोविदारवृक्षे । रक्तकाञ्चनवृक्ष । रा.नि.व.१० । See काञ्चनारः । करवीरवृक्षे । रा.नि.व.८ । नारिकेलास्थिनि । माला । रा.नि.व.११ । नाटा इति प्रसिद्धे करञ्जवृक्षे । है.च. । कुसुम्भवृक्षे । पक्षिविशेषे । मे. कत्रिकं । क्ली । करङ्के । गोमयच्छत्रे । विका. ।
**करकचः** । पुं । नखे । वै.निघ. ।
**करकटः** । पुं । भरद्वाजपक्षिणि । वै.निघ. ।

**कारकण्टकः** । पुं । नखे । त्रिका. ।

**कारकशालिः** । पुं । रसालिधौ ।

**करका** । स्त्री । कारवल्लाम् । करला । रा.नि. व.७ । वर्षोपले । अम. ।

**कारकाजलम्** । क्ली । दिव्यजलमेदे । "दिव्य-वायुग्निसंयोगात्संहताः खात्पतन्ति याः । पाषाण-खण्डवच्चापस्ताः कारक्योऽमृतोपमाः ॥ कारकाजं जलं रूक्षं विशदं गुरु च स्थिरं । दारुणं शीतलं सान्द्रं पित्तहृत्कफवायुकृत् ॥" वैद्यके ।

**कारकाम्बु** । क्ली । करकजले । वै.निघ. ।

**कारकाम्भाः** । पुं । नारिकेलवृक्षे । त्रिका. । क्ली । करकजले ।

**कारकुड्मलम्** । क्ली । कराङ्गुली ।

**कारकृष्णा** । स्त्री । जीरके । वै.निघ. ।

**कारग्रहः** । पुं । विवाहे । त्रिका. । करग्रहणे ।

**करघर्षणः** । पुं । दधिमन्थनदण्डे । श.च. ।

**करघर्षी** । पुं । क्षुद्रमन्थानदण्डे । छोट मउनि । हिं छोटीरयी ।

**करघाटः** । पुं । तन्नामकस्थावरविषमेदे यस्य त्वचि निर्यासे च विषं वर्त्तते । अयं मूलविषोऽप्युच्यते । सु.कल्प.२अ. ।

**करङ्कः** । पुं । मस्तके । विश्व.कश्चिकं । अग्रस्थनारिकेलफलास्थिनि । नारिकेलेर खोल, माला । श.च. । कङ्काले । रा.नि.व.१८ ।

**करङ्कशालिः** । पुं । करङ्कनामेधौ । मं रस दालि । कं रसालउंस । गुणाः—मधुरः शीतलः रुचिकृत् मृदुः पित्तघ्नः दाहहरः हृद्यः तेजोबलवर्द्धनश्च । रा.नि.व.१४ ।

**करङ्कीभूतः** । त्रि । अस्थिमात्रेण स्थितः । भा. म.४अ.गर्भ.चि. । "करङ्कीभूतगोमूर्द्धा ।"

**करच्छदः** । पुं । शाखोटवृक्षे । शेओड़ा गाछ । हिं सिहोड़ा । भा. । [शाकतरौ ।

**करच्छदा** । स्त्री । सिन्दूरपुष्प्यां । रा.नि.व.१० ।

**करजः** । पुं । करञ्जवृक्षे । डहरकरञ्ज गाछ । नखे । क्ली । व्याघ्रनखे । नखी । मे.जत्रिकं । [रत्ना. ।

**करजाख्यः** । पुं । नखीनामगन्धद्रव्ये । नखी ।

**करञ्जोड़िः** । पुं । हस्तजोड़िमहाकन्दशाके । हाड़जोड़ी । रा.नि.व.७ । काष्ठपाषाणभेदे ।

**करञ्जोड़िकन्दः** । पुं । तन्नामकहस्तकन्दे । एषां गुणः रसबन्धकृद्वश्यकृच्च । रा.नि.व.७ ।

**करञ्जः (कः)** । पुं । (Pangamia glabra Syn. galedupa Indica.) स्वनामख्यातवृक्षे । वृहत् करञ्ज गाछ, डहरकरञ्ज गाछ । हिं करँजुवा करोंदा । कण्टकरेजी । तें कानुगचेट्टु । स च षड्विधः—तत्रैकः डहरकरञ्ज, द्वितीयः नाटाकरञ्ज. तृतीयः काँटा वा गेँटेकरञ्ज, चतुर्थः गाकुड़ाकरञ्ज, पञ्चमः विषकरञ्ज, शेषः अम्लकरञ्ज इति वङ्गे कथ्यते । कण्टकरेजाकरञ्जः । घीराकरञ्जः । भा. । तत्र प्रथमस्य पर्य्यायः—चिरविल्लो नक्तमालः करजश्च करञ्जके । द्वितीयस्य यथा—प्रकीर्य्यः पूतिकरञ्जः पूतिकः कलिकारकः । तृतीयस्य—षड्ग्रन्थः । चतुर्थस्य—मर्कटी । पञ्चमस्य—अङ्गारवल्लरी । षष्ठस्य—करमर्द्दी वनेचुद्रा कराम्लः करमर्द्दकः इति । गुणाः—कटुकः तीक्ष्णः वीर्य्योष्णः अनिलघ्नः कुष्ठोदावर्त्तगुल्मार्शोव्रणकृमिकफघ्नः । करञ्जपत्रं कफवातार्शःकृमिशोथहरं भेदनं पाककटुकं वीर्य्योष्णं पित्तलं लघु च । तत्फलं कफवातघ्नं मेहार्शःकृमिकुष्ठघ्नञ्च । घृतपूर्णकरञ्जोऽपि करञ्जसदृशो गुणैः । भा.पू.१भ.गु. व. । तत्पुष्पं—उष्णवीर्य्यं पित्तवातकफघ्नञ्च । तदङ्कुराः—अग्निदीपना रसे पाके च कटुकाः पाचनाः कफवातार्शःकुष्ठकृमिविषघ्नाः शोथहराश्च । वै. निघ. । केचित्तु महाकरञ्जघृतकरञ्जपूतिकरञ्जगुच्छकरञ्जकराञ्जिकादिभेदानाह । तेषां गुणाः स्वस्वपर्य्याये मृग्याः । भृङ्गराजे । जटा. । करञ्जफले । सि.यो.वृहदग्निमुखचूर्णे ।

**करञ्जतैलम्** । क्ली । तन्नामकफलोत्थतैले । करञ्जतैल । गुणाः—तिक्तं नात्युष्णञ्च । वा.टी. । नेत्ररोगघ्नं वातरोगघ्नं तीक्ष्णमुष्णं कुष्ठकण्डूतिविचर्च्चिकाहरं लेपेन नानाविधचर्म्मरोगघ्नञ्च । रा.नि. व.१५ । क्रिमिघ्नं कृमिघ्नं रुचिपित्तदोषकरञ्च । राज. ।

**करञ्जद्वय(युग्म)म्** । क्ली । डहरकरञ्ज, नाटाकरञ्ज इति द्वये । "एकश्चिरविल्वः, द्वितीयः कण्टकीविटपकरञ्जः ।" द्वयविटपकरञ्जौ । सु.सू.

१८अ.उ.श्यामादि: । सि.यो.उमा.चि. । "कर-ञ्जौ देवदारु च।" (एक: पूतिकरञ्जश्चिरबिल्वाख्य:, द्वितीय: नक्तमालाख्य:।) वा.सू.१५अ.आरग्वधादि:। "भूनिम्बसैर्य्यकपटोलकरञ्जयुग्मम्।" [नि.व.११ ।

**करञ्जफल:(क:)** । पुं । कपित्थवृक्षे । रा.

**करञ्जस्नेह:** । पुं । करञ्जतैले । रा.नि.व.९ । See करञ्जतैलम् ।

**करञ्जाद्यघृतम्** । क्ली । उपदंशे । पाठ:—"करञ्जनिम्बार्ज्जुनशालजम्बूवटादिभि: कल्ककषायसिद्धं । सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम्।" वटादीनां त्वक्कषायेन तेषामेव कल्केन तैलं पाच्यं। तैलं ४ श. क्वाथ्यद्रव्यं ४ श. जलं ६४ श. शे. १६ श. कल्क: १ श. । च.द. ।

**करञ्जिका** । स्त्री । কাঁটাকরঞ্জ इति लोके । गुणा:—कण्टयुक्त: करञ्जस्तु पाके कटुश्च तूवर: । ग्राहकश्चोष्णवीर्य्य: स्यात्तिक्त: प्रोक्तश्च मेहहा । कुष्ठार्शोव्रणवातानां क्रमीणां नाशन: पर: । पुष्पन्तु वीर्य्ये चोष्णं स्यात्तिक्तं वातकफापहम् ॥ वै.निघ. । नक्तमालफले । सु.चि.२अ.सद्योव्रणे ।

**करञ्जी** । स्त्री । महाकरञ्जे । श.च. । ডহরকরঞ্জ । हिं भरारि । गुणा:—स्तम्भनी तिक्ता तुवरी कटुपाका वीर्य्योष्णा पित्तार्शोविषक्रिमिकुष्ठप्रमेहघ्नी च । भा.पू.१भ. । करञ्जवर्गाम् ।

**करट: (क:)** । पुं । कुसुम्भवृक्षे । रत्ना. । करिगण्डस्थले । हला. । वायसे । मे. । [ब्रह्मि.चि. ।

**करटवी** । स्त्री । वृचमूषिकायाम् । रस.र.षष्ठ

**करटा** । स्त्री । दु:खदोह्यायां गवि । हे.च. ।

**करटी(टिनी)** । पुं, स्त्री । हस्तिनि । हस्तिन्याम् । हे.च. । [हे.च. ।

**करटु:** । पुं । कर्करेटुपक्षिणि । কর্কটিয়া পক্ষী।

**करण:** । पुं । अम्लीरवृक्षे । हला. । क्ली । हेतौ। गात्रे । विषयेन्द्रिये । "क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च । कायस्थे साधने क्लीवम्।" मे.णत्रिकं।

**करणत्राणम्** । क्ली । मस्तके । हे.च. ।

**करणाधिप:** । पुं । जीवे ।

**करण्टक:** । पुं । पद्मकन्दे । [सु. ।

**करण्डु:** । पुं । लोणिकाशाके । वनसूनिम्बा । प.

**करण्ड:** । पुं । मधुकोषे । মৌচাক । दलाढके। करण्डायां । ফুলের সাজি । मे.डत्रिकं । कारण्डवपक्षिणि । हारा. । [नि.व.११ ।

**करण्डफल: (क:)** । पुं । कपित्थवृक्षे । रा.

**करण्डा** । स्त्री । यकृति । कालखण्डे ।

**करण्डी (इन्)** । पुं । मत्स्ये । त्रिका. ।

**करतल:** । पुं । हस्ततले । হাতের তেলো । हिं हथेली । "ऊर्द्ध करतले स्मृतं।" रा.नि.व.१८।

**करतलम्** । क्ली । श्वेतकेतके ।

**करतोयम्** । क्ली । वर्षोपलजले । শীলের জল।

**करद्रुम:** । पुं । कारस्करवृक्षे । কুঁচিলা । रा. नि.व.९ ।

**करपत्रम्** । क्ली । क्रकचास्त्रे । করাত, কাঁচি। सु.सू.८अ. । तत्र छेदनलेखनकर्म्मणि प्रयुज्यते । यथा—"भिदैऽस्या करपत्रन्तु खरधारं दशाङ्गुलं । विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तमत्सरुबन्धनम्" ॥ अचि. ।

**करपत्रवान्** । पुं । तालवृक्षे । श.च ।

**करपत्रिका** । स्त्री । जलक्रीडायाम् । जटा. । तिलपर्ण्याम् । [खे । रा.नि.व.८ ।

**करपर्ण:** । पुं । भिण्डावृक्षे । रा.नि.व४। रक्तैर-

**करपल्लव:** । पुं । अङ्गुलौ । शब्दकल्प. ।

**करपात्रम् (त्रिका)** । क्ली, स्त्री । जलक्रीडायाम् । हारा. । [भ.टी.सा. ।

**करपा(बा)लिका** । स्त्री । एकधारास्त्रे ।

**करबडावल्ली** । स्त्री । अत्यम्लपर्ण्याम् । हिं वल्लीपूरण । रा.नि.व.३ ।

**करबाल:** । पुं । नखे । श.मा. । खड्गे ।

**करभ:** । पुं । गजपिप्पल्यां । प.मु. । उष्ट्रे । रत्ना । उष्ट्रशावके । सूर्य्यावर्त्ते । गजशिशौ । भ.टी. सा. । करिशुण्डे । नखीनामगन्धद्रव्ये । रा.नि.व.१२। Seeनख: । मणिबन्धात् कनिष्ठाङ्गुलिपर्य्यन्तहस्तबहिर्भागे । मे. भत्रिकं । [रा.नि.व.१० ।

**करभकाण्डिका** । स्त्री । उष्ट्रकाण्डिवृक्षे ।

**करभञ्जि(ण्डि)का** । स्त्री । महाकरञ्जे । ডহরকরঞ্জ । हिं भरारि । भा.पू.१भ. । लताकरञ्जे ।

**करभप्रियः** । पुं । क्षुद्रपीलुवृक्षे ।

**करभप्रिया** । स्त्री । दुरालभायां । क्षुद्रदुरालभायां । रा.नि.व.४ । [रा.नि.व.११ ।

**करभवल्लभः** । पुं । कपित्थवृक्षे । क्षुद्रपीलुवृक्षे ।

**करभवारुणी** । स्त्री। उष्ट्रकाष्टवागुल्मो। "स्थितं करभवारुणी ।" रस.र.वाजी. ।

**करभा** । स्त्री । वृश्चिकाल्यां । विछाति गाछ । रा.नि.व.९ । [भार्या । रा.नि.व.४ ।

**करभादनिका (नी)** । स्त्री । क्षुद्रदुराल

**करभी(इन्)**। पुं,स्त्री(भी) । हस्तिनि । उष्ट्र्यां । भा.म. ३भ.मू.घा.चि. । क्षुद्रमेषशृङ्ग्याम् । श्वेतापराजितायां ।

**करभीरः** । पुं । सिंहे । श.र. ।

**करमट्टः** । पुं । गुवाकवृक्षे । त्रिका. ।

**करमध्यम्** । क्ली । कर्षे, २ तो. । प.प्र.१ख. ।

**करमर्द्दः** । पाणीयामलकवृक्षे । पाणीयामला । भटी.सा.। करम्चा । हिं करौंदा इति च भाषा । मं कं करवन्दे, करिजिगे । रा.नि.व.११ । स द्विविधो महाक्षुद्रभेदेन । गुणाः—"करमर्द्दफलञ्चामं तिक्ताग्निप्रदीपकं । गुरु पित्तकरं ग्राहि चाम्लमुष्णं रुचिप्रदं। रक्तपित्तं कफञ्चैव वर्द्धयेत्तृड्नाशकम् । तत्पक्वं मधुरं रुच्यं लघुशीतञ्च पित्तहं । रक्तपित्तं त्रिदोषञ्च विषं वातञ्च नाशयेत् । तच्छुष्कं पक्कसदृशं गुणैर्ज्ञेयं विचक्षणैः । अत्यम्लस्य गुणाश्चैव ज्ञेयामकरवन्दवत्" ॥ वै.निघ. । "पिपासाघ्नं गुरु रुचिकरं पित्तकरञ्च" । राज. । 'करमर्द्दद्वयं त्वाममम्लं गुरु तृषापहं । उष्णं रुचिकरम्पक्वं रक्तपित्तकफप्रदम् । तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित्" ॥ भा. । च.सू.४अ. ।

**करमर्द्दकः (का)** । पुं, स्त्री । करमर्द्दवृक्षे । लताविशेषे ।

**करमर्द्दिका** । स्त्री । पर्व्वतजद्राक्षासदृश्याम् । करौंदीति लोके ख्यातायाम् । द्राक्षा पर्व्वतजा याहक् तादृशी करमर्द्दिका । भा.पू.१भ.आम्रादिव. ।

**करमर्द्दी** । पुं, स्त्री । करञ्जवृक्षे । करमर्द्दवृक्षे । रत्ना. ।

**करमालः** । पुं । खतमाले । धूमे । हे.च. ।

**करमूलम्** । क्ली । मणिबन्धे । रा.नि.व.१८ ।

**करम्बी** । स्त्री । कलम्बीशाके । See कलम्बी ।

**करम्भः** । पुं दधिसक्तुनि । प.मु. उत्तमारणीति । वा.सू.१५अ.वीरतरादिः अरुणः । "भल्लूकमीरटकुरण्टकरम्भपार्थाः ।" क्ली । तन्नामकलक्षारनिर्यासस्थावरविषे । प्रियङ्गुफले । इदं स्थावरविषान्तर्गतफलविषं । पुष्पविशेषश्च । सु.कल्प.२अ. । See फलविषम् । [मिश्रितसक्तुनि । हारा.।

**करम्भकः** । पुं । श्वेतकिणिह्याम् । क्ली । दधि-

**करम्भा** । स्त्री । शतावर्य्याम् । प्रियङ्गौ । रा.नि.व.१२ । इन्दीवरायां । रा.नि.व.३ ।

**कररी** । स्त्री । करिदन्तमूले । हला. ।

**करुहः** । पुं । नखे । रा.नि.व.१८ । नखीनामगन्धद्रव्ये । नखीति भाषा । रा.नि.व.१२ । See नखः । अगर्व्वादिधूपे । वै.निघ.२भ. ।

**कररेखा** । स्त्री । करस्थरेखायाम् । "रेखाः सामुद्रिके ज्ञेयाः शुभाशुभनिवेदकाः ।" रा.नि.व.१८ ।

**करलः** । पुं । कपित्थवृक्षे ।

**करवालिका** । स्त्री । करपालिकायाम् ।

**करवी** । स्त्री । हिङ्गुपत्र्याम् । तें कोपपु । भा.पू.१भ.गु.व.। यमान्यां। राजिकायां । सु.सू.४६अ.।

**करवी(र)भुजा** । स्त्री । आढकीवृक्षे । आईडी । रा.नि.व.१६ ।

**करवीरः** । पुं । (Nerium odorum.) Sweet-scented oleander. उपविषजातीयस्वनामख्यातवृक्षे । करवी गाछ । हिं कर्णली । मं कण्हेर, कह्लेर । कं वाफणलिंगे । तें गन्नेरु । स चतुर्धा श्वेतरक्तपीतकृष्णभेदेन । तत्र श्वेतकरवीरगुणाः—कटुः तीक्ष्णः कुष्ठकण्डूघ्नः व्रणविस्फविस्फोटघ्नः हयवृद्धिप्रदश्च । रा.नि.व.१० । सु.सू.३९अ. शिरोविरेचने । रक्तवर्णः शोधकः स्यात्कटुः पाके च तिक्तकः । कुष्ठादिनाशको लेपात् इति रक्तगुणाः । निघण्टौ पाटलभेद उक्तः—अथ पाटलवर्णकः । शीर्षपीडां कफं वातं नाशयेदिति कीर्त्तितः । रक्तादिचतुर्भेदगुणाः श्वेतद्वयारिवत् । वै.निघ. । अर्जुनवृक्षे । मुखाढकीवृक्षे । टोंडोर

कनार गाछ। प.मु.। हिङ्गुपत्रे। सोमलताभेदे। सु.चि.२९अ.। See सोम:।

**करवीरक:** । पुं । श्वेतकरवीरवृक्षे । तन्मूलविषे । हे.च. । अर्जुनवृक्षे । रा.नि.व.९ ।

**करवीरकन्दसंज्ञ:** । पुं, क्ली । A species of onion or bulb. तैलकन्दे । पलाण्डुविशेष । रा.नि.व.७ ।

**करवीरका** । स्त्री । मन:शिलायां । वै.निघ. ।

**करवीरणी** । स्त्री । करवीरणी ककरखिरणी इति कोङ्कणदेशप्रसिद्धे पुष्पवृक्षविशेषे । या रक्तपुष्पा ग्रीष्मे जायते । गुणा:—"तिक्ता चोष्णा च कटी च कफवातविषापहा । आध्मानवातं छर्द्दिंच ऊर्द्ध्वश्वासकृमीन्नयेत् । इत्येवं करवीरण्या गुणा: प्रोक्ता:"··· । वै.निघ. । रा.नि.व.१० ।

**करवीरभुजा** । स्त्री । आढक्याम् । हिं रहर । रा.नि.व.१६ ।

**करवीराद्यतैलम्** । क्ली । भगन्दराधिकारे तैलम् । पाठ:—"करवीरनिशादन्तीलाङ्गलीलवणाग्निभि: । मातुलुङ्गार्कवत्साह्वै: पचेत्तैलं भगन्दरे॥" तिलतैलं ४श. करवीरादिकल्क: १श. वारि १६ श. एकत्र पाच्यम् । च.द., रस.र. । अन्यत् नासारोगे—"रक्तकरवीरपुष्पं जात्यास्तथाशनमल्लिकायाश्च । एतै: समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥" च.द. । अशन: पीतशाले (पियाशाल) । पाक: पूर्ववत् । [वै.निघ. ।

**करवीरानुजा** । स्त्री । आढक्यां । हिं रहर ।

**करवीरिका** । स्त्री । मन:शिलायां । र.सा.सं. ।

**करवीर्य्य:** । पुं । चिकित्सकविशेषे ।

**करशाखा** । स्त्री । अङ्गुल्यौ । रा.नि.व.१८ ।

**करशीकर:** । पुं । वमने । करिशुण्डनिर्गतजलकणे । हला. ।

**करशूक:** । पुं । नखे । त्रिका. ।

**करशोथ:** । पुं । (Oedematous swelling of hand.) हस्तशोथे । हातेर कज्ज फोला । [लवण । रखा. ।

**करसम्भवम्** । क्ली । रोमकलवणे । साम्भरि

**करसाद:** । पुं । हस्तदौर्बल्ये ।

**करहाट:** (क:) । पुं । मदनवृक्षे । प.मु., रा.नि.व.८ । योगरत्न.उ,ख.केशरपाके.सु.कल्प७अ. । महापिण्डीतरौ । रा.नि.व.९ । सु.चि.१८अ. । पद्मकन्दे । मे. । अकर्कराया । आकरकरा । श्वेतमदने । वै.निघ. ।

**कराग्रम्** । क्ली । करिपुष्करे । हला. ।

**कराग्रपल्लव:** । पुं । अङ्गुल्यौ ।

**कराघात:** । पुं । वज्राङ्गुल्यौ ।

**कराङ्गणम्** । क्ली । हट्टे । हारा. ।

**कराचीन:** । पुं । खञ्जने । हिरूपकोष: ।

**करामर्द्द:** । पुं । करमर्द्दकवृक्षे । श.र. ।

**करामुक:** । पुं । पानीयामलकवृक्षे । श.च. ।

**कराम्ल:** (क:) । पुं । करमर्द्दकवृक्षे । प.मु. ।

**करायिका** । स्त्री । पक्षिभेदे । क्षुद्रबके । वै.निघ. ।

**कराल:** (क:) । पुं,क्ली । पर्णासे । कृष्णतुलसी । प.मु. । भा.पू.१भ. । त्रि । दन्तुरे, तुङ्गे, भीषणे । पुं । सर्ज्जरसतैले । गर्ज्जनतेल । मे.लत्रिकं । तन्नामकदन्तरोगे दन्तोपरिदन्तोद्भेदनरूपे । দাঁতের উপর দাঁত ওঠা । तल्लक्षणम्—शनै: शनै: प्रकुरुते वायुर्दन्तसमाश्रित: । करालान् विकटान् दन्तान् करालो न च सिध्यति ॥ मा.नि. । कस्तूरीमृगे । सु.सू.४६अ. । गुणा:—जङ्गलवत् । क्ली । कृष्णार्जके । कृष्णवर्व्वूरके । तैलेन घृतेन वा कृते वेसवारे । इति पाकराज: ।

**करालकलिक:** । पुं । कुन्दपुष्पवृक्षे । प.मु. ।

**करालाङ्कम्** । क्ली । विडङ्गे । वै.निघ. ।

**करालत्रिपुटा** । स्त्री । लङ्कानामशिम्बीधान्ये । তেওড়া ধান । रा.नि.व.१६ ।

**कराला** । स्त्री । अनन्तमूली । অনন্তমূল । प.मु. । विडङ्गायाम् ।

**करालास्य:** । त्रि । दन्तुरवदने ।

**करालिक:** । पुं । वृक्षे । हे.च. ।

**कराली** । स्त्री । अग्निजिह्वायाम् । पुं । (लिङ्) महादोषान्वितास्थि । यस्य नीचत ऊर्द्ध्वं वा एको दन्तुरो दन्तो जायते स कराली । ज.द.३अ. ।

**करिक:** । पुं । विट्खदिरे ।

**करिकणा** । स्त्री । गजपिप्पल्याम् । भैष. श्वासी.कामेश्वरमोदके । [চই গাছ । रा.नि.व.६ ।

**करिकणावल्ली** । स्त्री । चविकालतायाम् ।

**करिकर्णपलाश:** । पुं । हस्तिकर्णपलाशे । भैष.च.पि.सर्व्वतोभद्ररसे ।

**करिकवल:** । पुं । विधाने । हारा. ।

**करिका** । स्त्री । कारीदृचे । কণ্টিকারী । रा.नि.व.८ । नखक्षते ।

**करिकुम्भ:** । पुं । गजकुम्भे ।

**करिकुम्भक:** । पुं । नागकेशरचूर्णे । हारा. ।

**करिकुसुम्भ:** । पुं । नागकेशरवृचे । नागकेशरचूर्णे । हारा. ।

**करिकृष्णा** । स्त्री । गजपिप्पल्याम् ।

**करिकेसरम्** । क्ली । नागकेसरे । वै.निघ.श्वासचि.चन्द्रावलेहे ।

**करिचर्म्म** । क्ली । गजचर्म्मणि ।

**करिज:** । पुं । गजशावके । श.मा. ।

**करिणी** । स्त्री । हस्तिन्याम् । अम. ।

**करिदन्त:** । पुं । गजदन्ते ।

**करिदन्ताभम्** । क्ली । मूलके ।

**करिदमन:** । पुं । नागदमने । নাগদনা । भैष.स्त्रीरोगचि. ।

**करिदारक:** । पुं । सिंहे । श.र. ।

**करिनासिका** । स्त्री । यन्त्रविशेषे ;

**करिपत्र(क)म्** । क्ली । तालीशपत्रे । তালীশপত্র । रा.नि.व.६ ।

**करिपिप्पली** । स्त्री । गजपिप्पल्याम् । গজপিঁপুল । प.मु. । भा.पू.१भ. ।

**करिपोत:** । पुं । करिशावके । हला. ।

**करिभ:** । पुं । अश्वत्थवृचे । चैत्यवृचे । त्रिका. ।

**करिमाचल:** । पुं । गजमाचले । सिंहे । त्रिका. ।

**करियाद:** । क्ली । जलहस्तिनि ।

**करिर:** । पुं,क्ली । वंशाङ्कुरे । বাঁশের কোঁড় । चरणगुल्मे ।

**करिशावक:** । पुं । दशवर्षपर्य्यन्तहस्तिशिशौ । श.मा. ।

**करिस्कन्ध:** । पुं । गजासङ्घले ।

**करी** (इन्) । पुं । हस्तिनि । रत्ना. ।

**करीर:** । पुं, क्ली । वंशाङ्कुरे । বাঁশের কোঁড় । गुणा:—कटुतिक्ताम्लं कषायं लघु शीतलं पित्तरक्तदाहकफघ्नं रुचिकरञ्च । एतत्सर्व्वं निर्गुणं । रा.नि.व.७ । (Capparisaphylla.)मरुजे वृक्षविशेषे । करील, कचड़ा इति लोके । मं नेपती । कं निष्पतिमि । तं एतुगदलमनुमोदतु । रा.नि.व.८ । गुणा:—"करीरमाध्मानकरं कषायं कटूष्णं शीतलकफकारि भूरि । श्वासानिलारोचकसर्व्वशूलहृदर्शिखर्णूव्रणदोषहारि ।" रा.नि.व.८ । गुणभेदि श्लेष्मलञ्च । मद.व.७ । श्लेष्माग्निलं कषायत्वं दाहजनकत्वञ्च । राज. । घटे । मे. । क्ली । करीरफले ।

**करीरकुणा:** । पुं । करीरफलकाले । [ख्यातफले ।

**करीरफलम्** । क्ली । करीरवीजे, টাঁট্ इति

**करीरा** । स्त्री । हस्तिदन्तमूले । चीरिकायाम् । ঝিঁঝিঁ পোকা । त्रिका. । मन:शिलायाम् । हे.च. ।

**करीरिका** । स्त्री । हस्तिदन्तमूले । त्रिका. ।

**करीरी** । स्त्री । हस्तिदन्तमूले । चीरिकायाम् । मे.रचिकं ।

**करीष:** । पुं, क्ली । शुष्कगोमये । वनभवकरीषा । বিলঘ্যাটা । सि.यो.मदा.चि. । 'वन्यकरीषघ्राणात् जलपानात् ।" [গুল । हारा. ।

**करीषाग्नि:** । पुं । गोमयाग्नौ । ঘুঁটের আ-

**करुण:** । फलितवृचे । करुणस्तु रसे वृचे । मे. । मल्लिकावृचे । हे.च. । (Citrus Decumana.) स्वनामख्यातनिम्बुकवृचे । করুণালেবুর গাছ । प.मु. । गुणा:—कफवातामभेदोघ्नं पित्तकोपनञ्च । राज.१प. ।

**करुण(णा)मल्ली** । स्त्री । The plant Jasminum Sambac. नवमल्लिकायाम् । श.च. ।

**करुणा** । स्त्री । दयायाम् । हृगवाचे । वै.निघ. ।

**करुणी** । स्त्री । पीतपुष्पायाम् । पुष्पवृचविशेषे । रा.नि.व.१० । See करवीरणी ।

**करुषकम्** । क्ली । फलविशेषे ।

**करेटः** । पुं । नखे । त्रिका. । [त्रिका. ।

**करेटव्या** । स्त्री । धनच्छूपक्षिणि । धानसपक्षी ।

**करेटुः (कः)** । पुं । कर्कटेरौ । कर्कटिया पाखी । रत्ना. । नखे । त्रिका. ।

**करेडुकः** । पुं । करेटुपक्षिणि । कर्कटे ।

**करेणुः(कः)** । पुं । गजे । स्त्री । हस्तिन्यां । मे.णत्रिकं । कर्णिकारवृक्षे । विश्व. । महौषधिविशेषे । सक्षीरगजाकारकन्दवृक्षविशेषे । यथा— करेणुः सवहक्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥ सा च सोमरसतुल्यगुणा । सु.चि.३०अ. । See औषधिः ।

**करेणुजन्** । क्ली । कर्णिकारफले । तत्र विषमस्तीति ज्ञेयम् ।

**करेणुभूः** । पुं । पालकाख्यमुनौ । त्रिका. ।

**करेणुसुतः** । पुं । पालकमुनौ । त्रिका. ।

**करेनरः (वरः)** । पुं । मूषिके । सिह्लके । शिलारस । वै.निघ. । रा.नि.व.१२ ।

**करोटः (टिः,का,टी)** । पुं, स्त्री । शिरोऽस्थिनि । रा.नि.व.१८ ।

**करोद्देजनः** । पुं । कृष्णसर्षपे । वै.निघ. ।

**कर्कः** । पुं । शुक्लवर्णाश्वे । ज.द. । कुलीरके । दर्पणे । घटे । मे.कद्विकं कर्कटवृक्षे । काँकरोल । रा.नि.व.११ । कङ्कपक्षिणि । मानभेदे । वृक्षविशेषे । काके । शिरोऽवचालने । हे.च. । कर्कारे । वदरीवृक्षे । विल्ववृक्षे । गन्धके । वै.निघ.२भ.यवणीकवाटरसे । अग्नौ ।

**कर्कचिर्भिटिका (टी)** । स्त्री । Small cocumber. चिर्भिटायाम् । कर्कटीभेदे । रा.नि.व.७ । [टकम् ।

**कर्कटम्** । क्ली । विषभेदे । प.मु. । See कर्क-

**कर्कटः** । पुं । The Numidian crane. कर्करेटी । कर्कटि पाखी । गुणाः—वातघ्नः शुक्रप्रदः श्रमघ्नश्च । अत्रि.२२अ. । स्वनामख्यातवृक्षे । काँकरोल । तत्फलगुणाः—रुच्यं कषायं अतिदीपनं कफपित्तकरं ग्राहि चक्षुष्यं लघु शीतलञ्च । रा.नि.व.११ । शाल्मलीफले । वालुक्याम् । मे.टत्रिकं । कुलीरके । सामुद्रकर्कटे । च.द.वा.व्या. एलादितैले । सन्निपातविशेषे । See कर्कटकः । पद्मकन्दे । जटा. । विल्ववृक्षे । रस.र.वालचि. । गोक्षुरे । कर्कटशृङ्गे । काँकड़ाशृङ्गी । च.द.वा.व्या.एकादशशतिकमहाप्रसारणीतैले ।

**कर्कटकम्** । क्ली । काण्डभग्नमामास्थिभङ्गविशेषे । तत्र "संमूढ़मुभयतोऽस्थि मध्यभग्नं ग्रन्थिरिवोन्नतम् ।" सु.नि.१५अ. । See भग्नम् । त्रयोदशविधस्थावरकन्दविषान्यतमविषे । सु.कल्प.२अ. । See कन्दविषम् ।

**कर्कटकः** । पुं । इन्दौ । रा.नि.व.१४ । कर्कटे । काँकड़ा । रत्ना. । गुणाः—कर्कटः सृष्टविण्मूत्रः सन्धानानिलपित्तजित् । राज. । तामिके । वै.निघ. २भ.वा.व्या.एलादितैले । पक्षिविशेषे । कर्कटे । काष्ठामलके । मध्यहीनप्रवृद्धवातादिजन्यसन्निपातज्वरे । तेन व्यथावेपथ्वादिरुत्पादाह्रादिर्गौरवाग्निमान्द्यादिरोगा जायन्ते तथान्तर्दाहवाक्यनिरोधादयश्च भवन्ति । भा.म.१भ. । कर्कटशृङ्गे । काँकड़ाशृङ्गी । भैष.अ.पि.चि.वृहल्लुधावतीगुडिकायां ।

**कर्कटकास्थि** । क्ली । कुलीरकास्थिनि । काँकड़ार खोला । [कर्कटस्त्रियाम् ।

**कर्कटकी** । स्त्री । कर्कटशृङ्ग्याम् । वा.चि.३अ. ।

**कर्कटचरणः** । पुं । कुलीरकपादे । काँकड़ार पा । रस.र.वाल.चि. ।

**कर्कटच्छदा** । स्त्री । पीतघोषायाम् । पीतघोषा । वै.निघ. । [स्त्र्याम् । अपामार्गे । वै.निघ. ।

**कर्कटवल्ली** । स्त्री । गजपिप्पल्याम् । शुकशि-

**कर्कटशृङ्गिका** । स्त्री । कर्कटशृङ्ग्याम् । मद.व.१ ।

**कर्कटशृङ्गी** । स्त्री । (Rhus succedanea. Syn. Acuminata.) स्वनामख्यातकर्कटदंष्ट्राकारौषधौ । काँकड़ाशृङ्गी । हिं ककड़ाशृङ्गी, ककरशिंगि । मं काकड़ासिंगी । कं तें कर्काटशृङ्गी । गुणाः—गुरुरुष्णा तिक्ता वातघ्नी हिक्कातीसारकासघ्नी श्वासरक्तपित्तघ्नी च । रा.नि.व.६ । कषाया वमिघ्नी ज्वरघ्नी तृष्णा क्षयकासघ्नी ऊर्द्ध्ववातघ्नी च । मद.व.१ । तृष्णारुचिघ्नी । भा.पू.१भ. । महाघोषायाम् । वड़ घोषा ।

**कर्कटा** । स्त्री । कर्कटशृङ्गाम् । भैष.बालचि. कर्कटादि. ।

**कर्कटाख्यः (ख्यः)** । पुं । कर्कटिकालतायां ।

**कर्कटाख्या (ख्या)** । स्त्री । कर्कटिकायां । काँकुड़ । र.मा. । रा.नि.व.६ । सि.यो.छि-श्वा. चि.द्राक्षावलेहे । वै.निघ.ज्व.चि.कुलत्थाद्यघृते । कर्कटशृङ्ग्यां । वै.निघ.क्षय.चि.लघुशिवगुटी. । सु. चि.२अ. । वा.चि.४अ. । भैष.शिलाजतुवटी. ।

**कर्कटादिलेहः** । पुं । बालरोगे । "कर्कटातिविषाशृङ्गीधातकीविल्वबालकं । मुस्तं मञ्जा च कोलस्य मधुना सह लेहयेत् ॥ हन्ति ज्वरमतीसारं दुर्वारं ग्रहणीगदम् ।" रस.र.बाल.चि.भैष. । কর্কটশৃঙ্গী, আতইচ, শুঁট, ধাইফুল, বেলশুঁট, বালা, মুতা, কুল আঁটির শস্য চূর্ণ সমভাগ ।

**कर्कटाह्वः** । पुं । विल्ववृक्षे । रा.नि.व.११ ।

**कर्कटाह्वा** । स्त्री । कर्कटशृङ्ग्यां । रा.नि.व.६।

**कर्कटिः (का)** । स्त्री । A kind of cucumber (Cucumisutilatissimus Rox.) स्वनामख्यातलतायां । काँकुड़ गाछ । तैं नक्कदीस । हिं काँकड़ि । उत्. फुटिक्काँकड़ी । सा द्विधा ह्रस्वदीर्घभेदेन । गुणाः—स्वादुः गुरुः अजीर्णकरी शीतला च। तत्पक्कफलं दाहच्छर्द्दितृष्णाक्लान्तिघ्नञ्च । राज.१प. । त्वचायां कटुका तिक्ता पाचकाग्निप्रदीपनी । अवष्या ग्राहिणी प्रोक्ता मूत्रदोषाश्मरीहरा ॥ मूत्रकृच्छ्रं वमिं दाहं श्रमञ्चैव विनाशयेत् । सा पक्का रक्तदोषस्य कारिण्युष्णा बलप्रदा ॥ इति प्रथमा । द्वितीया त्रपुषी कर्कटी (तौल्लिकाकड़ी) । गुणाः—रुच्या मधुरा वातकरी शीता मूत्रप्रदा गुर्व्वी कफकृद्दाहनाशिनी । वमिं पित्तं भ्रमं मूत्रकृच्छ्रं मूत्राश्मरीं हरेत् ॥ वै.निघ. । सर्व्वाः कर्कटिका वर्षाशरदि जाता न हिताः । परन्तु हैमन्तजा रुचिकरी पित्तघ्नी च भोज्या । सा चार्द्धपक्का न भक्ष्या तेन पीनसं जनयति । सम्यक्पक्का मधुरा कफघ्नी च । भा.म.१भ.अम्ल. चि. । See एर्वारुः । [द्रो । रा.नि.व.६ ।

**कर्कटिनी** । स्त्री । दारुहरिद्रायां । দারুহরিদ্রা

**कर्कटी** । स्त्री । कर्कटस्त्रियाम् । वनकर्कटिकायाम् । रा.नि.व.२३ । कर्कटिकालतायां । रा.नि. व.७ । हे.च. । वालुकीति हला. । वदर्य्याम् । কুল গাছ । मद.व.५। घण्टाबदरी । पद्मकर्णिकायाम् । कोमलशीफली। वै.निघ. । देवदाल्यां । भा.पू.१भ.गु.व. । गौरचकर्कटिकायाम् । र.सा.सं. रसशोधने । शाल्मलीफली । मे. । कर्कटशृङ्ग्यां । रा.नि.व.६ । सर्पे । श.र. ।

**कर्कटीवीजम्** । क्ली । कर्कटीफलवीजे । फुटির বীজ । च.द.अश्म.चि.कुशावलेहे । [श.र. ।

**कर्कटुः** । पुं । करेटुपक्षिणि । কর্কটি পাখী ।

**कर्कडः** । पुं । खटिकायां । খড়িমাটী । र.मा.।

**कर्कन्दुः (न्धुः, न्धूः)** । पुं, स्त्री । (Zizyphus jujuba,) क्षुद्रवदरवृक्षे । रा.नि.व.२३ । सि.यो.कास.चि.नवाङ्गयूषे वचादियूषे च । 'यवामलकदाड़िमकर्कन्धुमूलकशुण्ठकैः ।' शृगालकोल्यां । শিয়াকুল । च.सू.४अ. ।

**कर्कन्धु(क)म्** । क्ली। वदरीफले । ছোট কুল। गुणाः—मधुरं स्निग्धं गुरु पित्तानिलघ्नं वातपित्तहरञ्च । मद.व.६ । विल्वफले । বেল । वै.निघ. ।

**कर्कन्धुकी** । स्त्री । वदरीभेदे । मद.व.६ । क्षुद्रवदरवृक्षे । ছোট কুল । र.मा.रा.नि.व.२३ ।

**कर्कफलः** । पुं । कर्कटवृक्षे । কাঁকরোল ।
रा.नि.व.११ ।

**कर्करः** । पुं। कङ्करे। কাঁকর । मुद्गरे । हार ।
अक्षिणि । क्ली । चूर्णजनकपाषाणखण्डे । मुर्टि ।
दर्पणे । हारा. । तरुणे पशौ । हला. ।

**कर्करटः** । पुं । पक्षिविशेषे । কর্কটে ।

**कर्कराङ्गः** । पुं । कालकण्ठपक्षिणि । श.मा. ।

**कर्करटुः (कः)** । पुं । कटाक्षे । जटा. । ककेरेटुपक्षिणि । श.र. ।

**कर्करान्ध(न्धु)कः** । पुं । अन्धकूपे । त्रिका.।

**कर्करालः** । पुं । चूर्णकुन्तले । हे.च. ।

**कर्कराक्षः** । पुं । खञ्जनपक्षिणि । हारा. ।

**कर्करिका** । स्त्री । चक्षुःखर्व्वाम् । চোক্ ক'র্কর করা ।

**कर्करी(रिका)** । स्त्री । सनालजलपात्रे ।

ष्मारी। श्रम.। उणा.। तण्डुलधावनपात्रे। गलन्तिकायां। भाण्डविशेषे। घटी। दर्पणे। मे.रत्रिकं।

**कर्करेटुः**। पुं। करेटुपक्षिणि। कर्कटे पाखी। रत्ना.। [ल्याम्। शुक्तशिम्ब्याम्। वै.निघ.।

**कर्कवल्ली**। स्त्री। अपामार्गवृक्षे। गजपिप्प-

**कर्कशः**। पुं। इक्षुभेदे। मे.शत्रिकं। कम्पिल्ले। कमलागुँड़ि। श्रम.। कासमर्हे। पटोले। प.मु. रत्ना.। गुड़त्वचि। वै.निघ.। त्रि। श्रमसहे। निर्दये। मे.शत्रिकं।

**कर्कशच्छदः**। पुं। पटोले। रा.नि.व.३। पाटलवृक्षे। पारुल गाछ। शाखोटवृक्षे। त्रिका. वनौ.। शाकवृक्षे। कृष्णकुष्माण्डे। वै.निघ.।

**कर्कशच्छदा**। स्त्री। घोषायां। झिंडा गाछ। हिं तोरइ। दुग्धावृक्षे। रा.नि.व.८।

**कर्कशदलः**। पुं। पटोलफलवृक्षे। र.मा.।

**कर्कशदला**। स्त्री। दग्धिकायाम्। कोङ्कणे कुरहीति ख्याता। रा.नि.व.८।

**कर्कशा**। स्त्री। वृश्चिकालीवृक्षे। विछाति गाछ। रा.नि.व.८। हस्वमेषशृङ्ग्याम्। वनवदरे। वै.निघ.। [र.मा.।

**कर्कशिका**। स्त्री। वनकोल्यां। बुनो कुल।

**कर्कसारम्**। क्ली। दधिशक्तौ। हारा.।

**कर्काकः**। पुं। कर्कटिकायाम्। काँकुड़। पथ्यापथ्ये।

**कर्कारुः**। पुं। (Beninkasa cerifera.) कुष्माण्डभेदे। विलाति कुमड़ा। उत्. कखारु। कुष्माण्डीबीजं कुष्मावलेहे। कलिङ्गलतायाम्। तरमुज वा थर्मुज। रत्ना.। श्वेतिचुद्रकुष्माण्डे। हिं कोहड़ो, कौहण्डी। तें गुम्मडितोगे। कुष्माण्डी तु भृशं लघ्वी कर्कारुः परिकीर्त्तिता। गुणाः— कर्कारुः ग्राहिणी शीतला रक्तपित्तघ्नी गुरुः। पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्। भा.पू.१भ. शाकव.। तैलगुणाः विभीतकतैलवत्। स्त्री। कुष्माण्डीलतायाम्। हला.।

**कर्कारुकः**। पुं। (Convolvulus Paniculatus.) कालिन्दवृक्षे। तरमुज। मं खडुया। रत्ना.। कुष्माण्डे। प.मु.। सु.चि.१८श्र.।

**कर्कारुः**। स्त्री। कुष्माण्डीलतायाम्।

**कर्केतनः (रः)**। पुं। रत्नविशेषे। "कर्केतनाख्ये परमाः पवित्राः।" गारुड़े। विषशान्त्यर्थ वीर्य्यवद्विषभेदे। "कर्केतनं मरकतं।"वा.उ.३६श्र.।

**कर्कोधुकी**। स्त्री। भूवदर्य्याम्। वै.निघ.।

**कर्कोटः (कः)**। पुं। विल्ववृक्षे। मे.कत्रतुष्कं। काँकरोल इति प्रसिद्धफलशाकलतायाम्। च.द.ज्व.चि.शाकविधौ। "कर्कोटकं पर्पटकम्।" एतत्फलञ्च स्थावरविषान्तर्गतफलविषे वर्त्तते। सु. कल्प.२श्र.। See फलविषम्। एतदुभयगुणाः— कफपित्तघ्नं शुक्रनाशनं रुचिकरञ्च। "कर्कोटकं फलं ज्ञेयं कारवेल्लकवद्गुणैः।" राज.३प.। कर्कोटकं त्रिदोषघ्नं रुचिकृन्मधुरं तथा। अत्रि.१६श्र.। इक्षुदण्डे। रा.नि.व.१४। सर्पविशेषे। मे.।

**कर्कोटका (की)**। स्त्री। फलशाकविशेषे। गोल कुमड़ा। मं कोहले। गुणाः— मूत्राघातहरं प्रमेहघ्नं कृच्छ्राश्मरीभेदनं विण्मूत्रस्तपनं तृषातिशमनं पुष्टिकरं वृष्यं स्वादु अरोचकघ्नं बल्यं पित्तघ्नञ्च। रा.नि.व.७। कर्कोटकी रुचिकरी कटुः दीपनी तिक्तोष्णा वातकफघ्नी विषपित्तघ्नी च। वै.निघ.। पीतघोषायाम्। पीतघोषा वा झिंडा। मं कर्टोली, काकली। रत्ना.। कोशातक्याम्।

**कर्कोटकीफलम्**। क्ली। घोषाफले। हस्तकुष्माण्डे। भिङ्गाफले। वै.निघ.। कर्कोटफले। काँक्‌रोल।

**कर्कोटपत्रम्**। क्ली। कर्कोटदले। काँक्‌रोलपाता। एतद्वमने हितम्। वा.ज्व.चि.१श्र.।

**कर्कोटमूलम्**। क्ली। कर्कोटकमूले। काँक्‌रोलमूल। सि.यो.कास.चि.। "नस्यं कर्कोटमूलं स्यात्।" च.द.पाण्डु.चि.।

**कर्कोटिका**। स्त्री। कुष्माण्डीलतायां। विलातिकुमड़ा। कर्कोटकी। काँक्‌रोल। रा.नि.व.७।

**कर्कोटिकाकन्दरजः**। क्ली। खेकसामूलचूर्णम्। भा.म.१भ.शीतलाङ्ग.सा.ज्व.चि.। "कर्कोटिकाकन्दरजः कुलत्थः।"

**कर्कोटी**। स्त्री। कर्कोटिकायां। काँकरोल। देवताड़वृक्षे। देश्राताड़। वै.निघ.।

**कर्क्कोलम्** । क्ली । कक्कोले । ককোল । रा.नि. व.१२ ।

**कर्च्चरिका (री)** । स्त्री । कचुड़ीति प्रसिद्धे पिष्टकभेदे । पाकराज: । [तालविशेषे ।

**कर्चु(र्चू)रम्** । क्ली । सुवर्णे । मे.रत्रिकं । हरि-

**कर्चूर: (क:)** । पुं । एकाङ्गीनामवणिग्द्रव्ये । একাঙ্গী । हिं कचूरा । तैं पीकाकीकचेट्टा । मं कं कचोरा । योग.रत्ना.वाजीक. । गुणा:—कटु: तिक्तोष्ण: कफकासघ्न: मुखवैशद्यकर: गलगण्डघ्न: । रा.नि.व.६ । दीपन: रुच्य: सुगन्धी कटुपाक: कुष्ठार्शोव्रणकासघ्न: लघु: श्वासगुल्मकृमिघ्नश्च । भा. पू.१भ । कर्चूरकन्दे । (क:) आमहरिद्रायाम् । কাঁচাহলুদ । भ.टी.स्वा. । शठ्याम् । मे.रत्रिकं । वै.निघ.२भ.ज्व.चि. । See शटी ।

**कर्ण:** । पुं । स्वनामप्रसिद्धदीर्घपत्रवृक्षे । কানথোড়া গাছ । च.द.वि.ज्व.चि. । "दीर्घपत्रककर्णाख्यनेत्रं खदिरसंयुतम् ।" श्रवणेन्द्रिये । रा.नि. व.१८ । सुवर्णाली । শোণালু । "सुवर्णाली श्रुतावपि ।" मे.णद्विकं । मधुरत्वचि । দারচিনি । अर्कमन्दारे । वै.निघ. ।

**कर्णक:** । पुं । मत्स्यविशेषे । तन्नामकसन्निपातविशेषे । কর্ণমূলী । लक्षणं—"दोषत्रयेण जनिता किल कर्णमूले तीव्रा ज्वरे भवति तु श्रवणव्यथा च । कण्ठग्रहो बधिरता श्वसनं प्रलापप्रस्वेदमोहदहनानि च कर्णिकाख्ये ॥" भा.ज्व.चि. ।

**कर्णकण्डु:(ण्डू:)** । पुं, स्त्री । कर्णस्रोतोगतरोगविशेषे । तस्य निदानं यथा—"मारुत: कफसंयुक्त: कर्णकण्डुं करोति च ।" मा.नि. ।

**कर्णकिट्टम्** । क्ली । कर्णमले ।

**कर्णकीटा (टी)** । स्त्री । (Julus cornifex.) कर्णजलौकायाम् । शतपद्याम् । কাণকোটারী, কেন্নুই । हिं कानसलाइ । हे.च. ।

**कर्णक्ष्वेड:** । पुं । कर्णरोगविशेषे । কাণের ভিতর সর্ব্বদা ভোঁ ভোঁ শব্দ । तस्य लक्षणं—"वायु: पित्तादिभिर्युक्त: वेणुघोषसमं स्वनम् । करोति कर्णयो: क्ष्वेडं कर्णक्ष्वेड: स उच्यते ।" मा.नि. । अत्र वायु: पित्तादिसहित: कर्णे वेणुघोषवच्छब्दमुत्पादयति ।

**कर्णगूथ:** । पुं । कर्णमले । কাণের খোল । हारा. ।

**कर्णगूथक:** । पुं । कर्णरोगविशेषे । यथा—"पित्तोष्मशोषित: श्लेष्मा जायते कर्णगूथक: ।" मा नि. ।

**कर्णच्छिद्रम्** । क्ली । कर्णरन्ध्रे ।

**कर्णजलूका** । स्त्री । (Julus.) कर्णजलौकायाम् । श.र. ।

**कर्णजलौका (का:)** । स्त्री,पुं । शतपद्याम् । কাণকোটারী । हिं कानखजूरा । हे.च. । भ. टी.भ. ।

**कर्णजार्श:** । क्ली । कर्णार्शोरोगे । কাণের অর্শ । "प्रकुपिता दोषा: श्रोत्राक्षिघ्राणवदनेषु अर्शांस्युपनिवर्त्तयन्ति । तत्र कर्णजेषु बाधिर्य्यं पूतिकर्णता च ।" सु.नि.२अ. ।

**कर्णजाहम्** । क्ली । कर्णमूले ।

**कर्णजित्** । पुं । गुडाकेशे ।

**कर्णजीरकम्** । क्ली । क्षुद्रजीरके । रत्ना. ।

**कर्णज्योति:** । स्त्री । कर्णस्फोटायाम् । वै. निघ. । [श.मा. ।

**कर्णदुन्दुभि:** । स्त्री । शतपद्याम् । কেন্নুই ।

**कर्णधारिणी** । स्त्री । हस्तिन्यां । হাতিনী ।

**कर्णनाद:** । पुं । कर्णस्रोतोगतरोगे । কাণ শোঁ শোঁ রোগ । कर्णस्रोतोगतवायु: कर्णे भेरीमृदङ्गशङ्खवन्नादमजस्रमुत्पादयति । मा.नि. । "यदा तु नाडीषु विमार्गमागत: स एव शब्दाभिवहासु तिष्ठति । शृणोति शब्दान् विविधान् तदा नर: प्रणादमेनं कथयन्ति चामयम् ॥" सु.उ.२०अ. ।

**कर्णपाक:** । पुं । कर्णस्रोतोगतरोगविशेषे । কাণপাকা । "कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ।" मा.नि. । [কাণের পাতা ।

**कर्णपात्रक:** । पुं । कर्णबाह्यभागविशेषे ।

**कर्णपाली** । स्त्री । कर्णपालीगतरोगे । কাণের পাতার রোগ । स पञ्चविध:—परिपोटोत्पातोन्मन्थदु:खवर्द्धनपरिलेहिभेदेन, एषां लक्षणानि स्वस्वपर्य्याये मृग्याणि । सु.चि.२५अ. ।

**कर्णपुच्छिका ।** स्त्री । कर्णस्फुल्याम् । मोरट-लतायाम् । [रटे । रा.नि.व.३ ।

**कर्ण(कीर्ण)पुष्पः ।** पुं । नीलझिण्ट्याम् । मो-

**कर्णपूरः ।** पुं । बालयष्टे । र.मा.। शिरीषवृक्षे । नीलोत्पले । मे. । अशोकवृक्षे । रा.नि.व.१० । नन्दीवृक्षे । त्रिका. ।

**कर्णपूरकः ।** पुं । कदम्बवृक्षे । कदम गाछ । रा.नि.व.६। अशोकवृक्षे । रा.नि.व.१० । तिलके । वै.निघ. ।

**कर्णपूरणम् ।** क्ली । तैलादिभिः कर्णपूरणे । काणे तेल देओया । "कर्णं प्रपूरयेत्सम्यक् स्वे-द्यार्थैर्मोचया भिषक् । नीचैः श्रुतिर्न बाधिर्य्यं स्या-न्नित्यं कर्णपूरणात् ॥ रसाद्यैः पूरणङ्कर्णे भोजना-त्प्राक् प्रशस्यते । तैलाद्यैः पूरणङ्कर्णे भास्करेऽस्तमु-पागते ॥ स्वेदयेत्कर्णदेशन्तु परिवर्त्तनशायिनः । मूत्रैः स्नेहरसैः कोष्णैः पूरयेत्त ततो भिषक् ॥ स्वस्थस्य पूरितं रक्षेत् मात्राशतमवेदने । शतपञ्च श्रोत्रगदे शिरोरोगे तथैव च ॥" वैद्यकम् ।

**कर्णप्रतिनाहः ।** पुं । कर्णरोगविशेषे । "स कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारो शिरसोऽर्द्धभेदकृत् । मा.नि. ।

**कर्णफलः ।** पुं । (Ophiocephalus kurrawey.) मत्स्यविशेषे । काणलि माछ । गुणाः —अजीर्णकफकरः । राज.२प. ।

**कर्णबन्धनाकृतिः ।** स्त्री । कर्णवेधनानन्तरं तद्बन्धनाकृतौ । सा पञ्चदशविधा । यथा—नेमिसन्धानकः, उत्पलभेद्यकः, वल्लूरकः, आसङ्गिमः, गण्डकर्णः, आहार्य्यः, निर्वेधिमः, व्यायोजिमः, कपाटसन्धिकः, अर्द्धकपाटसन्धिकः, सङ्क्षिप्तः, हीनकर्णः, वल्लीकर्णः, यष्टिकर्णः, काकौष्ठक इति । सु.सू.१६अ. । विशेषाः स्वस्वपर्य्याये द्रष्टव्याः ।

**कर्णभूषणम् ।** क्ली, पुं । अशोकवृक्षे । नागकेशरे । प.मु. ।

**कर्णमद्गुरः ।** पुं । (Silurus unitus.) मत्स्य-भेदे । काणमागुर । वै.निघ. ।

**कर्णमलम् ।** क्ली । कर्णगूथे । हारा. ।

**कर्णमूलम् ।** क्ली । कर्णस्य मूलदेशे । कर्णमूली। मा.ज्व.नि. ।

**कर्णमोचकः ।** पुं । कर्णस्फोटायाम् । काणछि-ड़ा । वै.निघ.२भ.र.पि.चि.दूर्व्वाद्यतैले ।

**कर्णमोटा ।** स्त्री । वर्व्वूरवृक्षे । वै.निघ. ।

**कर्णमोरटः ।** पुं। कर्णस्फोटायां । काणछिड़े, कान्दड़ा । रसेन्द्र.चि.सूर्य्यपातकतार्मे । काणछि-ड़ाद्वयं, "जलस्थलभवः कर्णमोरटः ।" सा.कौ.दूर्व्वाद्यतैले ।

**कर्णरोगः ।** पुं । कर्णजव्याधौ । काणेर रोग । तस्य निदानादि ।—नादोऽतिरुक् कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात् । शोथः सरागोदरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात् । वैश्रुत्यकण्डुस्थिरशोथशुक्लस्निग्धश्रुतिस्वल्परुजः कफाच्च । सर्व्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ।" मा.नि. । कर्णरोगाः साकल्येनाष्टाविंशतिविधाः । यथा—"कर्णशूलं प्रणादश्च बाधिर्य्यं क्ष्वेड एव च । कर्णस्रावः कर्णकण्डूः कर्णगूथस्तथैव च । कृमिकर्णप्रतिनाहौ विद्रधिर्द्विविधस्तथा । कर्णपाकः पूतिकर्णः तथैवार्शश्चतुर्विधम् । तथार्बुदं सप्तविधं शोफश्चापि चतुर्विधः । एते कर्णगतारोगा अष्टाविंशतिरीरिताः ॥" वै.निघ. । [कर्णपाली । काणेर पाता । ह.च. ।

**कर्णलतिका ।** स्त्री । Lobe of the ear.

**कर्णवंशः ।** पुं । मञ्चे । हारा. । [र्वंशोने ।

**कर्णवर्ज्जितः ।** पुं । सर्पे । श.च. । त्रि । क-

**कर्णवशः ।** पुं । मत्स्यविशेषे । कालवश । तस्य लक्षणं—ह्रस्वः गोलः कृष्णः शल्कवांश्च । तन्मांसगुणाः—दीपनं पाचनं पथ्यं हृद्यं बलपुष्टिकरञ्च । वैद्यकम् ।

**कर्णविद्रधिः ।** पुं । Ulceration of the ear. कर्णस्रोतोगतस्फोटके । स द्विविधः दोषजागन्तुजभेदेन । तेन तोदधूमनिर्गमवत्पीड़ा दाहसन्तापा अरुणस्रावाश्च भवन्ति । मा.नि. । अपिच "क्षताभिघातप्रभवस्तु विद्रधिः भवेत्तथा दोषकृतोऽपरः पुनः । सरक्तपीतारुणमस्रमास्रवं प्रतोदधूमायनदाहचोषवान् ।" सु.उ.१०अ. ।

**कर्णविधिः ।** पुं । कर्णच्छेदनादौ । तद्विधिः

गन्धी मलिनः शीतवान् गुरुः । गम्भीरपाकः शाम्योषा स्पृष्टः स्निग्धोऽवदीर्य्यते । पक्वश्चकर्द्दमां-सश्च स्पष्टस्नायुशिरागतः । शवगन्धी च वीसर्पः कर्द्दमाख्यमुशन्ति तम् ॥" मा.नि. । [र. ।

**कर्द्दमाटकः** । पुं । विष्ठादिनिक्षेपस्थाने । श.

**कर्द्दमी** । स्त्री । मुद्गरवृक्षे । मुग्दरफुलेर गाछ । रा.नि.व.१० । [नेता, लेकुड़ा । अम. ।

**कर्पटः(कः)** । पुं । लक्तके । लत्ता इति लोके ।

**कर्परः** । पुं । खर्परे । मृद्घटखण्डे । ज्वालातम-कपाले । तथ्थ काटिथोला । वा चि.१श. । "खभाकारमपूपपचनपात्रं न्युब्जं कर्पर इत्युच्यते ।" ताओया वा चाटु । वा.टी.हेमा. । कपोले । त्रिका. । शर्करायां । उदुम्बरवृक्षे । श.च. । मस्तकास्थिनि । माथार खुलि । कटाहे । अस्त्रभेदे । मे.रत्रिकं ।

**कर्पराशः** । पुं । मल्लकपालखण्डे । खोलाकुची । श.र. । [खाकरीट इति भाषा । भा. ।

**कर्परालः** । पुं । अक्षोटवृक्षे, गिरिजपीलुवृक्षे ।

**कर्परिकातुत्थम्** । क्ली । खर्परे । थापर । वै.निघ. । तुत्थविशेषे । तुँते । हे.च. ।

**कर्परी** । स्त्री । A collyrium extracted from the Amomum anthorhiza. का-र्षोद्भवतुत्थे, तुत्थाञ्जने । दारुहरिद्रार काथेर तुँतिया ।

**कर्परीतुत्थम्** । क्ली । खर्परे । कर्परिकातुत्थे, रसके । तुँतियाविशेष । हिं खपरियाथोथा । "कर्परीतुत्थकं तुत्थादन्यत् तद्रसकं स्मृतं । ये गु-णास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः ॥" वैद्यकं ।

**कर्पासः (कः)** । पुं । स्वनामख्यातवृक्षे । का-पास गाछ । हे.च. । मद.व.१ ।

**कर्पासफलम्** । क्ली । कार्पासबीजे । काबा-सेर बीज । "कर्पासफलमित्युक्तं कषायं मधुरं गुरु । वातश्लेष्महरं रुच्यं विशेषेणास्थिवर्ज्जितम् ॥"

**कर्पासी** । स्त्री । कार्पासवृक्षे । मद.व.१ ।

**कर्पूरः (कः)** । पुं, क्ली । (Cinamomum, camphora,) Camphor. स्वनामख्यातपण्य-द्रव्ये शुभ्रवर्णनिर्यासरूपे । कर्पूर । हिं कापुर । मं कर्पूरमु । स पक्वापक्वभेदाद्द्विविधः । तयोरपक्वं गुणवत्तरं भवति । स च पीताश-भीमसेन-सित-कार-शङ्करावास-पांशु-पिञ्ज-अब्दसार-हिमवालुक जू-तिक-तुषार-हिम शीतल-पक्विकाख्य इति बहु-भेदाः । गुणाः —शीतलः तिक्तः स्निग्धोष्णः कटुः श्लेष्मरक्तपित्तघ्नः तृष्णादाहकण्ठदोषघ्नः । स तिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः । तृष्णायां मुख-शोषे च वैरस्ये चापि पूजितः ॥ सु.सू.४६अ. । तत्र नूतनकर्पूरः स्निग्धस्तिक्त उष्णास्रदाहप्रदः । पुरातनः दाहशोषघ्नः । धौतः स शुभदः, इति । स पुनः शिरोमध्यतलजभेदेन त्रिविधः । तत्र शिरो-जातः कर्पूरः स्तम्भाग्रजातः । मध्यजः पर्णजातः । तलजः तलजातः । तथा स्तम्भगर्भस्थितः श्रेष्ठः । स्तम्भबाह्यस्थितो मध्यमः । तथा शिरोजो भास्वान् विदग्धपुलकः । मध्यजः सामान्यपुलकः स्वच्छश्च । तलजः गौरवर्णः । यस्तम्भमध्यजः स स्वच्छः शुभ-ईषत् हरिद्राभश्च स्यात् । यो वाह्यजातः स सुदृढः शुभरूचः पुलकश्च जनयेत् । इति कर्पूरलक्षणम् । तदुक्तं पीताशो-भीमसेनस्तदनुसितकरः शङ्करावा-ससंज्ञः, पांशुः पिञ्जोऽब्दसारस्तदनु हिमयुता वा-लुका जूतिका च । पश्चादस्यास्तुषारस्तदुपरि सहिमः शीतलः पक्विकाख्या (पक्विकान्या) कर्पूरस्येति भेदाः गुणरसमहसा वैद्यहस्तेन दृष्टाः । इति कर्पूरभेदः । अपिच कर्पूरो नूतनस्तिक्तः स्निग्धशोषास्रदाहदः । चिरस्थो दाहशोषघ्नः स धौतः शुभकृत्परः । शिरो मध्यं तलश्चेति कर्पूरस्त्रिविधं स्मृतम् । शिरस्तम्भा-ग्रसञ्जातं मध्यं पर्णदले तलं । भास्वद्विदग्धपुलकं शिरोजातन्तु मध्यमं । सामान्यपुलकं स्वच्छं तलं चूर्णन्तु गौरकं । स्तम्भगर्भस्थितं श्रेष्ठं स्तम्भवाह्ये च मध्यमम् । स्वच्छमीषत् हरिद्राभं शुभं तन्मध्यजं स्मृ-तम् । सुदृढं शुभरूचश्च पुलकं वाह्यजं वदेत् । अपि च स्वच्छं भङ्गरपत्रं लघुतरविशदं तोलने तिक्तकं चेत्, स्वादे शैत्यं सुहृद्यं बहुलपरिमलामोदसौरभ्य-दायि । निःस्नेहं दार्ढ्यपत्रं शुभतरमिति चेत् राज-योग्यं प्रशस्तम् । कर्पूरं चान्यथा चेत् बहुतरमशने स्फोटदायि व्रणाय ॥ रा.नि.व.१२ । कर्पूरकन्दे । शठी । आर्द्रहरिद्रायाम् । काँचाहलुद । श.च. ।

**कर्पूरतुलसी** । स्त्री । कर्पूरगन्धितुलसीभेदे । कर्पूरमाली तुलसी । वै.निघ. ।

**कर्पूरतैलम्** । क्ली । कर्पूरस्नेहे । कर्पूरेर तैल । गुणाः—कटूष्णत्वं वातरोगघ्नत्वं कफापह-

र्त्तं दन्तदार्ढ्यकरत्वं पित्तहरत्वञ्च । रा.नि.व.१५।
ह्रीवेरे । बाला ।

**कर्पूरनालिका ।** स्त्री । पक्वान्नविशेषे । क-र्पूरनारी, নেওয়ালা इति च ख्याता । यथा—
"घृताक्तया समितया क्वत्वा लम्बपुटं ततः । लवङ्गी-मरिचकर्पूरयुतया सितयान्वितं । पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका । संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका ॥" भा. ।

**कर्पूरमणिः ।** पुं । पाषाणभेदे । প্রস্তরবি-শেষ । गुणाः—"मणिः कर्पूरकालिकः कटुश्चोष्णो व्रणापहः । त्वग्दोषवातदोषादीन् नाशयेत् ।" रा. नि.व.१३ ।

**कर्पूररसः ।** पुं । रसविशेषेऽतिसाराधिकारे ।
"हिङ्गुलम् अहिफेनञ्च मुस्तकेन्द्रयवं तथा । जाती-फलञ्च कर्पूरं सर्व्वं संमर्द्य यत्नतः । जलेन वटिका कार्य्या द्विगुञ्जापरिमाणतः ॥" इत्यादि । भैष.अ-तिसा.चि. । रसकर्पूरे । রসকপূর । तत्करणवि-धिः—"शुद्धसूतसमं कुर्य्यात् प्रत्येकं गैरिकं सुधीः । पुष्टिकां खटिकां तद्वत् स्फटिकां सिन्धुजन्म च । वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिकां । सर्व्वाण्ये-तानि सञ्चूर्ण्य वाससा चापि शोधयेत् । एभिश्चूर्णै-र्युतं सूतं यावद्यामं विमर्द्दयेत् । तच्च चूर्णं ससूतञ्च स्थालीमध्ये परिक्षिपेत् । तस्याः स्थाल्या मुखे स्था-लीमपरां धारयेत्समाम् । सतस्त्वं कुट्टितमृदा मुद्र-येदनयोर्मुखं । संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत् । सम्यग्विशोष्य मुद्रां तां स्थालीं चुल्ल्यां विधारयेत् । अग्निं निरन्तरं दद्यात् यावद्दिनचतु-ष्टयं । अङ्गारोपरि तदन्नं रक्षेद्यत्नादहर्निशं । श-नैरुद्घाटयेद्यन्त्रमूर्द्ध्वस्थालीगतं रसं । कर्पूरवत्सुविमलं गृह्णीयाद्गुणवत्तरम् । तदेव कुसुमचन्दनकस्तूरीकु-ङ्कुमैर्युतं । खादन्हरति फिरङ्गं व्याधिं सोपद्रवं स-पदि । विन्दति वह्निदीप्तिं पुष्टिं वीर्य्यं बलं विपुलं । रमयति रमणीशतकं रसकर्पूरसेवकः सततम् ॥" भा. । গিরিমাটী, ঝিণুক, ফুলখড়ি, ফট্‌কিরি, সৈন্ধবলবণ, উইমাটী, খারিলবণ, রাঙামাটী প্রত্যেক চূর্ণ এক এক ভাগ, এক ভাগ পা-রার সহিত ১ প্রহর মাড়িয়া স্থালীমধ্যে পাক করিবে ।

**कर्पूरहरिद्रा ।** स्त्री । स्वनामख्यातद्रव्ये । आ-म आदा । हिं कर्पूरहलदी । तैं कर्पूरहरिद्रिनाम-वस्तुविशेष । गुणाः—शीतला वातला मधुरा पि-त्तघ्नी तिक्ता सर्व्वकण्डूघ्नी च । भा.पू.१भ. ।

**कर्पूरा ।** स्त्री । तरुण्यां ।

**कर्पूरादितैलम् ।** क्ली । योनिरोगे हितम् । पाठः "कर्पूरभल्लातकशङ्खचूर्णं क्षारो यवानाञ्च मनःशिला च । तैलं विपक्वं हरितालमिश्रं रोमाणि निर्म्मूलयति क्षणेन" । कर्पूरादिभिः कल्कः । सिद्धे हरितालचूर्णं पादिकं प्रक्षेप्यम् । তিলতৈল ১ শ. কল্ক—কর্পূর, ভেলার মুটী, শঙ্খচূর্ণ, যবক্ষার এবং মনছাল প্রত্যেকে ৪ তো. জল ৪ শ.; পাক সিদ্ধ হইলে হরিতাল চূর্ণ এক পোয়া বা ২০ তোলা প্রক্ষেপ দিবে ।

**कर्पूराश्मा ।** पुं । उपरत्नविशेषे । हिं कर्पूर-चीनिया । स्फटिके । वै.निघ. ।

**कर्बः ।** पुं । मूषिके ।

**कर्बरः ।** पुं, क्ली । पुण्ड्रकेक्षौ । পুঁড়িইক্ষু । रा. नि.व.१४ । स्वर्णे । धुस्तूरवृक्षे । व्याघ्रे । मे.रत्रिकं ।

**कर्बरी ।** स्त्री । शृगाल्यां । व्याघ्र्यां । मे.रत्रिकं । हिङ्गुपत्र्याम् । जटा. ।

**कर्बुदारः (कः)** । पुं । नीलझिण्ट्याम् । श. च. । श्वेतकाञ्चने । प.मु., च.सू.४अ. । गुणाः—ग्राहित्वं रक्तपित्ते हितत्वं । राज. । श्वेतस्तु काञ्चनी ग्राही तुवरो मधुरः स्मृतः । रूक्षो रुचः श्वासकास-पित्तरक्तविकारहा । वलप्रदरणाशी गुणास्त्वि-तु रक्तवत् ॥" वै.निघ. । च. । (कः) श्लेष्मान्तकवृक्षे । চালতাগাছ । सु.सू.४३अ. ।

**कर्बुरम् ।** क्ली, पुं । स्वर्णे । द्वि.च. । हरिताले । अम. । (रः) धुस्तूरवृक्षे । गन्धशट्यां । प.मु. । आ-म्रहरिद्रायां । কাঁচা হলুদ । वै.निघ. । जले । नी. ।

**कर्बु(र्बू)रः (कः)** । पुं । (Curcuma Zerumbet Rox.) गन्धशट्यां । अम. । आमहरिद्रा-यां । हिं कचौरहलदी । अ.टी.भ.श.र. । नदीनि-ष्पावधान्ये । रा.नि.व.१६ ।

**कर्बुरफलः ।** पुं । साकुरुण्डवृक्षे । रा.नि.व.६ ।

**कर्बुरा ।** स्त्री । सविषजलायुकाभेदे । सु.सू.१३ अ. । See जलायुका । पाटलावृक्षे । वर्व्वर्य्याम् । বাবুইতুলসী । मे.रत्रिकं ।

**कर्वूरम्** । क्ली । स्वर्णे । हरिताले । त्रिका. ।

**कर्म्म** । क्ली । यत् कुर्व्वन्ति, तत्कर्म्म । सु.सू.४१ अ. । तच्च त्रिविधं पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्म चेति । सु.सू.५अ. । [कालतायां । मे.रचतुष्कं ।

**कर्म्मकरी** । स्त्री । मूर्व्वायां । वै.निघ । विम्बि-

**कर्म्मजः** । पुं । वटवृक्षे । जटा. ।

**कर्म्मपुरुषः** । पुं । जीवे, "यस्मिन् चिकित्सा वर्त्तते स एव कर्म्मपुरुषश्चिकित्सिताधिकृतः ।" सु.शा.१अ. ।

**कर्म्मफलम्** । क्ली । कर्म्मरङ्गफले । रत्ना. । कर्म्मविपाके । मे.लचतुष्कं । सुखे । दुःखे । त्रिका. ।

**कर्म्ममूलम्** । क्ली । कुशे । कुश । श.च. । शरदणे ।

**कर्म्मरङ्गः** । पुं । (Averrhoa arambola.) स्वनामख्यातवृक्षे । कामराङ्गा गाछ । मं कर्म्मराचें झाड़। फलगुणाः—अम्लत्वम् उष्णत्वं वातहरत्वं पित्तजनकत्वं । पक्वस्य मधुराम्लत्वं बलपुष्टिरुचिकरत्वञ्च । रा.नि.व.११ । कटुपाकित्वं अम्लपित्तकारित्वं तीक्ष्णत्वञ्च । राज.३प. । "कर्म्मारस्य फलस्यामं ग्राह्यम्लं वातनाशनं । उष्णं पित्तकरञ्चैव तत्पक्वं मधुरं मतं । अम्लञ्च बलपुष्टीनां रुचेश्चैव तु वर्द्धकम् ॥" वै.निघ. । "कर्म्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफवातकृत् ।" भा. ।

**कर्म्मरी** । स्त्री । The manna of the bamboo. वंशलोचनायाम् । वै.निघ. ।

**कर्म्मविपाकः** । पुं । पूर्व्वजन्मकृतशुभाशुभफलभूते रोगादौ ।

**कर्म्मारः** । पुं । वंशे । कर्म्मरङ्गे । रा.नि.व.७।११ ।

**कर्म्मारकः** । पुं । कर्म्मरङ्गवृक्षे । वै.निघ. ।

**कर्म्माहः** । पुं । मनुष्ये ।

**कर्म्मीरकः** । पुं । शाखोटवृक्षे ।

**कर्म्मेन्द्रियम्** । क्ली । कर्म्मसाधनेन्द्रिये पाय्वादिपञ्चके व्यस्ते समस्ते च ।

**कर्वः** । पुं । मूषके । कामे । उणा. ।

**कर्वरः** । पुं । व्याघ्रे । मे. ।

**कर्वरी** । स्त्री । हिङ्गुपत्राम् ।

**कर्व्यः** । पुं । कर्चूरे । आम आदा । हिं कचूर । रा.नि.व.६ ।

**कर्षः** । पुं । कौषधभक्ष्यादौ मागधीमाने । स च षोडशमाषात्मकः । १६० र. । च. । तोलकद्वयात्मकपरिमाणादिमाने । "तोलकद्वयन्तु कर्षः स्यात् ।" प.प्र.१ख. । दशमाषकात्मककालिङ्गमाने । "कर्षः स्याद्दशमाषकः ।" शार्ङ्ग.पू.१अ. । सुश्रुतस्तु पञ्चरक्तिकमाषमुक्त्वा १६माषात्मकं कर्षं कथयति । धरणद्वयात्मकवीह्यादिमाने ८०र. । विभीतकवृक्षे । श.र. । क्ली । सुवर्णे ।

**कर्षकः** । पुं । अयस्कान्तमणौ ।

**कर्षणम्** । क्ली । कृषीकरणे । हे. च. ।

**कर्षणिः** । स्त्री । असनवृक्षे । असिना गाछ । उणा. । [श्वेतवचायां । वै.निघ. ।

**कर्षणी** । स्त्री । चौरिणीक्षुपे । रा.नि.व.५ ।

**कर्षणीया** । स्त्री । कासतृणबीजे । वै.निघ. ।

**कर्षफलः** । पुं । विभीतकवृक्षे । बहेड़ा वृक्ष । रा.नि.व.११ । भा.पू.१भ. । भल्लातकवृक्षे । वै.निघ ।

**कर्षफला** । स्त्री । आमलकवृक्षे । आमला गाछ । रत्ना. ।

**कर्षार्द्धम्** । क्ली । तोलकपरिमाणे । प.प्र.१ख. ।

**कर्षिका** । स्त्री । कासबीजे । वै.निघ. ।

**कर्षिणी** । स्त्री । चौरिणीक्षुपे । क्षीरुई गाछ रा.नि.व.५ । वै.निघ. । [त्रिकं ।

**कर्षुः** । पुं । करीषाग्नौ । जीविकायाम् । मे.ष-

**कर्षूः** । स्त्री । अभ्यन्तरप्रशस्ते सङ्कीर्णमुखे खातविशेषे । च.सू.१४अ. । करीषाग्नौ । वै.निघ. ।

**कर्षूस्वेदः** । स्वेदविशेषे । लक्षणं यथा—"स्थानस्योपरि यः शेते कर्षूः स्थानविभागवित् । दीप्तैरधूमैरङ्गारैः तां कर्षूं पूरयेत्ततः । तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ॥" च.सू.१४अ. ।

**कलः** । पुं । शालवृक्षे । शालगाछ । रा.नि.व.९ । क्ली । शुक्रे, रेतसि । मे.लद्विकं । बदरीगुणे । वै.निघ.२भ.संग्रहणी.चि.व्योषादिचूर्णे । त्रि । अजीर्णे । मे. ।

**कलकः** । पुं । मत्स्यमत्स्ये । हे.च. । वेतसवृक्षे ।

**कलकण्ठः** । पुं । हंसे । पारावते । कोकिले । मे.ठचतुष्कं । शुकपक्षिणि । টেয়া পাখী । प.मु.।

**कलकफलः** । पुं । दाड़िमवृक्षे । [चतुष्कं ।

**कलकलः** । पुं । सर्ज्जनिर्यासे । धूनो । मे.ल-

**कलघण्टिका** । स्त्री । कृष्णशारिवायाम् । শ্যামা লতা । भा.पू.१भ. । See अनन्ता ।

**कलघोषः** । पुं । कोकिले । श.र. ।

**कलङ्कः** । पुं । लौहमले । कोड़े । अपवादे । मे.कत्रिकं । मत्स्यभेदे वै.निघ. ।

**कलङ्कषः** । पुं । सिंहे । श.मा. ।

**कलङ्की** । त्रि । लौहमलयुक्ते ।

**कलजः** । पुं । कुक्कुटे । वै.निघ. ।

**कलजातः** । पुं । कलमशाली । কল্মা ধান।

**कलञ्जः** । पुं । ताम्रकूटे । দোক্তা তামাক, খৰ্ষান তামাক । हिं तामाकू, सुरती । धूमपर्णी-धूमपानगुणाः—"कलञ्जसंवेष्टनधूमपानात् स्याद्दन्तशुद्धिर्मुखरोगहानिः । कफघ्नमामज्वरहानिकृच्च गान्धर्व्वविद्याप्रवणैकसेव्यम् ॥ इति विष्णुसिद्धान्त-सारावली । संख्याविशेषे यथा —"सशाली प्रोच्यते गुञ्जा सा त्रिसोरूपकं भवेत् । रूपकैर्दशभिः प्रोक्तः कलञ्जो नाम नामतः ।" युक्तिकल्पद्रुमः । वेत्रलतायाम् । विषास्त्रहतमृगपक्षिणोः । त्रिका. ।

**कलत्रम्** । क्ली । श्रोणौ । रा.नि.व.१८ । भार्य्यायाम् । मे.रत्रिकं । भगे । त्रिका. । [१२ ।

**कलधूतम्** । क्ली । रौप्ये । রূপা । रा.नि.व

**कलधौतम्** । क्ली । रजते । রূপা । स्वर्णे । সোণা । रा.नि.व.१२ । [मे.तचतुष्कं ।

**कलध्वनिः** । पुं । मयूरे । पारावते । कोकिले।

**कलनः** । पुं। वेतसे । বেতগাছ । रा.नि.व.९। क्ली । एकमासिकगर्भे । गर्भवेष्टने । हला. ।

**कलनादः** । पुं । कलहंसे । वै.निघ. ।

**कलन्धुः** । पुं । घोलीशाके । रा.नि.व.७ ।

**कलभः** । पुं । पञ्चवर्षपर्य्यन्तकरिशावके । उष्ट्रे । हला. । धुस्तूरवृक्षे । रा.नि.व.१० ।

**कलभवल्लभः** । पुं । पीलुवृक्षे । रा.नि.व.११।

**कलभवल्लभा** । स्त्री । पिक्यां । रा.नि.व.११।

**कलभी** । स्त्री । चञ्चुपे । रा.नि.व.४ ।

**कलमः (शालिः)** । पुं । शालिधान्यविशेषे । রোওয়া ধান । रा.नि.व.१६ । मगधादिषु प्रसिद्धे धान्यविशेषे । কলমা ধান । स एव महातण्डुल इति काश्मीरदेशे ख्यातः । "कलमः कालविख्यातः जायते स ह्रदवने । काश्मीरदेश एवोक्तो महातण्डुल एव च ॥" भा. । गुणाः – अयं महतो हीनगुणः स्वादुपाकरसत्वादियुक्तश्च । वा.सू.६अ. हेमाद्रि.धान्यवर्गे । पित्तश्लेष्मकरः वृष्यः मधुरश्च । रा.नि.व.१६ । कलमोऽल्पकन्निदोषघ्नश्चक्षुष्यश्च कषायवान् । राज.३प. ।

**कलमा** । स्त्री । शालिधान्ये । सा च श्लेष्मपित्तहा । अन्या च लघुः पथ्या वातश्लेष्मवर्द्धिनी च । अत्रि.१६अ. । [रा.नि.व.१६ ।

**कलमोत्तमः (मा)** । पुं,स्त्री । सुगन्धशालौ।

**कलम्बः (कः)** पुं। कदम्बवृक्षे । विश्वः । शाकनाड़िकायाम् । अम.। शरे । मे.बत्रिकं । सर्षपे । धाराकदम्बे । কেলিকদম্ । रा.नि.व.९ ।

**कलम्बशालिः** । पुं । शालिधान्यविशेषे । কল্মা ধান । [वै.निघ. ।

**कलम्बिकः** । पुं। पक्षिविशेषे । চটক পক্ষী ।

**कलम्बिका** । स्त्री । कलम्बीशाके । কলমীশাক। श.र. । ग्रीवापश्चान्नाड्याम् । हे.च. ।

**कलम्बिकी** । स्त्री। पक्षिणीभेदे ।

**कलम्बी** । स्त्री । Convolvulus repens. स्वनामख्यातजलजशाकविशेषे । কলমীশাক। हिं करेँबु । तें तोमिवच्चलिचेट्टु । प.मु. । गुणाः—स्तन्यदुग्धशुक्रश्लेष्मकरत्वं मधुरत्वं कषायत्वं गुरुतरत्वञ्च । राज.३प. । "कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥" भा. । उपोदक्याम् । পুঁই-শাক रा.नि.व.७ । [र. । See कलम्बी ।

**कलम्बुः (म्बूः)** । पुं, स्त्री । कलम्बीशाके । श.

**कलम्बुका** । स्त्री । जलजशाकविशेषे । কলমী শাক । भैष.शूलचि.शम्बुकादिगुड़ी । [हारा. ।

**कलम्बुटम्** । क्ली । हैयङ्गवीने । नवनीते ।

**कलयक्षः** । पुं । सर्जरसे । धूनो । वै.निघ. ।

**कलरवः** । पुं । गृहपारावते । अम. । कोकिले । रा.नि.व.१९ । वनकपोते । वै.निघ. ।

**कललः** । पुं । जरायौ । अम. ।

**कललजः** । पुं । राले । धूना । रा.नि.व.१२ ।

**कललजोद्भवः** । पुं । शालवृक्षे । रा.नि.व.६ ।

**कलविङ्कः** । पुं । चटकपक्षिणि । अम.रबा.८। कलिङ्गकवृक्षे । पारावते । ग्रामचटके । मे.कचतुष्कं । कृष्णचटके । सु.सू.४६ब. ।

**कलशः (सः)** । पुं । द्रोणपरिमाणे । ৩২সের। घटे । प.प्र.१ख. । [লিয়া । रबा. ।

**कलशिः (शी)** । स्त्री । पृश्निपर्ण्याम् । চাকু-

**कलसिः (सी)** । स्त्री । Hemionitis cordifolia. पृश्निपर्ण्याम् । চাকুলিয়া । प.मु.। रा.नि.व.४सु.सू.३८ध.सि.यो.च.द.ज्व.चि.किरातादौ. यक्ष.चि.बलाद्यघृते । वा.चि.१ष. । "कोलमूषाक्ककलसी ।" [सुरसादिव. ।

**कलहः** । पुं । सुस्वाम् । हिं सुस्वीरी । वा.मू.

**कलहंसः** । पुं । राजहंसे । कादम्बे । বালিহাঁস । रबा. । "पक्षैराधूसरैर्हंसाः कलहंसा इति स्मृताः ।" हला. । पीतवर्णहंसे । जलकुक्कुटे । वै.निघ. ।

**कलहंसकम्** । क्ली । अरोचकाधिकारे कवलमात्रम् । अस्य कवले धृते मुखवैशद्यं रुचिश्च भवति । च.द.अरो.चि. । "अष्टादशशिग्रुपलानि दशमरिचानि विंशतिश्च पिप्पल्यः । आर्द्रकपलं गुडपलं प्रस्थत्रयमारनालस्य । त्रिलवणसहितमेतत् खजाहतं सुरभिगन्धाढ्यं । व्यञ्जनसहस्रघाति श्रेयं श्लेष्मघ्नं मुखशुद्धिकृत् ।" रस.र. ।

**कलहनाशनः** । पुं । कुटजवृक्षे । पूतीकरञ्जे। নাটা । श.मा. । [পাথী । रा.नि.व.१९ ।

**कलहप्रिया** । स्त्री । सारिकायां । শালিক

**कलहाकुला** । स्त्री । शारिकायाम् । वै.निघ.।

**कला** । स्त्री । त्रिंशत्काष्ठात्मके कालपरिमाणे । सु.सू.६ष. । स्त्रीरजसि । Cellular tissue and fascia of the body. शरीरप्रत्यङ्गविशेषे । ताः सप्त—मांसधरा (शिरास्नाय्वादिस्थाने), रक्तधरा (मांसान्तःशिराः यकृत्प्लीहानी च), मेदोधरा (सूक्ष्मास्थ्युपरिसरक्तपिच्छिलपदार्थे), श्लेष्मधरा (सन्धिस्थानेषु श्लेष्मवत्पिच्छिलपदार्थेषु), पुरीषधरा (या पक्वाशयस्थाहारजन्यमलरक्षिणी), पित्तधरा (यत्र भुक्तद्रव्याणि आमाशयात्पक्वाशयं प्राप्य तिष्ठति), शुक्रधरा (सर्वकायव्यापिनी) । सु.शा.४ष.। कलास्वरूपं —"यथाहि सारः काष्ठेषु छिद्यमानेषु दृश्यते ... एवं ..."

कलास्वरूपं —"धातुभिष प्रतिच्छन्नान् सन्ततांश्च जरायुना । श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः । धात्वाशयान्तरे धातोर्यः क्लेदस्त्वधितिष्ठति । देहोष्मणाभिपक्वश्च सा कलेत्यभिधीयते ।" भा.म १भ. । वाजिनो जङ्घापार्श्वभागे । अ.द.२भ. मनःशिलायाम् । चन्द्रषोड़शांशे । वृद्धौ । त्रिका. । अंशे । मे.लद्विकं ।

**कलाकुलम्** । क्ली । विषे । रा.नि.व.६ ।

**कलाङ्कुरः** । पुं । The bird Ardea Sibirica. सारसपक्षिणि । त्रिका. । [२७ष. ।

**कलाङ्कुलिः** । पुं । शालिधान्यविशेषे । च.सू.

**कलाचिका (ची)** । स्त्री । प्रकोष्ठे । कफोणेरधो मणिबन्धपर्य्यन्ते । हे.च. । अश्वस्य जानुनोऽग्रिमे भागे । अ.द.२ष. ।

**कलाजाजी** । स्त्री । कारव्याम् । कृष्णजीरके । কালজীরে । हिं कलौंजी मंगरैला ।

**कलाटकः** । पुं । गरुड़शाखी । रा.नि.व.११।

**कलाटीनः** । पुं । The white water-wagtail. खञ्जनपक्षिणि । हारा. ।

**कलादः** । पुं । स्वर्णकारे । त्रिका. ।

**कलाधिकः** । पुं । कुक्कुटे ।

**कलानुनादी** । पुं । कलविङ्के । चटके । चातके । भ्रमरे । मे.नषट्कं ।

**कलापः** । पुं । मयूरपुच्छे । हला. । संहतौ । काञ्च्याम् । मे.पत्रिकं । क्ली । पद्मबीजे । वंशबीजे। वै.निघ. ।

**कलापकः** । पुं । करिकण्ठबन्धे । हे.च. ।

**कलापिन् (पी)** । पुं । मयूरे । हला. । कोकिले । प्लक्षवृक्षे । পাকুড় গাছ । मे.नचतुष्कं ।

**कलापिनी** । स्त्री । नागरमुस्तायाम् । নাগরমুথা । रा.नि.व.६ । रात्रौ ।

**कलामकः** । पुं । कलमधान्ये । हे.च. ।

**कलाय:** । पुं। (Pisum sativum.) Name of various leguminous seeds. मटर इति ख्याते शिम्बीधान्ये । र.मा. । माषकापरनामधेये शिम्बीधान्यविशेषे । বাঁটুলা মটর,তেওড়া মটর । हि केराव । तें पेद्दवर्व्व । स द्विविध:—त्रिपुटो वर्त्तुलश्च । गुणा:—अतिवातल: । वा.सू. शिम्बीधान्यव. । पित्तदाहकफघ्न: शीत: कषाय: रुचिपुष्टिप्रद: आमदोषकरश्च । रा.नि.व.१६ ।

**कलायक:** । पुं । कलमशालौ । কলমা ধান । रा.नि.व.१६ । गुणा:—"किञ्चित्कषाया मधुरा: प्रदिष्टा रक्तप्रशान्तिं जनयन्ति बल्या: । किञ्चित् सवातं विनिघ्नन्ति पित्तं कलायका मुद्गसमानरूपा: ।" अत्रि.१५अ. । [दूर्व्वायां । वै.निघ. ।

**कलायका** । स्त्री । मत्स्याक्ष्यां । হিঞ্চে । गण्ड-

**कलायखञ्ज:(खण्ड:)** । पुं । वायुरोगभेदे । लक्षणम् –"कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते । कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥" सु.नि.१अ. । "क्रम: कलायखञ्जस्य खञ्जपङ्गोरिव स्मृत: । विशेषात्स्नेहनं कर्म्म कार्य्यमत्र विचक्षणै: ॥"

**कलायशाकम्** । क्ली । शाकविशेषे । हिं केराउशाक । गुणा:—"कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित्" । भा.पू.१भ.शाकव. । "कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु । कषायानुरसञ्चैव विपाके मधुरञ्च तत् ॥" सु.सू.४६अ. ।

**कलायसूप:** । पुं । कलायकृतयूषे । गुणा:—"कलायसूप: कथितो लघु ग्राही सुशीतल: । रूक्षो मेध्य: पाककाले स्वादुरक्तगदपित्तनुत् । अरोचकहरश्चासौ कफनाशकरो मत: ॥ वै.निघ. ।

**कलाया** । स्त्री । गण्डदूर्व्वायाम् । श्वेतदूर्व्वायाम् । শ্বেতদূর্ব্বা । रा.नि.व.८ । कृष्णचणके । কাল ছোলা । प.मु. । [व.१० ।

**कलारुहा** । स्त्री । स्वर्णकेतकीवृक्षे । रा.नि.

**कलालाप:** । पुं । भ्रमरे । रा.नि.व.८ ।

**कलाविक:** । पुं । कुक्कुटे । त्रिका. ।

**कलाविकल:** । पुं । चटके । श.र. ।

**कलि:** । पुं । विभीतकवृक्षे । भा.म.१भ.मेद. चि. । क्ली । कलिकायाम् । मे.खदिरं । श्वेतधुस्तूरे । भल्लातकवृक्षे । वै.निघ. ।

**कलिक:** । पुं । क्रौञ्चपक्षिणि । কোঁচবক । वंशधान्यभेदे । বাঁশের ধান ।

**कलिका** । स्त्री । वृश्चिकाल्यां । বিছাতিগাছ । रा.नि.व.८ । शरपुङ्खायाम् । पुष्पकोरके । कृष्णनीलिकायाम् । वै.निघ.।पुष्पविशेषे । কলকে ফুল ।

**कलिकार:** । पुं । धूम्याटपक्षिणि । ফিঙে । पीतमस्तकपक्षिणि । करञ्जवृक्षे । मे. । जलपिप्पल्याम् । वै.निघ. । [स्त्री । নাটাকরঞ্জ । अम. ।

**कलिकारक:** । पुं । पूतिकरञ्जे । लटाकर-

**कलिकारिका** । स्त्री । लाङ्गलीवृक्षे । विषलाङ्गलिया । वै.निघ. ।

**कलिकोत्तम:** । क्ली, पुं । लवङ्गे । गन्धशालौ ।

**कलिङ्ग(क)म्** । क्ली । इन्द्रयवे । च.द.पि.ज्व. कलिङ्गादि. । "कलिङ्गं कटफलं मुस्तं पाठातिक्तकरोहिणी ।" च.द.ज्वराति.चि.श.र. । "दारुपाठाकलिङ्गकम् ।"

**कलिङ्ग: (क:)** । पुं । प्लक्षवृक्षे । পাকুড় গাছ । कुटजवृक्षे । কুড়চি গাছ । शिरीषवृक्षे । रा.नि. व.६ । इन्द्रयवे । रत्ना.८ । र.सा.सं. सि.यो.रात्रिज्वरे । कलिङ्गकलामलकी । सि.यो.पिप्पल्यादिघृते । पूतिकरञ्जे । पक्षिविशेषे । ফিঙা । मे.गत्रिकं । वा.चि.१अ. । तरम्बुजे । তরমুজ । गुणा: —मधुर: शीतलो वृष्यो बल्य: पित्तदाहघ्न: सन्तर्पण: वीर्य्यकरश्च । रा.नि.व.७ । चातकपक्षिणि । इला. । विभीतके वृक्षे । त्रिका. ।

**कलिङ्गज:** । पुं । इन्द्रयवे । वै.निघ. ।

**कलिङ्गद्रु:** । पुं । कुटजवृक्षे । भा.म.१भ.काश. चि. । "कलिङ्गद्रुफलं रज: ।"

**कलिङ्गयव:** । पुं । इन्द्रयवे । च.द. । सि.यो. लवणोत्तमाद्यचूर्णे ।

**कलिङ्गवीजम्** । क्ली । इन्द्रयवे । रा.नि.व.६ ।

**कलिङ्गशुण्ठी** । स्त्री । तद्देशज-शुण्ठीविशेषे । गुणा:—तिक्ता बलकरी अग्निदीपनी अजीर्णहरी बालकातिसारघ्नी । सा यवक्षारयुक्ता गर्भिण्या वान्तिं हरेत् । अत्रि. । [त्रिवृतायां । श.च. ।

**कलिङ्गा** । स्त्री । कर्कटशृङ्ग्याम् । र.मा. । श्वेत-

**कलिङ्गादिकषाय:** । पुं । "कलिङ्गका: प-

टीलस्य पत्रं कटुकरोहिणी" इत्येतद्द्रव्यकृतकषाये। स च सन्ततादीनां शमनः। वा. चि.१अ.। कषायोऽयं पित्तज्वरघ्नः। च.द.पित्तज्व.चि.।

**कलिङ्गाद्यगुड़िका** । स्त्री। ज्वरातिसारे। पाठः—"कलिङ्गबिल्व(निम्ब)जम्बाम्रकपित्थं सरसाञ्जनं। लज्जा हरिद्रे ह्रीवेरं कट्फलं शुकनासिका। लोध्रं मोचरसं शङ्खं धातकी वटशृङ्गकं। पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्। छायाशुष्कान् पिबेत्...॥" इन्द्रयवादीनां प्रत्येकं समभागं गृहीत्वा तण्डुलोदकेन विमर्द्य वटी कार्य्या छायायां शोषणीया च। शुकनासिका श्योणाकलक्। च. द.भैष.। चर्म्मकषेति केचित्। "जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं तण्डुलोदककर्म्मणि॥" प.प्र.३प.। [ह्लकज्व.चि.।

**कलिञ्जः** । पुं। कुलिञ्जने। वै.निघ.२भ.जि-

**कलितरुः** । पुं। विभीतकवृक्षे। वै.निघ.स्वरभेदचि.।

**कलिद्रुः (मः)** । पुं। सरलदेवदारौ। भल्लातकवृक्षे विभीतकवृक्षे। रा.नि.व.११,भा.म.१भ. कण्ठकुब्ज.ज्व.चि.। "किरातकटुकाकण्ठाः कुटजकट्फलकारीशटीकलिद्रुकिलिमाभयाः।"

**कलिन्दः** । पुं। सूर्य्ये। विभीतकवृक्षे। रा.नि. व.२३। मेलकवृक्षे। सरलदेवदारौ। वै.निघ.।

**कलिन्दकः** । पुं। कर्कारौ। तरम्बुजे। वै.निघ.।

**कलिप्रदः** । पुं। मद्यशालायाम्। वै.निघ.।

**कलिप्रियः** । पुं। वानरे। श.र.।

**कलिफलम्** । क्ली। विभीतकफले। च.द.।

**कलिमः** । पुं। शिरीषवृक्षे। वै.निघ.।

**कलिमारः(कः)** । पुं। पूतिकरञ्जे। काटकवति करञ्जे। च.टी.र.।

**कलिमालः,(ल्यः)कः** । पुं। पूतीकरञ्जे। नाटाकरञ्ज। रा.नि.व.९। [पू.१भ.।

**कलियुगालयः** । पुं। विभीतकवृक्षे। भा.

**कलियुगावासः** । पुं। विभीतकतरौ। भा.।

**कलिवृक्षः** । पुं विभीतकवृक्षे। हे.च.।

**कलिहारी** । स्त्री। लाङ्गल्याम्। विषलाङ्गलिया। हि करिहारी। भा.पू.१भ.। वै.निघ.वा. व्या.महाविषगर्भतैले।

**कली** । स्त्री। कलिकायाम्। च.टी.भ.।

**कलुः** । पुं। गरुडशाली। पक्षिराज धान्य। रा.नि.व.१६।

**कलुषः(षा)** । पुं,स्त्री। महिषे। रा.नि.व.१९। मण्डलिसर्पे। सु.कल्प.४अ.। See सर्पः।

**कलुषमञ्जरी** । स्त्री। जिङ्गिन्याम्। वै.निघ.।

**कलेवरम्** । क्ली। शरीरे। रा.नि.व.१८।

**कलोद्भवः** । पुं। कलमशालौ। कलमा धान। रा.नि.व.१६।

**कल्कः (ल्कम्)** । पुं,क्ली। रसपिष्टद्रव्यपिण्डे। जले बाटा द्रव्य। यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम्। च। मध्वादिपेषितद्रव्ये। "कल्को मध्वादिपेषितैः।" रा.नि.व.२०। तस्य मात्रा कर्षमिता। तत्र मधुघृततैलमात्रा द्विगुणा, सितागुड़ं समं, द्रवाश्च चतुर्गुणाः ग्राह्याः। प.प्र.१ख.। घृततैलादिशेषे। मे.कद्विकं। घृततैलादिपाके दृषदि पेषिते देयद्रव्ये। "द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलमिश्रितं। तदेव सुरभिः पूर्व्वैः कल्क इत्यभिधीयते॥" प.प्र.१ख.। द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलम्भवेत्। प्रक्षिप्य गालयेदस्ले तन्माषकर्षसम्मितम्॥ भा.। "यः पिण्डश्चार्द्रपिष्टानां स कल्क इति कीर्त्तितः। इत्यवैद्यवचः साक्षात्कल्को दृषदि पेषितः॥ मात्रा पिचुमिता तत्र द्विगुणं माक्षिकादिकम्। सितां गुड़ं समं दद्याद्द्रवा देयाश्चतुर्गुणाः॥" इति कल्कविधिः। कर्णमले। श.र.। तुरुष्कनामगन्धद्रव्ये। शिलारस। रा.नि.व.१२। See सिह्लकः। विष्ठायां। किट्टे। मे.कद्विकं। करिदन्ते। वै.निघ.।

**कल्कफलः** । पुं। दाड़िमवृक्षे। रा.नि.व.११।

**कल्करोध्रः** । पुं। पट्टिकारोध्रे। रा.नि.व.६।

**कल्किवृक्षः (धर्म्मघ्नः)** पुं। विभीतकवृक्षे। रा.नि.व.११। [नि.व.२०।

**कल्यः** । पुं। विधौ। रोगमुक्तौ। कल्पवृक्षे। रा.

**कल्पकः** । पुं। नापिते। श.मा.। कर्चूरे। भा. पू.१भ.।

कल्पतरुः । पुं । कल्पवृक्षे । क्रमुकवृक्षे । रा.नि.व.११। तन्नामकज्वरघ्नरसे । पाठः—"रसं गन्धं विषं ताम्रं समभागं विचूर्णयेत् । भावयेत्पञ्चभिः पित्तैः क्रमशः पञ्चवासरम् ॥ निर्गुण्डी स्वरसेनैव मर्द्दयेत्सप्तवासरम् । आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुनः ॥ सर्षपाभा वटी कार्य्या छायया परिशोषिता ।" जीर्णज्वरे विषमज्वरे च २१ वल्लः प्रयोज्याः । कज्जलीपिप्पलीयुतमुष्णजलं पाययेत् । शर्करया दधि देयं स्नापयेच्च । भैष.ज्व.चि. ।

कल्पद्रुः (मः) । पुं । कल्पतरौ । आरग्वधवृक्षे । সোণালু গাছ । वै.निघ. ।

कल्पनम् । क्ली । कृप्तौ । कर्त्तने । त्रिका. ।

कल्पना । स्त्री । हस्तिसज्जायाम् । अम. । रचनायाम् ।

कल्पनी । स्त्री । कर्त्तर्य्याम् । কাঁচি । हे.च. ।

कल्पपादपः । पुं । कल्पवृक्षे । विभीतकवृक्षे ।

कल्पवृक्षः । पुं । विभीतकवृक्षे । कल्पपादपे । अम. । रत्ना. । [मद्ये । वै.निघ. ।

कल्या । स्त्री । श्वेतजातीवृक्षे । শ্বেতচামিলী ।

कल्पान्तः । पुं । प्रलयकाले । अम. ।

कल्मषम् । क्ली । पापे । करपुच्छे । त्रिका. ।

कल्माषः । पुं । सुगन्धशाली । रा.नि.व.१६ ।

कल्यम् । क्ली । सुरायाम् । हला. । प्रभाते । मे. यदिकं । मधुनि । हे.च. । त्रि । वाक्श्रुतिरहिते । नीरोगे । सु.चि.२६अ. । "कल्यस्योदयवयसः ।" दचे । मे.यदिकं ।

कल्यजग्धिः । स्त्री । प्रातर्भोजने । जटा. ।

कल्यद्रुमः । पुं । विभीतकवृक्षे । वै.निघ. ।

कल्यवर्त्तः । पुं । प्रातराशे । त्रिका. । [श.र. ।

कल्या । स्त्री । मद्ये । मे.यदिकं । हरीतक्याम् ।

कल्याङ्गः । पुं । पर्पटक्षुपे । ক্ষেৎপাপড়া । रा.नि.व.५ ।

कल्याणम् । क्ली । सुवर्णे । सुखे । रा.नि.व. १३ । पुं । लघुसर्ज्जवृक्षे । শাল গাছ । [वै.निघ. ।

कल्याणकः । पुं । पर्पटके । ক্ষেৎপাবড়া ।

कल्याणगुड़ः । पुं । ग्रहण्यधिकारे । पाठः—"प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य । चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णाहवुषाजमोदैः । विड़ङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पलप्रमाणैः । दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् । तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ।" पाकनियमः—आमलकीस्वरसाः १२श. इक्षुगुड़ाः ६।०श. यथाविधि एकत्र पचेत् । श्लिष्टप्राये पाके पिप्पलीमूलादीनां प्रत्येकं पलं (८ तो.), त्रिवृच्चूर्णस्य शरावं (८ तो.) तैलस्य च शरावं (८ तो.) प्रक्षिपेत् । तथा त्रिसुगन्धस्य पृथक् पलं मिश्रयेत् । तथा त्रिवृता तैलभर्ज्जिता देया इति वृद्धाः । प्रक्षेपद्रव्याणि—पिप्पलीमूलं जीरकं चव्यं त्रिकटु गजपिप्पली हवुषा वनयमानी विड़ङ्गं सैन्धवं त्रिफला यमानी पाठा चित्रकमूलं धान्यकञ्च । च.द.ग्रह.चि. । रस.र. । भैष. ।

कल्याणघृत(पानीय)म् । क्ली । विषमज्वरे उन्मादे च । पाठः—"विड़ङ्गत्रिफलादन्तीभद्रदारुहरेणवः । तालीशपत्रमञ्जिष्ठाकेसरोत्पलपद्मकं। दाड़िमं मालतीपुष्पं रजन्यौ शारिवे स्थिरे । प्रियङ्गुस्तगरं कुष्ठं बृहत्यौ चैलवालुकं । सचन्दनगवाक्षीभिरेतैः सिद्धं विषापहं । सर्पिः कल्याणकं···। শ্যামালশশা, ত্রিফলা, রেণুক, দেবদারু, এলবালুক, শালপাণি, তগরপাদুকা, হরিদ্রা, দারুহরিদ্রা, অনন্তমূল, শ্যামালতা, প্রিয়ঙ্গু, নীলোৎপল, এলাচ, মঞ্জিষ্ঠা, দন্তী, দাড়িম, নাগেশ্বর, তালীশপত্র, বৃহতী, মালতীপুষ্প, বিড়ঙ্গ, চাকুলিয়া, কুড়, রক্তচন্দন, পদ্মকাষ্ঠ প্রত্যেকে ২ তো. ঘৃত ৩২ প. জল ১৬ শ. । एतच्च घृतं त्रिगुणं जलं चतुर्गुणञ्च दुग्धं दत्त्वा यदा पचेत् तदा क्षीरकल्याणमुच्यते । सा.कौ.उन्मा. चि. । सु.कल्प.७अ. । भैष. । अन्यत् दाहाधिकारे महत् कल्याणकं घृतम् । पाठः—"चतुर्गुणे शतावर्य्या रसे क्षीरं चतुर्गुणं । सर्पिः प्रस्थं बलानाजी मञ्जिष्ठा पीवरी निशा । काकोल्यौ मधुमेदे द्वे ऋद्धी द्वे देवदारु च । एषामष्टपलैः कल्कैः पचेत्कल्याणकं महत् ॥ ঘৃত ৪ শ. শতমূলীরস ১৬ শ. দুগ্ধ ১৬ শ. কল্ক—জীরা, শ্বেত বেলেড়া, মঞ্জিষ্ঠা, অশ্বগন্ধা, হরিদ্রা, কাকোলী, ক্ষীরকাকোলী, যষ্টিমধু, মেদা, মহামেদা, ঋদ্ধি,

वृक्षि, দেবদারু। প্রত্যেকে ৮ তো.। रस.र.।

**कल्याणलेहः** । पुं । वातव्याध्यधिकारे हिक्का-श्वासे च । पाठः—"सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजं । अजाजी चाजमोदा च यष्टीमधुकसैन्धवं । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् । तच्चूर्णं सर्पिषालोड्य प्रत्यह भक्षयेन्नरः । एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ॥" अजाजी जीरके, अजमोदा यमान्याम्, यष्टी यष्टीमधु, मधुकं मधुकपुष्पं । মউল ফুল । च.द.वा.व्या.चि.। रस.र. । भैष. ।

**कल्याणवीजः** । पुं । मसूरवृक्षे । रा.नि.व.१६।

**कल्याणसुन्दराभ्रम्** । क्ली । राजयक्ष्मणि रसः । पाठः—"वज्राभ्रमेकपलिकं पुटनैः सुजीर्णं धात्रीपयोदवृहतीशतमूलकेक्षु । विल्वाग्निमन्थजलवासककण्टकारीश्योणाकपाटलिवलाख्य रसैरमीषां । सम्मर्द्दितं पलमितैः पृथगेकशश्च । गुञ्जासमा सुवलिता वटिका कृता च ।"……জারিত অভ্র ৮ তোলা, আমলা, মুতা, বৃহতী, শতমূলী, ইক্ষু, বিল্বপত্র, গণিরি, বালা, বাসকপত্র, কণ্টকারী, শোণা, পারুল, বেলেড়া প্রত্যেকের ১ পলমিত রসে মর্দন । भैष. । [व.१२ ।

**कल्याणिका** । स्त्री । मनःशिलायाम् । रा.नि.

**कल्याणिनी** । स्त्री । बलानामक्षुपे । বেলেড়া । रा.नि.व.४ ।

**कल्याणी** । स्त्री। रालवृक्षे । सर्जवृक्षे । वै.निघ.। गवि । रा.नि.व.१९ । माषपर्ण्यां । रा.नि.व.३ ।

**कल्लः** । त्रि । वधिरे । त्रिका. । [हे.च. ।

**कल्लता (त्वम्)** । क्ली । वाधिर्य्ये । स्वरभेदे ।

**कवकः** । पुं । ग्रासे । कवले । हे.च.। क्ली । छत्राके ।

**कवचः** । पुं, क्ली । पर्पटके । "कवचः स्यात् पर्पटके ।" रा.नि.व.५।२१ । वचा कवचकञ्चुरा···।" गर्द्दभाण्डवृक्षे । गाञ्जीभाँट इति लोके । त्वचि । দারচিনি । भूर्जवृक्षे । नन्दीवृक्षे । सै.च-त्रिकं ।

**कवचपत्रम्** । क्ली । भूर्जपत्रे । श.च. ।

**कवचीयन्त्रम्** । क्ली । औषधपाकार्थं यन्त्रविशेषे । तद्यथा—"नातिकठिनां काचकूपीं न चातिमृदुतीं दृढां । वाससा कर्दमाक्तेन परिवेष्ट्य समन्ततः । संलिप्य मृदुमृत्स्नाभिः शोषयेन्नातुरश्मिना । निधाय भेषजं तत्र मुखमाच्छादयेत्ततः । कठिनां दृढ़या वापि पचेदन्ते विधानतः । कवचीयन्त्रमित्युक्तं रसादिपचने मतम् ॥" आत्रेयः ।

**कवड़ः** । पुं । कवले । গণ্ডুষ । रवा. ।

**कवड़ग्रहः** । पुं । कर्षे । ২ তোলা । प.प्र. १ख. । च.द.खदिरवटी ।

**कवयिः (यी)** । स्त्री । (Coius coboius.) मत्स्यविशेषे । কই মাছ । गुणाः—मधुरा स्निग्धा कषाया रुच्या ईषत्पित्तकरी बल्या वातघ्नी च । भा. । हारा. ।

**कवरः** । पुं, क्ली । कवर्य्याम् । বনতুলসী । त्रिका.। लवणे । अम्ले । मे. । हे.च. । सामुद्रलवणे । र.मा. ।

**कवरा (री)** । स्त्री । वर्वरायाम् । বাবুই इति भाषा । श.र.। वनतुलस्याम् । अम. । वर्व्वूरवृक्षे । বাবলা গাছ । रक्तकरवीरे । मनःशिलायाम् । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

**कवरीकः** । पुं । सुगन्धपत्रवृक्षविशेषे । ফুলাল তুলসী । यथा—"कस्तूरिकाग्लिङ्गन्धः कवरीकः स्वनामकः ।" इति द्रव्याभिधानम् ।

**कवरीकला** । स्त्री । मनःशिलायाम् ।

**कवरीकूटकः** । पुं । कवर्य्याम् । त्रिका. ।

**कवलः** । पुं । चिलिचिममत्स्ये । বেলে মাছ । श.च. । ग्रासे । रवा. । गण्डूषद्रव्ये । কুলকুচা, কুল্লি করা । सा मात्रा या मुखे धृता सुखं सञ्चार्य्यते । "सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता ॥" भैष. । See गण्डूषः ।

**कवलग्रहः** । पुं । कर्षपरिमाणे । सु. । मुखे कवलस्य यद्वा धारणम् । तस्य विधिर्यथा—"तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलसुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रततमुपस्विन्नमर्द्दितं गलकपोलललाटप्रदेशे धारयेत् । तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतोनयनपरिस्रावश्च भवति, तदा विमोक्तव्यः पुनश्चान्यो गृहीतव्य"

ति। सु.चि ४०अ.। गुणाः—"कवलः कुरुते गाढ़ां भवेतु हरते कफम्। तथां तीयश्च वैरस्यं मलवालञ्च नाशयेत्॥" वै.निघ.। स चतुर्विधः—स्नेही प्रसादी शोधी रोपणश्चेति। तत्र वाते स्नेही स्निग्धोष्णैर्द्रव्यैः, प्रसादनो पित्ते स्वादुशीतैः। शोधनः कफे कटुम्ललवणैः रूक्षोष्णैश्च। रोपणो व्रणे कषायतिक्तमधुरैः कटूष्णैश्च। तस्य मात्रा सा या सुखसञ्चारिणी भवेत्। "चतुर्धा कवलः स्नेही प्रसादी शोधिरोपणौ। स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः। पित्ते कटुम्ललवणैः रूक्षोष्णैः शोधनः कफे। कषायतिक्तमधुरैः कटूष्णैः रोपणो व्रणे। तथा सुखं सञ्चार्य्यते या तु मात्रा सा कवले स्मृता॥" सु.चि.४०अ.।

**कवलिका।** स्त्री। Bandage. व्रणबन्धनार्थम् उदुम्बरादिवल्कले। सु.सू.१८अ.। चि.२अ.।

**कवली।** स्त्री। वदरीवृक्षे। हला.।

**कवसः।** पुं। कण्टकगुल्मे।

**कवाटच(व)क्रम्।** क्लीं। स्वनामख्यातवृक्षे। तें कराड़िया, कवाटवेंटु। वैरटुआ इति च भाषा। र.मा.।

**कवारम्।** क्लीं। पद्मे। त्रिका.। पुं। (Tantalus falcinellus.) पक्षिविशेषे। करात पाखी। वै.निघ.। [हला.।

**कविः (कम्)।** स्त्री,क्लीं। खलीने। लागाम।

**कविका।** स्त्री। केविकापुष्पवृक्षे। केरव इति कोङ्कणदेशे प्रसिद्धे। रा.नि.व.१०। तें पुष्पविशेषम्, खलिने। हिं कड़िआली। लागाम। कवयीमत्स्ये। तें मत्स्यविशेषम्। त्रिका.।

**कविञ्जकः।** पुं। पक्षिविशेषे।

**कवि(गि)त्थः।** पुं। कपित्थवृक्षे। अ.टी.।

**कवेलम्।** क्लीं। उत्पले। नीलपद्म। श.च.।

**कवोड़वक्रः।** पुं। कवाटवक्रवृक्षे। र.मा.।

**कवोष्णम्।** त्रि। ईषदुष्णे। अम.। क्लीं। उष्णतायाम्। [सरोहिण्याम्। भा.पू.१भ.गु.व.।

**कशा।** स्त्री। अश्वादिताड़न्याम्। हे.च.। मां-

**कशिका।** स्त्री। चर्म्मकषायां। চামরকশা। च.द.शू.चि.लौहामृते।

**कशिपुः।** पुं। भक्ते। वस्त्रे। रा.नि.व.२०।

**कशेरु:(रूः)का:।** पुं,क्लीं। पृष्ठकीकसे। पृष्ठास्थिनि। পিঠের দাঁড়া। हला.। स्त्री। स्वनामख्यातघासे। কেশুর। र.मा.। See कसेरुः।

**कशेरु(रू)कम्।** क्लीं। कशेरुणि। কেশুর। प.मु.।

**कशेरु(रू)का।** स्त्री। पृष्ठास्थिनि। पृष्ठवंशे। हला.। वै.निघ.। कशेरौ। কেশুর। अम.।

**कश्मलम्।** क्लीं। मूर्च्छायाम्। मोहे। अम.।

**कश्मीरजम् (न्म)।** क्लीं, पुं। कुङ्कुमे। अ.टी. रा.।

**कश्यम्।** क्लीं। मद्ये। पुं। अश्वे। मे.यद्विकं। कषार्हैऽश्वे। हे.च.। अश्वमध्यभागे। वै.निघ.।

**कश्यपः।** पुं। मत्स्यभेदे। विश्वः। मृगविशेषे। मे.। [अपक्के। श.च.।

**कषणः।** पुं। शलाटौ। क्लीं। कण्डूयने। त्रि।

**कषपाषाणः।** पुं। स्वर्णमर्णो।

**कषायः।** पुं। कपित्थवृक्षे। महासर्जवृक्षे। वै.निघ.। मण्डलिसर्पे। सु.कल्प.४अ.। Decoction of infusion. क्वथितैर्वस्तुभिः कृते क्वाथमात्रे। षोड़शगुणाम्भसा पक्वः चतुर्भागावशिष्टक्वाथः कषाय उच्यते। र.मा.। "पादशिष्टः कषायः स्याद् यः षोड़शगुणाम्भसा।" भा.। अष्टभागावशिष्ट इति। शार्ङ्ग.१अ.। कषायः पञ्चविधाः स्वरसकल्कक्वाथहिमफाण्टभेदेन यथोत्तरं लघवश्च भवन्ति। श्योणाकवृक्षे। শোণা গাছ। धवः। धववृक्षे। ধাওরা গাছ। लकुचवृक्षे। ডেলো গাছ। रा.नि.व.८। निर्यासे। विलेपने। अङ्गरागे। मे.। पुं, क्लीं। An astringent flavour. षड्रसान्यतमरसविशेषे। कषा। स पूगीफलादौ स्वाद्यः। रा.नि.व.२०। स च भूम्यग्निगुणबहुलः हिमगुरुरूक्षः, सम्भी शमनः ग्राही सुखशोषजिह्वास्तम्भादिकृत् तद्विपाकोऽपि कटुः. तद्विपाकगुणश्च वातकृत् कफपित्तघ्नश्च। दीपनः पाचनः शोफरोधकः शैथिल्यकरः अतिसेवितः पाण्डु करोति च। यो वक्त्रं शोधयति जिह्वां स्तम्भयति कण्ठं वध्नाति हृदयं कर्षति पीड़यति स कषायकः। सु.सू.४२अ.। अ-न्यच्च। कषायः शोषणः सम्भी व्रणपाकार्त्तिनाशनः।

कफशोणितपित्तघ्नो रूक्षः शीतो गुरुस्तथा ॥ राज.। वैशद्यं स्तम्भजाड्यैर्यो रसनं योजयेद्रसः। बध्नातीव च सः कण्ठं कषायः स विकास्यपि ॥ च.। अतियुक्तस्य गुणः—सोऽतियुक्तः शूलाध्मानहृत्पीड़ाचिद्यणादिकृत् । भा.। कषायस्य कल्पनं पञ्चविधम् —स्वरसकल्कशृतशीतफाण्टभेदेन। एषाञ्च यथापूर्व्वं बलाधिक्यम् । च.सू.४अ.। "क्षीररः स्वरसः प्रोक्तः कल्को दृषदादिपेषितः। क्वथितस्तु शृतः शीतः शर्व्वरीमुषितो मतः। चिसोष्णतोये मृदितः फाण्ट इत्यभिधीयते। पञ्चैतास्तु समुद्दिष्टाः कषायाणां प्रकल्पनाः ॥" प.प्र.१ख.। कषायपाकविधिः। "तत्र केचिदाहुः त्वक्पत्रमूलादीनां भागस्तच्चतुर्गुणजलमावाप्य चतुर्भागावशेषं निःक्काथ्यापहरेत्। अथवा तत्तोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्काथ्यापहरेत्।" सु.चि.३१अ.। त्रि। सुगन्धे। त्रिका.।

**कषायकृत्** । पुं। रक्तलोध्रे। जटा.।

**कषायजलम्** । क्ली। अश्वत्थोदुम्बरशिरीषवटसिद्धे जले।

**कषायदन्तः (दशनः)** । पुं। मूषिकभेदे। अस्य शुक्रं यत्र पतति तत्र शोथकोथाद्यौ जायन्ते। वा.उ.३८अ.। सु.कल्प.६अ.।

**कषायनित्यः** । त्रि। नित्यमतिमात्रकषायरससेविनि। च.।

**कषायफलम्** । क्ली। पूगफले। वै.निघ.।

**कषाययावनालः** । पुं। तुवरयावनालधान्ये। जनारविशेष। रा.नि.व.१६।

**कषाययोनिः** । स्त्री। कषायाधिकरणे। सा च पञ्चधा—मधुरकषायः अम्लकषायः कटुकषायः तिक्तकषायः कषायकषायश्चेति। च.सू.४अ.।

**कषायवर्गः** । पुं। कषायरसद्रव्यगणे। कषा जिनिषेर वर्ग। त्रिफला शल्लकी जम्ब्वाम्रवकुलतिन्दुकफलानि न्यग्रोधाद्यम्बष्ठादिप्रियङ्ग्वादिलोध्रादिशालसारादीनि कतकशाकपाषाणभेदकवनस्पतिफलानि कुरवककोविदारकजीवन्तीचिल्लीपालक्यासुनिषण्णादिनीवारकादयः मुद्गादयश्च समासेन कषायवर्गः। सु.सू.४२अ.। [फलत्वचे। च.चि.४अ।

**कषायवृक्षः** । पुं। वटामलकादिकषायत्वक्-

**कषायस्कन्धः** । पुं। प्रियङ्ग्वादिकषायद्रव्यकृतास्थापनविशेषे। च.चि.८अ.।

**कषाया** । स्त्री। रक्तदुरालभायाम्। क्षुद्रदुरालभायाम्। रा.नि.व.४। आम्रातके। खर्जूरीवृक्षे। वै.निघ.।

**कषायी (इन्)** । पुं। सर्ज्जवृक्षे। धूनार गाछ। शालवृक्षे। रा.नि.व.६। जटा.। खर्जूरीवृक्षे। (थेजूर गाछ। लकुचवृक्षे। रा.नि.व.११। शाकवृक्षे। क्षुद्रपनसे। वै.निघ.।

**कषिका** । स्त्री। पक्षिजातौ। उणा.। [टी.रा.।

**कषेरुका** । स्त्री। कशेरुकायां। पृष्ठास्थि। अ.

**कष्टम्** । क्ली। पीड़ायाम्। हे.च.।

**कष्टकारकः** । त्रि। पीड़ाकरे। त्रिका.।

**कष्टस्थानम्** । क्ली। पीड़ाजनकस्थाने। हारा.।

**कष्टिः** । स्त्री। पीड़ायाम्। वै.निघ.।

**कष्ठीरम्** । क्ली। रङ्गे। वङ्ग। रत्ना.।

**कसका** । स्त्री। कासमर्द्दे। वै.निघ.२भ.कल्याणघृते। [र.पि.चि.

**कसनम्** । क्ली। कासे। वेदनाविशेषे। च.ठ.

**कसनमर्द्दनः** । पुं। कासमर्द्दवृक्षे। कालकासन्दा। वै.निघ.। [लूता।

**कसना** । स्त्री। कृच्छ्रसाध्यलूताविशेषे। See

**कसनोत्पाटनः** । पुं। वासकवृक्षे। वाकस् गाछ। श.च.।

**कसिपुः** । पुं। अन्ने। जटा.।

**कसेरुः** । पुं,स्त्री। Back bone. पृष्ठास्थिनि। মেরুদণ্ড। रा.नि.व.१८। मुस्तायाम्। 'कसेरुर्भद्रमुस्तके'।रा.नि.व.६।२३ (Scirpus kysoor.) स्वनामख्याततृणविशेषे। কেশুর। मं कं कसेरुवा। सेकिनगड़े। तुंगगड्डु। तें दुंप्ति, कोति। तत्र द्विविधं राजकसेरुकं चिचोढ़स्य। तयोः चिचोढ़ मुस्ताकृति लघु च। सा. गुणाः—"कसेरुकद्वयं शीतं मधुरं तुवरं गुरु। पित्तशोणितदाहघ्नं नयनामयनाशनम् ॥" भा.। कषायः अल्पमधुरः कटुतिक्तकः रक्तपित्तघ्नः शीतः दाहश्रमघ्नः। रा.नि. व.८। पुष्पञ्चास्य कामलाहरं पित्तनाशकरञ्च। वै.

निघ.। गुरु विष्टम्भि शीतलञ्च। राज.४५.। च.
क्र.। [१७ष.।

**कसेरुकः** । पुं। कसेरौ। नागरमुस्तके। सु.चि.

**कसेरुका** । स्त्री। कसेरौ। केशुर। रा.नि.
व.८। पृश्निपर्णि। पृष्ठदण्ड। रा.नि.व.१८।

**कस्तीरम्** । क्ली। पिचटे। पिचुटी। वङ्गे।
हे.च.।

**कस्तीर्णम्** । क्ली। रङ्गे। राङ्। प.मु.।

**कसु(स्तू)रिका (री)** । स्त्री। मृगनाभौ।
मृगनाभि। हिं कस्तूरी। तें कस्तूरिपिल्लि। सा
त्रिधा—कामरूपोद्भवा, नैपाली, काश्मीरी च।
तत्र प्रथमा कृष्णा श्रेष्ठा च, द्वितीया नीलवर्णा म-
ध्यमा च, शेषा अधमा। भा.। गुणाः—"कस्तूरी
छर्दिदौर्गन्ध्यरक्तपित्तकफापहा। राज.। कटुः ति-
क्ता उष्णा शुक्रला गुरुः शीतघ्नी वातशोषहा सधा-
रा चेति।" भा.। "चक्षुष्या मुखदोषघ्नी किला-
सकुष्ठघ्नी च।" मद.। तथा "कपिला पिङ्गला कृ-
ष्णा कस्तूरी त्रिविधा क्रमात्। नेपालेऽपि च का-
श्मीरे कामरूपे च जायते॥ साप्येका खरिका त-
तश्च तिलका ज्ञेया कुलित्थापरा पिण्डान्यापि च
नायिकेति च परा या पञ्चभेदाभिधा। सा शुद्धा
मृगनाभितः क्रमवशाद्देशा चितौशोचिता पञ्च
त्यादिदिनत्रयेषु जनिता कस्तूरिका स्तूयते॥ चू-
र्णाकृतिस्तु खरिका तिलकानिलाभा कौलित्थवी-
जसदृशी च कुलित्थिका च। स्थूला ततः किय-
दियं किल पिण्डकाख्या तस्याश्च किञ्चिदधिका
यदि नायिका सा॥" इति कस्तूरीनिकरलक्षणं।
"स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते लाघवं
तोलने च। याप्सु न्यस्ता नैव वैवर्ण्यमीयात् कस्तूरी
सा राजभोग्या प्रशस्ता। अपिच या गन्धं केतकी-
नामपहरति मदं सिन्दुराणाञ्च वर्णे स्वादे तिक्ता
कटुर्वा लघुरथ तुलिता मर्द्दिता चिक्कणा स्यात्।
दाहं वा नैति वह्नौ शिमिशिमिति चिरं चर्म्मगन्धा
हुताशे सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते
राजभोग्या।" इति कस्तूरीपरीक्षालक्षणम्। अ-
न्यच्च "बाले जरति च हरिणे चौरे रोगिणि च
मन्दमन्धयुता। कामातुरे च तरुणे कस्तूरी बहुल-
परिमला भवति।" कस्तूरीमृगलक्षणम्। या क्षि-
प्ता धूमगन्धा वहति विनिहिता पीततां पावके-
ऽलनिःशेषं या निविष्टा भवति हुतवहे भस्मसादेव
सद्यः। या च न्यस्ता तुलायां कलयति गुरुतां
मर्द्दिता रूक्षताञ्च ज्ञेया कस्तूरिकेयं खलु कृतम-
तिभिः कृत्रिमा नैव सेव्या॥" कृत्रिमकस्तूरील-
क्षणम्। रा.नि.व.१२। (री) धुस्तूरवृक्षे। वै.निघ.।

**कस्तूरि(री)का:** । पुं। करवीरवृक्षे।

**कस्तूरिमृगाण्डजः** । पुं। मृगनाभौ। रत्ना.।

**कस्तूरीभैरवरसः** । पुं। शीताङ्गसन्निपाते
रसः। "हिङ्गुलञ्च विषं टङ्गं जातीकोषफलं तथा।
मरिचं पिप्पली चैव कस्तूरी च समांशिका…॥
रक्तिद्वयं खादेत्।" हिङ्गुल, विष, सोहागार
खै, जायफल, जयित्री, मरिच, पिपुल, मृग-
नाभि समभाग। जले मर्द्दन। र.सा.सं.। भैष.
ज्व.चि.। वृहत् यथा—'मृगमदशशिसूर्य्यौ धा-
तकी शुकशिम्बी रजतकनकमुक्ता विद्रुमौ लौह-
पाठाः। क्रिमिरिपुघनविश्वा वारितालाभ्रधात्रः
रविदलरसपिष्टः कस्तूरीभैरवोऽयम्। आर्द्रकस्य
रसैः पेयौ विषमज्वरनाशनः। मृगनाभि, क-
र्पूर, तामा, धाइफुल, आलाकुशीबीज, रू-
पा, सोणा, मुक्ता, प्रवाल, लोह, आकनादि
मूल, विड़ङ्ग, मुता, शुंठ, बाला, हरिताल,
अभ्र एवं आमला समभाग। आकन्दपत्ररसे
मर्द्दन। मात्रा १ रति। रस.र.ज्व.चि.। भैष.।

**कस्तूरीमल्लिका** । स्त्री। मृगनाभौ। वै.नि-
घ.। मल्लिकापुष्पवृक्षभेदे (या मृगमदवासा भवति)।
गुणैः वार्षिकादितुल्या। रा.नि.व.१०।

**कस्तूरीमृगः** । पुं। Musk deer. मृगवि-
शेषे। यस्याण्डे कस्तूरी जायते। वै.निघ.।

**कस्तूरीमोदकः** । पुं। प्रमेहाधिकारे। पाठः
—"कस्तूरी वनिता क्षुद्रा त्रिफला जीरकद्वयम्।
कदलीनां फलं पक्वं खर्जूरं कृष्णतीलकं। कोकि-
लाक्षस्य वीजञ्च माषमात्रं समं समं। यावन्त्येतानि
चूर्णानि द्विगुणा सितशर्करा। धात्रीरसेन पयसा
कुष्माण्डस्वरसेन च। विपचेत्पाकविद्वैद्यो मन्दमन्दे-
न वह्निना।………। मात्रा अक्षमिता। अत्र
वनिता प्रियङ्गुः, क्षुद्रा कण्टकारी, जीरकद्वयं जी-
रकं कृष्णजीरकं। सर्व्वचूर्णात् चतुर्गुणेन धात्र्या-
दिरसेन पचेत्। र.सा.सं.। [निघ.।

**कस्तूरीहरिणः** । पुं। मृगनाभिहरिणे। वै.

**कह्यम्** । क्ली । सुरायाम् । इला. ।

**कह्लकम्** । क्ली । कह्लारे । शुन्दि फुल । भा.पू. १भ.गु व. ।

**कह्लारम्** । क्ली । (Nymphaea lotus.) कुमुदपुष्पे । श्वेतशुन्दि, शादा नाल, नीलशुन्दि, लालशुन्दि। तें कोह्निगाएरगावुंड़ि वासनगलकलुव । रा.नि.व.१० । चि.क्र.क.केशरपार्के । "कह्लारपद्मोत्पलचन्दनाम्बु ।" गुणाः—शीतलं ग्राहि विष्टम्भि गुरु रूक्षञ्च । भा.पू.१भ.पु.व. । कषायमधुरं शीतलं कफपित्तरक्तघ्नञ्च । राज. । "कह्लारं ग्राहि विष्टम्भि चातिशीतं तथा मतं । गुरु रूक्षं समुद्दिष्टम् ।" वै.निघ.। रक्तोत्पले हृद्रपचके इति लोके । अन्ये तु सौगन्धिकोत्पलमाहुः। सु.सू.३८अ.। ईषत् श्वेतरक्तकमलं । कमलसाधारणे । वै.निघ. ।

**कह्लाराद्यघृतम्** । क्ली । हृद्रोगाधिकारे । पाटः—"कह्लारमुत्पलं पद्मं कुमुदं मधुयष्टिका । पक्वाम्बुनाथ तत्क्वाथे जीवनीयोपकल्पिते । घृतं पक्वं नवं पीतं रक्तपित्तास्रगुल्मनुत् ।" रस.र. ।

**कह्वः** । पुं । वकपक्षिणि । अम. ।

**काचः** । पुं । अङ्गाधःकोटरे । काँकवगल् । रत्ना. । महिषे । लतायां । अम. । मे.षद्विकं । गुग्गुलौ । वै.निघ. ।

**काचधरमर्म्म** । क्ली । मर्म्मस्थानविशेषे । यत्र वैकल्यकारमर्म्मणां द्वयमधिवसति । यस्य च स्थानं वक्षःकक्षयोर्मध्यभागः । सु.शा.६अ. ।

**काचरुहा (चोला)** । स्त्री । नागरमुस्तायां । रा.नि.व.६ ।

**काचाश्रयः** । पुं । कुक्कुरे । वै.निघ. ।

**काचा** । स्त्री । वाह्लीमूले । रा.नि.व.१८ । पित्तकोपजन्यक्षुद्ररोगविशेषे । काँकविड़ालि । लक्षणम्—"वाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनां । पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्द्दिशेत् ।" मा. नि.क्षुद्ररोग.चि. । तथा यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाल्लाजनिभास्तु कक्षाः ।" च. । कक्षेति कक्षासन्नेषु प्रायोदेशेषु सानिलात् । वा.उ. ३१अ. । [द्रा । वै.निघ. ।

**काचाफलः** । पुं । काष्ठोदुम्बरफले । काकडूमु-

**कह्वा** । स्त्री । ढड्ढिकायां । हे.च. । कायायां ।

चर्म्मप्रकोष्ठे । अम. । मद्ये । करिबन्धने । अ.टी. भ. । मे.यद्विकं । गुञ्जालतायाम् ।

**कांश्य(स्य)नीलः** । पुं । मूषातुत्थे । हे.च. । तुत्थे । तुँते । प.मु. । तुत्थाञ्जने ।

**कांसपात्रम्** । क्ली । आढ़कपरिमाणे । भा. ।

**कांसिका** । स्त्री । मुद्गपर्ण्याम् । रा.नि.व.३ ।

**कांसी** । स्त्री । सौराष्ट्रमृत्तिकायां । प.मु. । कांस्यधातौ ।

**कांसीयम्** । क्ली । कांस्यधातौ । रा.नि.व.१३।

**कांस्य(क)म्** । क्ली । पानपात्रे । मे.यद्विकं । White copper or brass, Queen's metal. ताम्ररङ्गयोरुपधातौ । काँसा । हिं कांसा । मं कं कंसे. कंचु । भा. । "ताम्रं त्रपुजमाख्यातं कांस्यं घोषञ्च कंसकम् । उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः । कांस्यस्य तु गुणाः ज्ञेयाः स्वयोनिसदृशा जनैः । संयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः । कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरं। गुरु नेत्रहितं रूक्षं कफपित्तहरं परं ॥" तच्छोधनम्—"पत्तलीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते ॥" मारणविधिः—"अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत् । समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैः मुहुः । ततो मूषापुटे धृत्वा पचेद्गजपुटेन च । एवं पुटद्वयात्कांस्यं रीतिश्च म्रियते ध्रुवम् ॥" भा.पू. १भ. । शुद्धस्य गुणाः—"कांस्यन्तु तिक्तमुष्णञ्चचक्षुष्यं वातकफविकारघ्नं । रूक्षं कषायरुच्यं लघुदीपनपाचनं पथ्यम् ॥ श्वेतं दीप्तं मृदुज्योतिः शब्दाढ्यं स्निग्धनिर्म्मलं । घनाग्निसहसूताङ्गं कांस्यमुत्तममीरितम् ॥" रा.नि.व.१३ ।

**कांस्यपिष्टीरसः** । पुं । पाण्डुधिकारे । पाठः—"सूतात्पञ्चार्कतश्चैकं कृत्वा पिष्टिं सगन्धकां । सूताग्रे: नागवल्ल्याश्च द्रवैः पिष्टा प्रलेपयेत् । ताम्रपत्रीं प्रलिप्यैतां दत्वा गजपुटे पचेत् ।" विशुद्धचूर्णरूपेण सेव्यम् । र.चि.८अ.। पारा ८ भ. ता-म्रा १ भ. गन्धक ८ भ. । [ताल ।

**कांस्यालुकम्** । क्ली । कासालुके । See का-

**काकः** । पुं । वायसे । वायसभेदे । ডোমকাক। एतौ प्रसहजातीयौ । तन्मांसगुणाः—क्षयहरं चक्षुष्यं बृंहणं लघु दीपनञ्च । रा.नि.व.७ । शोषरोगे हितः रसवीर्य्यविपाकेषु सिंहादिभिः समः । सु.सू. ४६अ. । काकजङ्घायां । কাঁটা গুড়কাঁউলী । ज्योतिष्मत्याम् । লতাফট্কী । काकोल्यां । गुञ्जायाम् । कोकिले । वै.निघ. । पीठसर्पिणि । খোঁড়া । परिमाणभेदे । शिरःचालने । काकोदुम्बरवृक्षे । क्ली । काकसमूहे । मे.कद्विकं । काकमांसन्तु चक्षुष्यं लघु चाग्निप्रदीपनम् । धातुवृद्धिकरं बल्यं क्षतरोगं क्षयं हरेत् । कृष्णकाकस्य मांसन्तु ज्ञेयं काकसमं गुणैः ॥ वै.निघ. ।

**काककङ्गुः** । पुं । चीनक इति प्रसिद्धधान्ये । हे.च. । सर्ज्जरसे । वै.निघ. ।

**काककर्कटी** । स्त्री । खर्जूरीवृक्षे । भा. ।

**काककण्टकः** । पुं । जलचरपक्षिविशेषे । পানকৌড়ি । वै.निघ. । [ঠেঙা । जटा. ।

**काककला** । स्त्री । काकजङ्घावृक्षे । কেউয়া

**काककुड्मलम्** । क्ली । नीलपद्मे । वै.निघ. ।

**काककुष्ठम्** । क्ली । कङ्कुष्ठे ।

**काकघ्नी** । स्त्री । महाकरञ्जवृक्षे । रा.नि.व.९।

**काकचिञ्चा (ञ्चिः, ञ्ची)** । स्त्री । गुञ्जायां। কুঁচ । त्रिका. । रक्तगुञ्जायां । भा.पू.१भ.गु.व. ।

**काकच्छदः (दिः, र्दिः)** । पुं । खञ्जनपक्षिणि । श.र. । चाषपक्षिणि । নীলকণ্ঠপাখী । त्रिका. ।

**काकजङ्घा** । स्त्री । गुञ्जायां । र.मा.। (Leea hirta.) स्वनामख्यातक्षुपे । কেউয়াঠেঙা, কাঁটা গুড়কাঁউলী । मसीति पाश्चात्ये । र.मा. । सा चक्षोपयोगिनी च । गुणाः—तिक्तोष्णा क्रमिव्रणकफामहा वाधिर्य्यघ्नी अजीर्णघ्नी जीर्णविषमज्वरनाशिनी । रा.नि.व.४ । "काकजङ्घा जटा निद्रां जनयेच्छिरसि स्थिता । हिमा कषाया तिक्ता कफपित्तघ्नी ज्वरपित्तास्रव्रणकण्डूविषक्रमिघ्नी च ।" भा.पू.१भ. । "एतद्बन्धनं एकाहिकज्वरे हितम् ।" च.द.ज्व.चि. ।

**काकजम्बुः (म्बूः)** । स्त्री । (Ardisia solanacea.) स्वनामख्यातजम्बुवृक्षविशेषे । भूमिजम्बूवृक्षे । ভুঁইজাম, বনজাম, ছোট জাম গাছ । मं नदीतीरजांबू । कं तीरिनेरिलु । गुणाः—कषाया अम्ला गुरुः पाके मधुरा दाहश्रमातिसारघ्नी वीर्य्यपुष्टिबलदा च । रा.नि.व.११ । र.मा. । नागरङ्गवृक्षे । वै.निघ. ।

**काकजानुका** । स्त्री । काकजङ्घायाम् । भैष. स्त्रीरोग.चि. । रस.र.प्रदरे ।

**काकडुम्बुरः** । पुं । कृष्णडुम्बुरे । ক্ষুদ্রডুমুর ।

**काकणम्** । क्ली। A leprosy with black and red spot. महाकुष्ठरोगविशेषे । तल्लक्षणं यथा—काकणन्तिकाफलसदृशानि अतीव रक्तकृष्णानि काकणकानि । शोषचोषादीनि सामान्यलिङ्गानि । त्वक्कोचभेदस्तपनाङ्गसादाश्च भवन्ति । सु.नि.५अ. ।

**काकणघ्नवटी** । स्त्री । कुष्ठघ्नौषधे । पाठः—लौहभस्म विषं वह्निं कटुका त्रिकटुत्रयं । तुल्यांशं चूर्णितं भाव्यं क्वाथेनानेन तद्दिनं । पथ्यानिम्बविडङ्गानि खदिरं वासकोऽमृता । जलैरष्टावशेषं तत्कषायं भावने हितं । माससमात्रं लिहेत्क्षौद्रैः काकणं हन्ति तद्वटी ॥ रस.र. । লোহ, বিষ, চিতার মূল বা ভেলা, কট্‌কী, ত্রিফলা, ত্রিকটু এবং ত্রিমদ প্রত্যেকে সমান ভাগ । ভাবনা দ্রব্য—হরীতকী, নিমছাল, বিড়ঙ্গ, খদির, বাসাছাল, গুলঞ্চ ।

**काकणन्तिका (न्ती)** । स्त्री। रक्तगुञ्जायां । गुञ्जायां । सु.चि.१८अ. । प.मु. । रक्तकम्बलवृक्षे । वै.निघ. ।

**काकणान्तकः** । पुं । सिन्दूरे । वै.निघ. ।

**काकण्डा** । स्त्री । काकनासायां । ক্ষুদ্র শ্বেত কুঁচ । रा.नि.व.३ ।

**काकतिक्तका (क्ता)** । स्त्री । लताकरञ्जे । वै.निघ. । वा.सू.१५अ. । काकजङ्घायाम् । भा.पू. १भ. । श्वेतगुञ्जायां । শ্বেত কুঁচ গাছ । र.मा. ।

**काकतिन्दुः (कः)** । पुं । (Diospyros tomentosa.) तिन्दुकविशेषे । মাকড়া গাব, কুচিলা গা[illegible], তেঁদ, মাকড়া তেঁদ । भा. । फलगुणाः—गुरु कषायाम्लं वातविकारघ्नं मधुरम् । पक्वः वमिपित्तघ्नमीषत्कफकारञ्च । रा.नि.व.११ ।

**काकतुण्डः** । पुं । कृष्णागुरुणि । हे.च. । अ-ल्पपक्षिविशेषे । वै.निघ. । च.सू.२७ष. । गौवोर्द्ध-गतकफनुत्काकारसन्धी। स च कृमुदयसन्धिः भा.।

**काकतुण्डफला** । स्त्री । काकनासायाम् । क्षुद्र শ্বেত কুঁচ, শ্বেত কেউয়া ঠুঁটী বা রক্ত-কম্বল, বড় শ্বেত গুড়কাউলী । भा.पू.१भ. ।

**काकतुण्डा (ण्डिका)** । स्त्री । श्वेतगुञ्जा-याम् । শ্বেত কুঁচ । महाश्वेतकाकमाच्याम् । বড় শ্বেত গুড়কাউলী । वै.निघ. । काकचिञ्चायाम् । কুঁচ গাছ । रत्ना. ।

**काकतुण्डी** । स्त्री । गुञ्जायां । वै.निघ. । रा-जरीती । পিত্তলবিশেষ । रा.नि.व.१३ । लघु-रक्तकाकमाच्याम् । वै.निघ.२भ.भूतज्व.चि. । ख-नामख्यातलतायाम् । কেউয়াঠুঁটী, শ্বেত কুঁচ । र.सा.सं. । गुणाः—कटुतिक्तोष्णा रसायनी वात-दोषघ्नी वय्या पलितघ्नी च । रा.नि.व.३ ।

**काकदन्तिका** । स्त्री । काकादनीलतायाम् । শ্বেত বা রক্তকুঁচ । दन्तीवृत्ते । रक्तकाकमाच्यां । রক্ত গুড়কাউলী । वै.निघ. । [र.मा. ।

**काकनामा** । पुं । बकवृत्ते । বকফুলের গাছ ।

**काकनासः** । पुं । विकङ्कतवृत्ते । रा.नि.व.११ ।

**काकनासा** । स्त्री । (Solanum indicum.) महाश्वेतकाकमाच्याम् । বড় শ্বেত গুড় কাঁউলী । हिं कौवाठेंटी, कौवाठोंड़ी । मं व-ड़िलिकडडलि, ढिड़ियाकागीदोडि । तें वेलुमस-न्दिचेटु, पुसगुलिविन्दचेटु, काकिदोंडचेटु । गु-णाः—मधरा शीतला पित्तघ्नी रसायनी दार्ढ्य-करी विशेषतः पलितघ्नी । रा.नि.व.३ । कषाया उष्णा रसपाकयोः कटुः कफघ्नी वान्तिकरी तिक्ता शोथार्शःश्वित्रकुष्ठहृत । भा.पू १भ. । (आ) बकवृ-त्ते । रत्ना. । काकजङ्घायाम् । जटा. ।

**काकनासिका** । स्त्री । रक्तत्रिवृतायाम् । रा. नि.व.६ । काकजङ्घायाम् । কাঁটা গুড়কাঁউলী । अम. । रा.नि.व.४ । गलनाफली । क्षेत्रटैलु वासा फलवदुच्यते । सि.यो.यक्ष्म.चि.च्यवनप्राश. । सा. कौ. । "काकोलीकाकनासिका ।"

**काकनीला** । स्त्री । काकजम्बूवृत्ते । বনজাম । रा.नि.व.११ ।

**काकन्ती** । स्त्री । कृष्णशिम्बायाम् । কালশিম্ । र.मा. ।

**काकन्दी** । स्त्री । चिञ्चायाम् । তেঁতুল ।

**काकपद्म्** । क्ली । कपालोपरिशिरःपर्य्यन्तं सूत्त्वर्नं काकपदमुच्यते । "मूर्ध्नि काकपदङ्कला ।" सु.कल्प.२ष. ।

**काकपर्णी** । स्त्री । मुद्गपर्ण्यां । মুগানী । भा. ।

**काकपक्षः** । पुं । शिखण्डके । জুল্পি । बाला-नान्तु शिखा प्रोक्ता काकपक्षः शिखण्डकः । अम. ।

**काकपीलुः (कः)** । पुं । काकादनीलतायां । রক্ত গুড়কাঁউলা । श्वेतगुञ्जायाम् । শ্বেত কুঁচ । रा.नि.व.३ । रक्तगुञ्जायां । भा.पू.१भ. । काकति-न्दुके । মাকড়া গাব, কুচিলা, মাকড়া কেন্দ । भा. । अम. । [हे.च. ।

**काकपुच्छः (ष्टः)** । पुं । कोकिले । श्र.र. ।

**काकपुष्पम्** । क्ली । ग्रन्थिपर्णे । सुगन्धतृणे । वै.निघ. ।

**काकप्राणा** । स्त्री । काकनासायाम् । महा-श्वेतकाकमाच्याम् । বড় শ্বেতগুড়কাঁউলী । रा. नि व.३ ।

**काकफलः** । पुं । निम्बवृत्ते । काकजम्बाम् । বনজাম । रा.नि.व.८।११ । [११ ।

**काकफला** । स्त्री । काकजम्बूवृत्ते । रा.नि.व.

**काकवन्ध्या** । स्त्री । एकमात्रप्रसवायां नार्य्यां ।

**काकभण्डी** । स्त्री । श्वेतगुञ्जायाम् । वै.निघ. ।

**काकभाण्डी** । स्त्री । महाकरञ्जवृत्ते । रा.नि. व.८ । लघुरक्तमाचिकायां । লাল গুড়কাঁউলী । वै.निघ. ।

**काकभीरुः** । पुं । पेचके । रत्ना. । त्रिका. ।

**काकमद्गुः** । पुं । दात्यूहपक्षिणि । ডাহুক । हारा. । त्रिका. । "काकमद्गुर्जलरङ्कः ।"

**काकमर्द्दः (कः)** । पुं । महाकाललतायाम् । মাকালফলের লতা । प.मु. । [कः ।

**काकमांसम्** । क्ली । वायसमांसे । See का-

**काकमाचिका (ची)** । स्त्री । स्वनामख्यात-पत्रशाकविशेषे । কেউয়াঠুঁটী, কাঁটা গুড়কাঁউ-

ली ।। हारा.। हिं कवैया कावइ । काके । मं कं कवया । रा.नि.व.४ । तिक्ता रसोष्णा कफघ्नी शूलार्शःशोफघ्नी कुष्ठघ्नी कण्डूघ्नी त्रिदोषघ्नी स्निग्धोष्णा स्वरदा शुक्रदा रसायनी शोथगुल्मार्शो-ज्वरमेहघ्नी कटुः चक्षुष्या हिक्काच्छर्द्दिहृद्रोगघ्नी च । भा.पू.१भ. । तिक्ता सा पित्तं वर्द्धयति उष्ण-वीर्य्यत्वात् । सु.सू.४०ष. । काकमाची श्वेतरक्तभे-देन द्विधा । तयोः श्वेता महाश्वेता काकमाची (मं काइंडीखी थोरश्वेतकावळी),द्वितीया लघुरक्त-काकमाची, रक्तकाकुड्डुली लघुरक्तकावलीति म-हाराष्ट्रे ख्याता । तयोः श्वेता—"मधुरा च र-सायनी । शीता कषाया कट्वी च तिक्ता चोष्णा वर्मिप्रदा । तन्द्रीदार्ढ्यकरी प्रोक्ता कफशोथार्शना-शिनी । बलीपलितपित्तघ्नी श्वेतकुष्ठापहा मता" इति । "तुवरोष्णा रसायनी । कट्वी तिक्ता रुचि-करी वातकुष्ठविनाशिनी । पाण्डुप्रमेहकफहा छ-र्द्दिक्रिमिज्वरापहा । पलितस्य च हन्त्री स्यात्...।" रक्तकाकमाचीगुणाः । वै.निघ. । जीवन्ती वातक-फघ्नी पित्तसंशमनी तथा । त्रिदोषशमनी वृष्या काकमाची रसायनी ॥ च.चि.१६ष. । च.द.यक्ष्म. चि. । मष्टफला । सु.सू.३७सुरसादि.ड. । गुडफ-ला । वा.सू.१५भ. । चवकसुरसि भार्गी कामुका काकमाची। काणकिड़ा इति ख्याते शाके । काण-छिंड़ । प.मु. ।

**काकमाचीतैलम्** । क्ली। चर्म्मविकारादौ हि-तम् । पाठः—"काकमाचीरसे सिद्धं कटुतैलं च-तुष्पलम् । मनःशिलासोमराजीबीजसिन्दूरगन्धकैः । श्यामाश्चैतद्भ्यङ्गाद्धन्त्यवश्यमदद्रुविकान् ।" रस.र.।

**काकमाता** । स्त्री। काकमाचीक्षुपे । गुड़कां-ऊली । रा.नि.व.४ । [रा.नि.व.३ ।

**काकमुद्गा** । स्त्री । मुद्गपर्ण्याम् । मुगानी ।

**काकयवः** । पुं । शस्यहीनधान्ये । आगड़ा । महाभा. । [नामद्रव्यविशेषे । वै.निघ. ।

**काकयानम्** । क्ली । कोङ्कणदेशख्याते हासा-

**काकरिपुः** । पुं । उलूके । পেঁচা । [त्रिका. ।

**काकरुहा** । स्त्री । वन्दाके । परगाछा ।

**काकरूकः** । पुं । उलूके । निम्बक्षे । त्रि। भीते । स्त्रीजिते । मे.कचतुष्कं ।

**काकलम्** । क्ली । कण्ठमणौ । त्रिका. । पुं। द्रोणकाके ।

**काकलकः** । पुं । कण्ठमणौ । ग्रीवाया उन्नत-प्रदेशे । षष्टिकधान्यजातिभेदे । गुणाः शालिवत् कङ्कवश्च । सु.सू.४६ष. ।

**काकलीद्राक्षा** । स्त्री । द्राक्षाविशेषे । বেদা-না, কিস্মিস্ প্রভৃতি । गुणाः—मधुरा अम्ला रसाला रुचिकरी श्वासहृल्लासघ्नी । रा.नि.व.११ ।

**काकलीरवः** । पुं । कोकिले । रा.नि.व.१९।

**काकवल्लभा** । स्त्री। काकजम्ब्वृक्षे । বনজাম। रा.नि.व.११ । [पीतकाष्ठे । वै.निघ. ।

**काकवल्लरी** । स्त्री । स्वर्णवल्ल्यां । भा.पू.१भ.।

**काकविष्ठा** । स्त्री । काकमले ।

**काकवृन्ता** । स्त्री । रक्तकुलत्थके । वै.निघ. ।

**काकशालिः** । पुं। कृष्णशालिधान्ये । वै.निघ.।

**काकशिम्बी** । स्त्री। रक्तगुञ्जायाम् । रक्तकाक-माच्याम् । লালগুড়কাঁউলী । रा.नि.व.३ ।

**काकशीर्षः** । पुं । वकवृक्षे । বাসনা গাছ । प.मु.। See अगस्तिः । [তুঙ পাথী । वै.निघ.।

**काकसख्यः** । पुं। तन्नामकपक्षिविशेषे । কাক-

**काकसादी** । पुं । अयुग्मलक्षणाश्वे । चाषे ।

**काकस्फूर्जः** । पुं। काकतिन्दुकवृक्षे । মাকড়া গাব । मं कार्कटम्बुर्णी । वै.निघ. ।

**काका** । स्त्री । श्वेतचिह्नति । काकोदुम्बरिका-याम् । काकडुगुर । काकोलीवृक्षे । কাঁকলা গাছ । काकजङ्घायां । गुञ्जालतायां । मलपूवृक्षे । निर्म्माल्य । काकमाच्यां । শ্বেত গুড়কাঁউলী । मे.कद्विकं ।

**काकाङ्गा (ङ्गी)** । स्त्री। काकनासायां। কে-উয়াঠুঁটী, শ্বেত গুড়কাঁউলী । भा.पू.१भ. । काकजङ्घायाम् । वै.निघ. ।

**काकाक्षी** । स्त्री । काकजङ्घायाम् । श.र. ।

**काकाण्डः** । पुं। काकतिन्दुके । মাকড়া গাব। महानिम्बे । ঘোড়ানিম্ । रा.नि.व.९ ।

**काकाण्डफलम्** । क्ली । शूकरशिम्बीफले ।

আলাকুশী ফল। काकतिन्दुकफले। মাকড়া গাব। सु.सू.४६अ.। कपिकच्छुगुणः।

**काकाण्डा (ण्डी)** । स्त्री। कोलशिम्ब्याम्। रा.नि.व.७। महाज्योतिष्मतीलतायाम्। বড় লতাফট্‌কী। रा.नि.व.३। असाध्यलूताविशेषे। सु.कल्प.८अ.। See लूता।

**काकाण्डोला** । स्त्री। कोलशिम्ब्यां। আলাকুশী। रा.नि.व.७। कटभ्याम्। লতাফট্‌কী। इयञ्च माषवद्गुणविशिष्टा। अमरः।

**काकादनकः (नी)** । पुं, स्त्री। (Ardisia solanacea.) श्वेतगुञ्जायां। শ্বেতকুঁচ। भा.म. पूतना.चि.। रक्तगुञ्जायाम्। রক্তকুঁচ। सु.चि. १६अ.। र.मा.। তৎ. কাওয়ীল্পিয়া। मं कांसाळीकइड़नि। किरियकामेदोड़े। गुणाः—कटूष्णा तिक्ता रसायनी वातदोषहरी वल्या पलितनाशिनी च। रा.नि.व.३। विषरोगघ्नी शोथघ्नी च। राज.। कण्टकपालीलतायाम्। কালিয়াকড়া। कुमिरके इति च भाषा। प.मु.। सु.सू. ३९अ.कफशमने। रक्ताकाकमाच्याम्। লাল গুড়কাঁউলী। रत्ना.। काकतिन्दुकायां। सु.चि. १४।१८अ.। [१भ.।

**काकानन्ती** । स्त्री। रक्तगुञ्जायाम्। भा.पू.

**काकाम्रः** । पुं। समष्ठीलचुपे। रा.नि.व.४।

**काकायुः** । पुं। स्वर्णवल्ल्याम्। স্বর্ণলতা। भा. पू.१भ.। See स्वर्णवल्ली।

**काकारिः** । पुं। पेचके। है.च.।

**काकालः** । पुं। द्रोणकाके। श.र.। वत्सनाभविषे। है.च.। [শ্বেত গুড়কাঁউলী। वै.निघ.।

**काकाख्या** । स्त्री। महाश्वेतकाकमाच्याम्।

**काकाह्वा (ह्वाना)** । स्त्री। काकमाच्याम्। रा.नि.व.४। सु.चि.९अ.। वनमुद्गे। वै.निघ.।

**काकाचा** । काकनासायां। रा.नि.व.३।

**काकिणी** । स्त्री। रक्तिकायाम्। কুঁচ। एकवराटिकायाम्। একক়ড়া। पणचतुर्थांशे। ৫ গণ্ডা। मानदण्डे। "काकिणी पणतुर्य्यांशे मानदण्डेऽपि दृश्यते। कृष्णलैकवराट्योः स्यात्।" मे.णचिकं।

**काकी** । स्त्री। वायस्याम्। काकोल्याम्। रा. नि.व.३। श्वेतकाकमाच्याम्। শ্বেত গুড়কাঁউলী। वै.निघ.।

**काकुः** । स्त्री। जिह्वायां। त्रिका.।

**काकुद (दम्)** । क्ली। तालुनि। रा.नि.व.१८।

**काकुदी** । पुं। ककुदावर्त्ते महादोषान्विताश्वे। "आवर्त्तो यस्य ककुदि काकुदी स उदाहृतः।" ज.द.३अ.।

**काकुत्तम्** । क्ली। विकृतशब्दे। [वै.निघ.।

**काकुलीमृगः** । पुं। चतुर्विधबिलेशयमृगे।

**काकेचि(चु)कः** । पुं। हस्वगन्धमत्स्ये। খাগড়ে। থাগড়া। र.मा.। त्रिका.। आसमत्स्ये। কেসে। रा.नि.व.८। कोकिलाक्षचुपे। भा.पू.१भ.।

**काकेन्दुः (कः, की)** । पुं। (Diospyros melanoxylon.) काकतिन्दुके। মাকড়া কেন্দ। अम.। कटुतिन्दुके। কুচিলা। प.मु.।

**काकेष्टः** । पुं। निम्बवृक्षे। रा.नि.व.९।

**काकेष्टा** । स्त्री। रेणुकायाम्। काकमाच्याम्। वै.निघ.।

**काकोचिकः (ची)** । पुं, स्त्री। काउचीति प्रसिद्धे मत्स्यविशेषे। কাউচ মাছ। हारा.।

**काकोडु(दु)म्बरः** । पुं। काकोदुम्बरिकायां। কাকডুমুর। प.मु.।

**काकोडु(दु)म्बरिका** । स्त्री। (Ficus hispida, opposite-leaved figtree, Syn. Ficus oppositifolia.) स्वनामख्यातवृक्षे। কাকডুমুর। हिं कटमिला, (गोवडुम्बरा। र.मा.) (कटुम्बरी। भा.।) मं कालाउंव। तें ब्रह्ममेड़िचेद्दु। गुणाः—छिन्नघ्नी उदुम्बरगुणा च। मद.व.५। पक्वफलं शीतलं गौल्यं अम्लं कटु लम्दोषघ्नं रक्तपित्तघ्नञ्च। तद्वल्कलं अतिसारघ्नम्। तथा—उदुम्बरत्वक् शीतला कषाया व्रणघ्नी गर्भरक्षणे हिता लम्यदा च। रा.नि.व.११। तिक्ता शीतला तुवरा स्तम्भनकरी कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्श:कामलाहरी च। गुरुः ग्राहिणी शीतला स्वादुः तृप्तिकरी च। राज.। फलगुणाः—विष्टम्भि मधुरं स्निग्धं तर्पणं गुरु च। सु.सू.४६अ.।

**काकोदरः** । पुं। सर्पे। अम.।

**काकोदुम्बरिकाफलम्** । क्ली । कमीरै । वै.निघ. । [गुणाः अश्ववत् ।

**काकोनालकः** । पुं । अवजातीयपचिणि ।

**काकोलः** । पुं,क्ली । द्रोणकाके । दाँड़काक । इला. । काकोल्याम् । धरणि. । कृष्णवर्णस्थावर-विषभेदे । रत्ना. । काकोलसुयतेजः स्यात् कृष्ण-च्छवि महाविषम् । वै.निघ. । सर्पे । वनशूकरे । श.र. ।

**काकोली** । स्त्री । Berry of the calculus indicus. It is brought from Napal and Morung. Tizyphus napeca. चीरकाकोलीसदृशकन्दविशेषे कक्कोलतो भिन्ने । भेदस्तु केवलं चीरकाकोल्याः किञ्चित्कृष्णता । कैँकला । मं कट्टवतिगे, काउली । तें तेलुमणि-चेट्ट । उत्. कांकोलि । एषा चीरकाकोल्युत्प-त्तिस्थान एव जायते । "जायते चीरकाकोली म-हामेदोद्भवस्थले । यत्र स्यात् चीरकाकोली का-कोली तत्र जायते । पीवरीसदृशः कन्दः स ची-रप्रियगन्धवान् । सा प्रोक्ता चीरकाकोली काकोली लिङ्गमुच्यते । यथा स्यात् चीरकाकोली काकोल्य-पि तथा भवेत् । एषा किञ्चिद्भवेत् कृष्णा भेदोऽय-मुभयोरपि ॥ भा. । गुणाः—शीता मधुरा स्निग्धा चयपित्तानिलार्त्तिनुत् । रक्तदाहज्वरघ्नी कफशुक्र-वर्द्धिनी च । रा.नि.व.३ । चीरकाकोल्याम् । फ-लघृते ।

**काकोलीद्वयम्** । क्ली । काकोली चीरकाको-ली च । "एका काकोली कवड़ीसंज्ञा, अन्या ची-रकाकोली पयस्विनीसंज्ञा ।" वा.सू.१५अ.जीव-न्यादि । जीवन्तीकाकोल्यौ भेदे द्वे मुद्गमाषपर्ण्यौ । एतद्द्वयाभावे अश्वगन्धामूलं द्विगुणं ग्राह्यम् । भा.म. ४भ.कर्णरोग.चि. ।

**काकोल्यादिः** । पुं । तन्नामकौषधद्रव्यगणे । अयं नाष्टवर्गसंज्ञितः । सि.यो.शालपर्णखेदे । "का-कोलीचीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णी-मेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाचीरीपद्मक-प्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्च । का-कोल्यादिरयं पित्तशोणितानिलनाशनः । जीवनो बृंहणो वृष्यः स्तन्यः श्लेष्माकरस्तथा ॥" सु.सू.३८अ. । अपि च । "काकोली चीरकाकोली जीवकर्षभकौ तथा । ऋद्धिर्वृद्धिस्तथा मेदा महामेदा गुडूचिका । मुद्गपर्णी माषपर्णी पद्मकं वंशलोचना । शृङ्गी प्र-पौण्डरीकञ्च जीवन्ती मधुयष्टिका । द्राक्षा चेति गणो नाम्ना काकोल्यादिरुदीरितः ॥" गुणाः— "स्तन्यकृद्बृंहणो वृष्यः पित्तरक्तानिलापहः ।" भा. ।

**काकोल्यादिघृतम्** । क्ली । बालरक्ते घृतम् । काकोलीयुग्ममधुकं सशिवा च धात्री जीवन्ती मेदयुगलावपि पृश्निपर्ण्यौ । द्राक्षा सपद्मकतुगा च कुलीरशृङ्गी द्वौ जीरकावपि समस्तचतुष्पलांश्च षष्ठीं विचूर्ण्य विपचेच्च शनैर्घटेऽपां प्रस्थं घृतस्य च तथा सरसं गुडूच्याः । घृतस्य पादं पुरमेव दत्त्वा पुनः पचेत् वैद्यवरो विधिज्ञः । रस.र. ।

**काको(कौ)ष्ठः (कः)** । पुं । कर्णबन्धनाकृ-तिविशेषे । स च निर्मांससङ्क्षिप्तायाल्पशोणित-पालिः । सु.सू.१६अ. ।

**कागः** । पुं । काके । जटा. । [शब्दपत्रे । कागज ।

**कागदः** । पुं । कागज इत्यारवीयभाषाप्रसिद्धे

**काङ्कायनगुड़िका** । स्त्री । गुल्मरोगे दृष्टफ-लौषधे । प्रक्रिया स्पष्टा । अम्लवेतसः अम्ललोणा-मिति केचित् । শটী, কুড়, দন্তী, চিতামূল, টুমুরি, শুঁট, বচ, তেউড়ী প্রত্যেকে ১ প. হিঙ্গু ৩ প. যবক্ষার ২ প. অম্লবেতস বা আমরুল ২ প. ধনে, যমান, জীরা, মরিচ প্রত্যেকে ২ তো. কৃষ্ণজীরা ৪ তো. বনয-মান ৪ তো. टावारसेन कोलास्थिमाना वटी कार्या । च.द. । सा.कौ. । रस.र. ।

**काङ्कायनमोदकः** । पुं । अर्शोरोगे । पथ्या-दीनां द्रव्याणां चूर्णानि यथाभागमेकत्र सम्मिश्रयेत् । हरीतकी ५ प. जीरक १ प. मरिच १ प. पिप्-पली १ प. पिप्पलीमूल २ प. चविका ३ प. चित्रकमूल ४ प. शुण्ठी ५ प. यवचार २ प. भल्लातक ८ प. गुड़कन्द (ওঁড়)*१६ प. (अभावे शर्करा वा मत्स्यण्डी) । सर्व्वचूर्णद्विगुणो गुड़ः । च. द.अर्श.चि. ।

**काङ्गा** । स्त्री । वचायाम् । श.च. ।

**काङ्गुकः** । पुं, क्ली । षष्टिकधान्यभेदे । কাংনী ধেটে ধানবিশেষ । गुणाः—रसे पाके च मधुरः वातपित्तशमनः शालिवद्गुणश्च । सु.सू.४६अ. ।

**काङ्कत्** । पुं । क्रौञ्चपक्षिणि । वै.निघ. ।

**काङ्क्षा** । स्त्री । आहारेच्छायाम् । सु.नि.६अ. ।

**काङ्कोक:** । पुं । कङ्कपक्षिणि ।

**काच:** । पुं । Affection of optic nerve or gutta serena. नराश्रयी: तृतीयपटलगत-नेत्ररोगविशेषे । নেত্রে মুক্তার ন্যায় বিন্দু । हिं मोतियाबिन्दु । दोषे तृतीयपटलं गते काचसंज्ञको नेत्ररोग: जायते । लक्षणं यथा —"प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते । तेनोर्द्धमीक्षते नाध: तनु चैलावृतोपमं । यथावर्णञ्च रज्येत दृष्टिर्हीयेत च क्रमात् ॥" वा.उ.१२अ.। अस्मिन्नपि तमोभूते नातिरूढ़े महागदे । चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युत: । निर्म्मलानि च तेजांसि भ्राजिष्णून्यथ पश्यति । स एव चतुर्थपटलगत: लिङ्गनाश: नीलिकासंज्ञां धत्ते । "स एव लिङ्गनाशस्तु नीलिका काचसंज्ञित: ॥" वातेन चापि रूपाणि भ्रमन्तीव च पश्यति । आविलान्यरुणाभानि व्याविद्धानीव मानव: । पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् । नृत्यतश्चैव शिखिन: सर्व्वं नीलञ्च पश्यति । कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च । पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रमेवाभ्रसंप्लवम् ॥ इत्यादि । सलिलप्लावितानीव परिजाड्यानि मानव: । पश्येद्रक्तेन रक्तानि तमांसि विविधानि च । सलिलान्यथ कृष्णानि पीतान्यपि च मानव: । सन्निपातेन चित्राणि विप्लुतानि च पश्यति । बहुधा च द्विधा वापि सर्व्वाण्येव समन्तत: । हीनाङ्गान्यधिकाङ्गानि ज्योतींष्यपि च पश्यति ॥ मा.नि. । शिक्ये । मणौ । मे.चद्विकं । मृत्तिकाविशेषे । কাচ । गुणा: —क्षाररस: उष्णवीर्य्य: अञ्जना-दृष्टिकरश्च । राज.। अश्वस्य पैत्तिकाक्षिरोगे । "श्लेष्माभिष्यन्दिनोऽश्वस्य शूलं साश्रुविलोचनं । काच: सञ्जायतेऽश्वस्य पाण्डुता चापि चक्षुष: ॥" ज.द.३०अ. । कचटभेदे । ग्र.च. । क्षारे । हे.च.। क्ली । सिक्थले । काचलवणे । বিট্‌লবণ । रा.नि.व.२३ ।

**काचकम्** । क्ली, पुं । काचलवणे । स्फटिके । काचमणौ । वै.निघ. ।

**काचकूपी (घटी)** । स्त्री । काचनिर्म्मितस्थाल्याम् । কাচের শিশি । भैष. ।

**काचज:** । पुं । काचलवणे । वै.निघ. ।

**काचतिन्तिड़ी** । स्त्री । आमतिन्तिड्याम् । কাঁচা তেঁতুল । भा.पु.१भ.फलव. । [व.६ ।

**काचतिलकम्** । क्ली । काचलवणे । रा.नि.

**काचभव:** । पुं । काचलवणे । वै.निघ. ।

**काचभाजनम्** । क्ली । काचनिर्म्मितपात्रे । কাচের বাসন । चिका. ।

**काचमणि:** । पुं । काचे । च.शा.८अ. ।

**काचमलम्** । क्ली काचलवणे । কাল লবণ । रा.नि.व.६ । काकचलवणे । করকচ লবণ ।

**काचमालिका** । स्त्री । मद्ये । चिका. ।

**काचलवणम्** । क्ली । Black salt, a medicinal salt prepared by calcining fossile salt and the fruit of the emblic myrobalan together. It consists of muriate of soda with a proportion of sulphur, iron and lime. स्वनामख्यातलवणे । काचलवण इति महाराष्ट्रकर्णाटदेशे ख्यातम् । কৃষ্ণ লবণ, কালা লবণ । সোঁচা इति गद. । मं वांगड़खार । गुणा:—रूच्यं ईषत् क्षारं पित्तलं दाहकं कफवातघ्नं दीपनं गुल्मशूलनुच्च । रा.नि.व.६ ।

**काचवक्रयन्त्रम्** । क्ली । अर्कादिनिष्काशनार्थं काचनिर्म्मितवक्रयन्त्रे । [च: ।

**काचविन्दु:** । पुं । नेत्ररोगविशेषे । See का-

**काचसम्भव(सौवर्चल)म्** । क्ली । काचलवणे । रा.नि.व.६ ।

**काचस्थाली** । स्त्री । काचपात्रे । पाटलावृक्षे । পারুল গাছ । अम.।प.सु.। श्वेतपाटले । वै.निघ.।

**काचा** । स्त्री । काचमणौ । "काचा तु सारका लघ्वी व्रणनेत्रहिताबहा लेखनी शूलहृत्प्रोक्ता···।" वै.निघ. । वयोनिरूपिका अश्वस्य दन्तेषु पञ्चदशाब्दादारभ्य सप्तदशपर्य्यन्तं जाता: सर्षपाकारा: शुभ्ररेखा: । ज.द.४अ. । [अप.चि. ।

**काचाक्षा** । स्त्री । हरिद्रायां । वै.निघ.२भ.

**काचाक्ष:** । पुं । बकवके । गुणा:--प्लववत्। पद्मकन्दे । वै.निघ. ।

त्विा पचेत्। अथ बलारसै ७, अपामार्गरसै ३, लोध्रातिविषामुस्ताधातकीन्द्रयवगुडूचीनां रसै प्र. ३ भावनाः देयाः। রৌপ্যভস্ম ১ ভ. মুক্তাভস্ম ১ ভ. স্বর্ণভস্ম ১ ভ. গন্ধক ২ ভ. পারদ ৩ ভ. কপিত্থরসে মর্দ্দন করিয়া মৃগশৃঙ্গে ভরিয়া পাক করিবে। পরে বলারসে ৭, অপামার্গরসে ৩, লোধ্র, অতিবিষা, মুস্তা, ধাতকী, ইন্দ্রযব, গুড়ূচীর রসে প্র. ৩ ভাবনা দিবে। রস.চি.।

**ग्रहणीगजेन्द्रवटिका।** स्त्री। ग्रहण्यधिकारे रसः। रस-गन्धक-लौह-शङ्खभस्म-टङ्कणक्षार-हिङ्गु-शटी-तालीश-मुस्त-धान्यक-जीरक-सैन्धव-धातकी-प्रतिविषा-शुण्ठी-गृहधूम-हरीतकी-भल्लातकास्थि (अभावे रक्तचन्दनं) तेजपत्र-जातीफल-लवङ्ग-त्वगेला-बालक-बिल्वशलाटु-मेथिका-भङ्गानां प्र. समोभागः। छागदुग्धेन मर्द्दनम्। রস, গন্ধক, লৌহ, শঙ্খভস্ম, সোহাগার খই, হিং, শটী, তালীশপত্র, মুতা, ধনে, জীরে, সৈন্ধব লবণ, ধাইফুল, আতইচ, শুঁট, ঝুল, হরীতকী, ভেলারমূটী, (অভাবে রক্তচন্দন) তেজপত্র, জায়ফল, লবঙ্গ, গুড়ত্বক্, এলাইচ, বালা, বেলশুঁটা, মেতি, সিদ্ধি প্রত্যেকে সমভাগ। ছাগদুগ্ধের সহিত মর্দ্দন। রস.র.।

**ग्रहणीमिहिरतैलम्।** क्ली। ग्रहणीरोगे तैलम्। तिलतैलं ४ श. तक्रं १६ श.। कुटजत्वक् २ श. वारि १६ श. शे. ४श.; धान्यकं २ श. वारि १६ श. शे. ४ श.। मतान्तरे कुटजत्वक् १२॥० श. वारि ६४ श. शे. १६ श. धान्यकं १२॥० श. वारि ६४ श. शे. १६ श. तक्रं १६ श. एवं ग्रहणीहरद्रव्याणामन्येषां यथालब्धं क्वाथः १६ श.। कल्कार्थे—धान्यक-धातकी-लोध्र-वराहक्रान्ता-अतिविषा-हरीतकी-वीरणमूल-मुस्त-बालक-मोचरस-रसाञ्जन-बिल्वशलाटु-नीलोत्पलपत्र-नागकेशर-पद्मकेशर-गुडूचीन्द्रयव-श्यामालता-पद्मकाष्ठ-कटुकी-तगर-जटामांसी-भृङ्गराज-केशराज-पुनर्नवाम्र-जम्बू-कदम्ब-कुटजत्वक्-यमानी-जीरकाणां प्र. २ तो.। তিলতৈল ৪ শ. ঘোল ১৬ শ. কুড়চিছাল ২ শ. জল ১৬ শ. শে. ৪ শ. ধনে ২ শ. জল ১৬ শ. শে. ৪ শ.। মতান্তরে কুড়চিছাল ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ.; ধনিয়া ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ.; ঘোল ১৬ শ. এইরূপ গ্রহণীহর অন্যান্য যে কোন দ্রব্যের কাথ ১৬ শ. দিবে। কল্কার্থ—ধনিয়া, ধাইফুল, লোধ, বরাক্রান্তা, আতইচ, হরীতকী, বেণার মূল, মুতা, বালা, মোচরস, রসাঞ্জন, বেলশুঁটা, নীলোৎপল, তেজপত্র, নাগেশ্বর, পদ্মকেশর, গুলঞ্চ, ইন্দ্রযব, শ্যামালতা, পদ্মকাষ্ঠ, কট্‌কী, তগর, জটামাংসী, ভীমরাজ (বা দারুচিনি), কেশুত্তে, পুনর্নবা, আমছাল, জামছাল, কদমছাল, কুড়চিছাল, যমানী, জীরা প্রত্যেকে ২ তো.। বৃহতী যথা—तिलतैलं ४ श. तक्रं १६ श.। क्वाथार्थे—कुटजमूलत्वक् धान्यकं प्र. १०० प. जलं प्र. ६४ श. शे. १६ श.। कल्कार्थे—धनीयकं धातकीपुष्पं लोध्रं वराहक्रान्ता अतिविषा हरीतकी लवङ्गं बालकं शृङ्गाटकपत्रं रसाञ्जनं नागकेशरपुष्पं पद्मकाष्ठं गुडूची इन्द्रयवं प्रियङ्गुकं कटुकी पद्मकेशरं तगरं शरमूलं भृङ्गराजः केशराजः पुनर्नवा आम्रत्वक् जम्बूत्वक् कदम्बत्वक् एषां मिलित्वा १ श. स्नेहपाकविधिना पाच्यम्। रस.र.। भैष.।

**ग्रहणीरुक्।** स्त्री। संग्रहग्रहण्याम्। अम.।

**ग्रहणीवज्रकवाटः।** पुं। ग्रहण्यां रसः। "मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणं। अग्निमन्थं वचां कुर्य्यात्सूततुल्यानिमान् सुधीः। ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्दयेत्। त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत्। लौहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत्। अधो वह्निं शनैः कुर्य्यात् यामार्द्धं तत उद्धरेत्। रसतुल्यामतिविषां दद्यान्मोचरसं तथा। कपित्थविजयाद्रावैः भावयेत् सप्तधा पृथक्। धातकीन्द्रयवामुस्तालोध्रप्रतिविषामृताः। एतद्द्रवैर्भावयित्वा दिनैकञ्च विशोषयेत्। रसं वज्रकवाटाख्यं माषैकं मधुना लिहेत्। वह्निं शुण्ठीं विड़ं बिल्वं लवणं चूर्णयेत् समम्। पिबेदुष्णाम्बुना चानु सर्व्वजां ग्रहणीं जयेत्॥" र.चि.।

**ग्रहणीशार्दूलवटिका।** स्त्री। ग्रहण्याम्। जातीफलं लवङ्गं कुष्ठं टङ्कणं बिड़लवणं जीरकं त्वक् एला धुस्तूरबीजं अहिफेनञ्च प्र. समभागं आदाय प्रसारणीरसेन मर्द्दयेत्। জায়ফল, লবঙ্গ, কুড়, সোহাগার খই, বিটলবণ, জীরা,

गुड़त्वक्, এলা, ধুতুরাবীজ, আফিম্ প্র. স- সভাগ, গন্ধভাদুলিয়ার রসে মর্দ্দন। भैष.।

**ग्रहणीश्वरम्** । क्ली । रसवर्ज्जे । भ.च. । चि । ग्रहणीश्वरद्रव्यमात्रे ।

**ग्रहद्रुमः** । पुं । शाकतरौ । रा.नि.व.६ ।

**ग्रहनाशः (शनः)** । पुं। सप्तपर्णवृक्षे । र.मा.।

**ग्रहपतिः** । पु । अर्कवृक्षे। আকন্দ গাছ। अम. । [द्रव्ये । रा.नि.व.१२ ।

**ग्रहभीतिजित्** । पुं. क्ली । चोड़ानामगन्ध-

**ग्रहागमः** । पुं । भूतसञ्चारे । रा.नि.व.२० ।

**ग्रहाङ्गम्** । क्ली । स्वर्णरजतताम्रचपुत्रकशालौहे- षु । रा.नि व. २२ । See पञ्चलौहम् ।

**ग्रहापहा** । स्त्री । गोरोचनायाम् । वै.निघ. ।

**ग्रहामयः** । पुं । ग्रहपीड़ायां । रा.नि.व.२० ।

**ग्रहाशी (इन्)** । पुं । सप्तपर्णवृक्षे । श्र.र. ।

**ग्रहाह्वयः** । पुं । भूताङ्कुशवृक्षे । ভূঁইচেতা। रा.नि.व.६ ।

**ग्राम(म्य)कन्दः** । पुं । ग्रामजौलि । ওল। कचुरिति ख्याते कन्दशाके । কচু । र.मा. ।

**ग्रामकोलः** । पुं । ग्रामशूकरे । वै.निघ. ।

**ग्रामक्रोड़ः** । पुं । ग्रामशूकरे । वै.निघ. ।

**ग्रामजनिष्पावी** । स्त्री । नखनिष्पाव्याम् । বর্বটী । रा.नि.व.७ ।

**ग्रामजा** । स्त्री । खर्जूरवृक्षे । प.मु. ।

**ग्रामणीः** । पुं । नील्यां । নীল গাছ । हे.च.।

**ग्राम(म्य)मद्गुरिका** । स्त्री । मद्गुरमत्स्ये । শিঙি মাছ । मे. । हारा. ।

**ग्राम(म्य)मृगः** । पुं । कुकुरे । श.र. । ग- वादिग्रामवासिपशुवर्गे । यथा—अश्वाश्वतरगोख- रोष्ट्रवस्तोरभमेदःपुच्छप्रभृतयः । तन्मांसं वातसंश- मनं कफपित्तघ्नं रसे पाके च मधुरकं दीपनं बल- वर्द्धनञ्च । सु.सू.४६अ. । [जटा. ।

**ग्रामिणी** । स्त्री । नीलीवृक्षे । নীল গাছ ।

**ग्रामीणः** । पुं । ग्राम्यशूकरे । रा.नि.व.१६ । काके । कुकुरे । मे. ।

**ग्रामीणा** । स्त्री । नीलीवृक्षे । भा.पू.१भ.। पालङ्कशाके । रा.नि.व.७ ।

**ग्राम्यकर्कटी** । स्त्री । कुष्माण्डे । त्रिका. ।

**ग्राम्यकुक्कुटः** । पुं । प्रतुदजातीयपक्षिविशेषे। গ্রামকুক্ড়া। तन्मांसं स्निग्धं वातघ्नं दीपनं गुरु। रा.नि.व.१७ । [त्रिका. ।

**ग्राम्यकुङ्कुमम्** । क्ली । कुसुम्भे । কুসুমফুল।

**ग्राम्यकोशा** । स्त्री । हस्तिकोशातक्याम् । धुन्दूल । रा.नि.व.७ ।

**ग्राम्यधर्म्मः** । पुं । मैथुने । अम. ।

**ग्राम्यपशुः** । पुं । गवादिग्रामवासिपशुषु । See ग्राममृगः ।

**ग्राम्यवराहः** । पुं । ग्रामजशूकरे । গেঁয়ো শুয়ার । तन्मांसं मेदोबलवीर्य्यवर्द्धकं वनवराहमां- साद्गुरु च । रा.नि.व.१७ ।

**ग्राम्यवल्लभा** । स्त्री । पालङ्कशाके । प.मु. ।

**ग्राम्यशूकरः** । पुं। ग्राम्यवराहे । रा.नि.व.१७।

**ग्राम्या** । स्त्री । नीलीवृक्षे । নীল গাছ । नि- ष्पावे । মটর। रा.नि.व.७। तुलसीवृक्षे । वै.निघ.।

**ग्राम्याश्वः** । पुं । गर्दभे । त्रिका. ।

**ग्राम्योदकम्** । क्ली । ग्राम्यजले । वै.निघ. ।

**ग्रावा(न्)** । पुं । प्रस्तरे । अम. । [प.मु. ।

**ग्रावारिः** । पुं । पाषाणभेदे । পাথরকুচি ।

**ग्रासः** । पुं । घासे । कवले । কল । अम. । पारदस्य धातुग्रसनयोग्यजारणे । পারার স্বর্ণ- গ্রাস । स चतुर्विधः—"चतुःषष्ट्यंशकग्रासात् द- ण्डधारी भवेद्रसः । जलौका च द्वितीयेन ग्रास- योगे सुरेश्वरि। ग्रासेन तु तृतीयेन काकविष्ठासमो भवेत् ।-ग्रासेन तु चतुर्थेन दधिमण्डसमो भवेत् ।" र.चि.३अ. । (विवरणं पारदशब्दे द्रष्टव्यम्) ।

**ग्राहः** । पुं । शिशुमारे । শুশোক । रा.नि.व. १६ । नक्रे । হাঙ্গর, জলহস্তী । अ.टी.भ. ।

**ग्राहकः** । पुं । सितावरच्छदे । শুশুনি শাক। रा.नि.व.४ । घातकपक्षिणि । বাজ পাখী। श.र. । [नि.व.६ ।

**ग्राहलोमशा** । स्त्री । वचायाम् । वच । रा.

**ग्राहिणी** । स्त्री । क्षुद्रदुरालभायाम् । क्षुद्र दुरालभा । प.मु. । क्षीरिण्यां । खिरुइ । र.मा. । शुक्लाज्जालुकायां । श्वेत लज्जावती । वै.निघ. ।

**ग्राहिफलम्** । क्ली । कपित्थफले । कयेत् बेल । रा.नि.व.११ ।

**ग्राहिवस्तिः** । पुं । निरूहवस्तिभेदे । पिच-कारिविशेष । स च अम्बष्ठादिप्रियङ्ग्वादिक्काथेन क्षौद्रघृतयुक्तेन साध्यते । यथा—"प्रियङ्ग्वादिगण-क्वाथे अम्बष्ठाद्येन संयुताः । सक्षौद्राः सघृताश्चैव ग्राहिणो वस्तयः स्मृताः । एतेष्वेव च योगेषु स्नेहाः सिद्धाः पृथक् तथा । समस्तेष्वथवा सम्यक् विज्ञेयाः स्नेहवस्तयः ॥" सु. ।

**ग्राही** (इन्) । पुं । कपित्थवृक्षे । प.मु. । रक्त-कार्पासे । त्रि । ग्रहणे । वा.टी.हेमा. । धारके । मलबन्धकरे । यद्वह्निदीप्तिकरं पाचकं तत् ग्राही-त्युच्यते । यथा—"दीपनं पाचनं यत्स्यादुष्णत्वाद्द्रव-शोषकं । ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्प-लीति ॥" भा. ।

**ग्राह्यः** । पुं । अम्लवेतसे । प.मु. ।

**ग्रीवा** । स्त्री । कृकाटिकायाम् । घाड़ । अम. । भा.म.४भ क्षुद्ररोग-चि. । मन्यायाम् । घाड़ेर शिरा । मे. । [आदौ । च.नि.२भ. ।

**ग्रीवारोगः** । पुं । ग्रीवाजातरोगे ग्रीवास्त-

**ग्रीवास्थि** । क्ली । कसेरुकोर्द्धस्थतदाकारास्थ-नि । घाड़ेर हाड़ । तानि१५श्र. । च.शा.७भ. ।

**ग्रीवी** (इन्) । पुं, स्त्री (विनी) । उष्ट्रे । उटा. ।

**ग्रीष्मः** । पुं । घर्म्मे ऋतौ । गर्म्मिकाल । स वै-शाखज्यैष्ठमासयोः भवति । ग्रीष्मो मेषवृषौ प्रोक्तः । गुणाः—ग्रीष्मोऽष्णोऽतिकटुकः पित्तकृत्कफनाश-नः । उष्णतायाम् । मे. । तात्कालिकं जलम् अ-नभिष्यन्दि । रा.नि.व.१४ । [वै.निघ. ।

**ग्रीष्मकर्कटी** । स्त्री । ग्रीष्मजकर्कटीविशेषे ।

**ग्रीष्मका** । स्त्री । पुष्पविशेषे । मल्लिका, बुन-मल्लिका । वै.निघ. । [श.च. ।

**ग्रीष्मजा** । स्त्री । नवजीवृक्षे । लोणा गाछ ।

**ग्रीष्मपुष्पी** । स्त्री । कोङ्कणदेशे करवीकणीति प्रसिद्धे पुष्पवृक्षे । रा नि.व.१० ।

**ग्रीष्मभ(ग्रोद्भ)वा** । स्त्री । नवमल्लिकायाम् । सेउति । रा नि व.१० ।

**ग्रीष्मसुन्दरकः** । पुं । सूक्ष्मपत्रशाकविशेषे । गीमा शाक । गुणाः—तिक्तं रुचिकरं कफपित्त-दोषघ्नञ्च । राज.३प. ।

**ग्रीष्महासा** । स्त्री । इन्द्रतूलके । त्रिका. ।

**ग्रीष्मी** । स्त्री । लोध्रवृक्षे । वै.निघ. । नवमल्लि-कायाम् । रा.नि.व.१० । [उति । प.मु. ।

**ग्रैष्मिका (ष्मी)** । स्त्री । नवमल्लिकायाम् । से-

**ग्लानः** । त्रि । रोगिणि । रा.नि.व.२० ।

**ग्लाना** । स्त्री । बलदीनतायां । हे.च. । रोगे । राज. ।

**ग्लानिः** । स्त्री । व्याधौ । रा.नि.व.२० । ओ-जःक्षयादिजन्यदेहजाड्ये । "ग्लानिरोजःक्षयाद्दुः-खादजीर्णाच्च श्रमाद्भवेत् ।" शार्ङ्ग.पू.६भ. । "... मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः । नचान्नं रोचते यस्मै ग्लानिं तस्य विनिर्दिशेत् ।" भा. । सु.शा.४ भ. । [अम. ।

**ग्लास्नुः** । त्रि । रोगिणि । रा.नि.व.२० । ग्लाने ।

**ग्लौः** । पुं । कर्पूरे । अम. ।

# घ

**घटः** । पुं । कलसे । अम. । द्रोणपरिमाणे । ६४ श. । प.प्र. । करिगण्डस्थले । मे. । कुम्भपरि-माणे, द्रोणविंशतौ । [स्वरादौ ।

**घटकः** । पुं । विना पुष्पं फलवति वृक्षे, उदु-

**घटद्रेयजम्** । क्ली । गड़लवणे । रा.नि.व.६ ।

**घटा** । स्त्री । मधुरकर्कटिकायाम् । मिष्टि लेबु । मद.व.६ ।

**घटाभिधा** । स्त्री । घटाकारशुक्लालाबूभेदे, कुम्भतुम्ब्याम् । गोल लाउ । वै.निघ. । [व.७ ।

**घटालाबुः (बूः)** । स्त्री । कुम्भतुम्ब्यां । रा.नि.

**घटालिका** । स्त्री । मधुरकर्कट्याम् । मिष्ट लেবু । मद.व.६ ।

**घटिकम्** । क्ली । नितम्बे । श.च. ।

**घटिका** । स्त्री । मुहूर्त्तपरिमाणे । दुईदण्ड । गटा. । पादयन्त्री । श.र. । [বণ । वै.निघ. ।

**घटिकालवणम्** । क्ली । विड़लवणे । विट्‌लवণ ।

**घटीयन्त्रग्रहणी** । स्त्री । ग्रहणीरोगभेदे । लक्षणं यथा—"प्रसुप्ति: पार्श्वयो: शूलं तथा जलघटीध्वनि: । तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥" मा.नि. ।

**घट्टगा** । स्त्री । दाक्षिणात्यनदीविशेषे । एतज्जलं गुणै: कृष्णासदृशम् । स्वादुतरं पथ्यं कान्तिदञ्च । रा.नि.व.१४ ।

**घण्ट:** । पुं । शाकादिसिद्धव्यञ्जनविशेषे । শাকের ঘণ্ট, নেয়ের ঘণ্ট । गुणा:—बल्य: रुचिकार: वातघ्नश्च । राज. ।

**घण्टक:** । पुं । क्षुद्रक्षुपविशेषे । ঘেটকুল, ঘেঁটু গাছ । ঘেঁটুকাণ । सा.कौ. । तस्य मूलगुणा: —कफघ्नं कटुपाकि पित्तकरञ्च । राज. । घण्टापाटलवृक्षे । ज.द. । [भेष.अम्लपित्तचि. ।

**घण्टकर्ण:** । पुं । क्षुद्रक्षुपविशेषे । ঘেঁটুকোল ।

**घण्टा** । स्त्री । अतिबलायाम् । रा.नि.व.४ । जवापुष्पवृक्षे । জবা গাছ । र.मा. ।

**घण्टाक:** । पुं । घण्टापाटलिवृक्षे । घण्टापारुल । भ.द. । जालिन्याम् । ঝিঙে । वै.निघ. ।

**घण्टाकर्ण:** । पुं । घण्टकक्षुपे । ঘেঁটু গাছ । ঘেঁটুকাণ । प.मु.ग्रहणीचि.नित्यानन्दरसे ।

**घण्टापाटलि:** । स्त्री । स्वनामख्यातवृक्षे । घण्टापारुल । हिं मोखा । प.मु. । See मुष्कक: ।

**घण्टारवा** । स्त्री । वनशणवृक्षे । শণ গাছ । हिं झनझनिया । भ. । [नि.व.८ ।

**घण्टाल:** । पुं । मदनवृक्षे । ময়না গাছ । रा.

**घण्टालिका** । स्त्री । मधुरमातुलुङ्गवृक्षे । मद.व.६ । [रा.नि.व.३ ।

**घण्टाली** । स्त्री । कोषातक्याम् । ঘোষা ।

**घण्टाबीज:** । पुं । जैपालवृक्षे । জয়পাল গাছ । रा.नि.व.६ । शणवृक्षे । वै.निघ. । क्ली । शणवीजे । [हि.च. ।

**घण्टाशब्दम्** । क्ली । कांस्यधातौ । কাঁসা ।

**घण्टाशीता** । स्त्री । अतिबलायां । रा.नि.व.४ ।

**घण्टाशीला** । स्त्री । महाशणवृक्षे । वै.निघ. ।

**घण्टिक:** । पुं । पादिजलजन्तुविशेषे । अर्श.चि. ।

**घण्टिका** । स्त्री । सूक्ष्मजिह्वायाम् । আলজিভ । रा.नि.व.१८ । गलशुण्डिकारोगे । रा.नि.व.२० । शणपुष्प्यां । শণফুল । वै.निघ.२भ.अपस्मा.चि.द्राक्षावलेहे । कुमरिचे । লঙ্কামরীচ । वै.निघ. । [नि.व.६ ।

**घण्टिनीवीजम्** । क्ली । जैपालवीजे । रा.

**घण्टु:** । पुं । करिकण्ठभूषणे । उष्णा. । उष्णतायाम् । वै.निघ. ।

**घण्ड:** । पुं । मधुमक्षिकायाम् । भ्रमरे । उणा. ।

**घन:** । पुं । मुस्तायाम् । মুতা । रा.नि.व.२३ । सि.यो.कास चि.पथ्यादिघृते । नागरमुस्तायाम् । च.द.पित्त-चि.विम्बादि । शरीरे । रा.नि.व.१८ । अभ्रके । मेघे । रा.नि.व.२३ । कफे । रा.नि.व.२१ । त्वचि । গুড়ত্বক্ । रा.नि.व.१२ । वङ्गे । गुड़े । वै.निघ. । क्ली । लौहे । हे.च. । वल्कली । रा.नि.व.२ । त्रि । निविड़े । अम. ।

**घनकफ:** । पुं । करकायाम् । শিল । त्रिका. ।

**घनकाल:** । पुं । वर्षर्त्तौ । श.र. ।

**घनगोलक:** । पुं । स्वर्णे, रौप्ये च । संश्लिष्टरजतसुवर्णे । हे.च. ।

**घनचन्दनादि:** । पुं । वातपित्तज्वरे कषाये । "घनचन्दनपर्पटकं कटुकं सवृणालपटोलदलं सजलं । शतशीतसितायुतपित्तहरं ज्वरछर्दितृषारुचिदाहहरम् ।" মুতা, রক্তচন্দন, ক্ষেৎপাবড়া, কট্‌কী, বেণার মূল, পলতা, বালা প্রত্যেকে ১৪ রতি । জল ॥০ শ. শে. ৵০ পোওয়া । প্রক্ষেপ—চিনি ৪ মাষা । सा.कौ. ।

**घनच्छदम्** । क्ली । तालीशपत्रे । रा.नि.व.६ । शिग्रुवृक्षे । সজিনা গাছ । वै.निघ. ।

**घनजम्बाल:** । पुं । तुलुके । গণ্ডূষ । त्रिका. ।

**घनता(ती)ल:** । पुं । चातकपक्षिणि । सा-रङ्गपक्षिणि । जटा. । त्रिका. ।

**घनत्वक्** । पुं । गुञ्जरीपे । শ্বেত লোধ । वै. निघ. । [नियामके ।

**घनध्वनि:** । पुं । मुस्तायाम् । र.सा.सं.रस-

**घनपल्लव:** । पुं । शिग्रुवृत्ते । সজিনা গাছ । वै.निघ. ।

**घनपाषण्ड:** । पुं । मयूरे । श.मा. ।

**घनपाषाण:** । पुं । कान्तपाषाणे । अभ्रके । रस.र.महाज्वराङ्कुशे ।

**घनप्रभ:** । पुं । राजावर्त्तमणौ । वै.निघ. ।

**घनप्रिया** । स्त्री । काकजम्बूवृत्ते । বনজাম । रा.नि.व.११ । नदीजम्बाम् । वै निघ. ।

**घनफल:** । पुं । विकङ्कतवृत्ते । रा.नि.व.११। तरम्बुजे । তরমুজ গাছ । वै.निघ. । [वै.निघ. ।

**घनफेनिला** । स्त्री।काकमाच्यां। গুড়কামাই।

**घनमूल:** । पुं । मोरटलतायां । লতাকড়ার। रा.नि.व.३ । [विशेषे । वै.निघ. ।

**घनमूला** । स्त्री । काकमाच्याम् । चीरमूर्व्वा-

**घनरव:** । पुं । मयूरे । वै.निघ. ।

**घनरस:** । पुं । मोरटे । লতাকরাড় । मे. । मूर्व्वायां । মুগরা । र.मा. । जले । कर्पूरे । पीलुपर्ण्याम् । कषाये । सान्द्रनिर्यासे । सम्यक्सिद्धरसे । मे. । रा नि.व.१४ । [वै.निघ. ।

**घनरूपा** । स्त्री । खटीशर्करायां । ফুলখড়ি ।

**घनवल्लिका (ल्ली)** । स्त्री । अमृतस्रवालतायाम् । रा.नि.व.३ ।

**घनवास:** । पुं । कुष्माण्डे । হারা. ।

**घनशृङ्गी** । स्त्री । मेषशृङ्ग्याम् । वै.निघ. ।

**घनसंज्ञा** । स्त्री । मुस्तायाम् । वै.निघ. ।

**घनसार: (क:)** । पुं । कर्पूरे । रा.नि.व. १२ । र.सा.सं. । वसन्ततिलकरसे । भा.उ.वाजी. । ज्व.चि.अगर्व्वादिधूपे । वै.निघ.दाह.चि.रसादिगुव्याम् । भा.म.३भ.मू.घा.चि. । जले । वरषि. । दक्षिणावर्त्तपारदे । मे. । चन्दने । वै.निघ. ।

**घनसून:** । पुं । मोरटलतायाम् । লতাকরাড় । रा.नि.व.३ । [ক্যাওড়া । रा.नि.व.११।

**घनस्कन्ध:** । पुं । कोशाम्रवृत्ते । जलपाई,

**घनस्वन:** । पुं । तण्डुलीयशाकभेदे । কাঁটানটের ঝাড় । रा.नि व.५ । [रा.नि.व.३ ।

**घना** । स्त्री । माषपर्णीलतायाम् । रुद्रजटायाम् ।

**घनाकर:** । पुं । वर्षायाम् । वै निघ. ।

**घनाग्निसत्त्वम्** । क्ली। उत्तमकांस्ये । वै.निघ.।

**घनाघटा** । स्त्री । काकजङ्घायाम् । কেউয়া ঢোঁড়ী । श.च. ।

**घनाघन:** । पुं । मत्तहस्तिनि । अम. ।

**घनाघना** । स्त्री । काकमाच्यां । श.च. ।

**घनात्यय:** । पुं । शरदृतौ । हे.च. ।

**घनामय:** । पुं । खर्जूरवृत्ते । त्रिका. ।

**घनामल:** । पुं । पुनर्नवायाम् । चन्दनवटे । वै.निघ. । (Chenopodium album.) वास्तूकशाके । त्रिका. ।

**घनाराव:** । पुं । चातकपक्षिणि । वै.निघ. ।

**घनावहा** । स्त्री । काकमाच्याम् । कर्णस्फोटायां । কাণছিড়া । प.मु. ।

**घनाश्रय:** । पुं । (Aether.) आकाशे ।

**घनाह्वम्** । क्ली । अभ्रधातौ । प.मु. ।

**घनोद्भवम्** । क्ली । लौहकिट्टे । মণ্ডুর । वै. निघ. ।

**घनोपल:** । पुं । करकायाम् । हे.च. ।

**घरट्ट:** । पुं । पेषणयन्त्रे । যাঁতা ।

**घर्घट:** । पुं (Pimelodus gagora or P. tengara.) मत्स्यभेदे । ট্যাংরা মাছ । श.र. ।

**घर्घर:** । पुं । पेचके । পেঁচা । त्रिका. । तुषानले । हे.च. । (क:) नदविशेषे । तज्जलं रुच्यं शीतलं दीपनं पथ्यं बल्यं चीणाङ्गपुष्टिकरञ्च । रा. नि.व.१४ । त्रि । स्वरविशेषे । मे. । [हे । हे.च. ।

**घर्घरिका** । स्त्री । घर्घरनदे । भ्रष्टधान्ये । थ-

**घर्घूर्षा (षा)** । स्त्री । तन्नामककीटे, यमकीटे । ঘুরঘুরিয়া পোকা । र.मा. ।

**घर्म्मः** । पुं । स्वेदे । घाम । रा.नि.व.१८ आत-पे । उष्मणि । त्रिका. । ग्रीष्मर्तौ । हे.च. ।

**घर्म्मचर्च्चिका** । स्त्री । घर्म्मचर्च्चिकायाम् । घा-माचो । यथा—"स्वेदवाहीनि दुष्यन्ति स्रोतांसि कफयेस्तथा । ततः स्वेदः प्रवर्त्तेत दुर्गन्धा घर्म्मच-र्च्चिका । राजिकाकृतिरत्थोत्था यतो घर्म्मविच-र्च्चिका ॥" प्रयोगा. । [टीशी । वै.निघ. ।

**घर्म्मजः** । पुं । जवादिकस्तूरिकायाम् । था-

**घर्म्मपयः** । क्लौ । घर्म्मजले । उष्णोदके । वै.निघ. ।

**घर्म्मविचर्च्चिका** । स्त्री । घर्म्मचर्च्चिकायाम् ।

**घर्म्मान्तः** । पुं । वर्षर्तौ । रा.नि.व.२१ ।

**घर्म्मान्तकामुकी** । स्त्री । पक्षिविशेषे ।

**घर्म्माम्बु (भः)** । क्लौ । घर्म्मे । घाम । रा. नि.व.१८ । [च.द.आमशीतले ।

**घर्षः** । पुं । कर्कारिकायाम् । कर्कर करा ।

**घर्षणम्** । क्लौ । घर्षकर्म्मणि । घसा । "घर्षणा-दभिघाताद्वा ।" नि. । [त्रिका. ।

**घर्षणालः** । पुं । मुषले, शिलापुत्रे । নোড়া ।

**घर्षणी** । स्त्री । हरिद्रायाम् । त्रिका. ।

**घसिः** । पुं । अन्ने । आहारे । हे.च. ।

**घस्मरः** । पुं । भस्मरे । ভক্ষক । अम. । [मे. ।

**घस्रम्** । क्लौ । कुङ्कुमे । त्रिका. । पुं । दिवसे ।

**घाटः** । पुं । घाटायाम् । घाड़ । श.र. ।

**घाटा** । स्त्री । नागबलायाम् । रा.नि.व.४ । शिरःपश्चाद्भागे । घाड़ । रा.नि.व.१८ ।

**घाटालः** । त्रि । बन्धुरे । सु.नि.१६अ. ।

**घाटिका** । स्त्री । घाटायाम् । घाड़ । श.च. ।

**घाण्टिकः** । पुं । (Datura metel, also fastuosa.) धुस्तूरवृक्षे । हारा. ।

**घातकृच्छ्रम्** । क्लौ । मूत्रकृच्छ्ररोगे । नि. ।

**घात(ति)पक्षी** (इन्) । पुं । A hawk or falcon. श्येनपक्षिणि । বাজ পাখী । हारा. ।

**घारः** । पुं । सेचने । हे.च. ।

**घार्त्तिकः** । पुं । घृतपूरे । घिওড় । हे.च. ।

**घासः** । पुं । तृणे । भक्ष्ये । घास । अम. ।

**घुः** । स्त्री । नासायाम् । वै.निघ. ।

**घुघुक्रत्** । पुं । वनकपोते । घुघू । वै.निघ. ।

**घुघुलारवः** । पुं । पारावते । वै.निघ. ।

**घुटः** । पुं । पादग्रन्थौ । পায়ের গাঁট । हे.च. ।

**घुटिः (टी) (कः, का)** । पुं, स्त्री । जङ्घा-ङ्घ्रिसन्धिग्रन्थौ । গুল্ফ । "जङ्घाङ्घ्रिसन्धिग्रन्थौ तु घुटिका गुल्फ इत्यपि ।" हे.च. । रा.नि व.१८ ।

**घुणः** । पुं । काष्ठक्रिमौ । घुण । लिङ्गसंग्रहे भ्रम-तः । भ्रमरे । वै.निघ. ।

**घुणदयिता** । स्त्री । अतिविषायाम् । আত-ইচ । वै.निघ.ज्व.चि.अर्कादि: । "पञ्चोषणघुणद-यिता ।"

**घुणप्रिया** । स्त्री । अतिविषायाम् । कृष्णाति-विषायाम् । (अमृतार्णवरसे) । वा.सू.३५अ । "कटुका मरिचं घुणप्रिया च गम्भीरम् ।" च.द. पाण्डु.चि. । क्षुद्रदन्तीवृक्षे । वै.निघ. ।

**घुणवल्लभा** । स्त्री । कृष्णातिविषायाम् । কাল আতইচ । भा. ।

**घुणा** । स्त्री । कालातिविषायाम् । वै.निघ. ।

**घुण्टः (कः)** । पुं । गुल्फे । श.मा. । हे.च. ।

**घुण्टा** । स्त्री । क्षुद्रबदरे । वै.निघ. । [श.च. ।

**घुण्टिकम्** । क्लौ । वनकरीषे । বিলঘুঁটে ।

**घुण्डः** । पुं । भ्रमरे । उणा. ।

**घुर्घुरः (कः) (री)** । पुं, स्त्री । भ्रमरे । कौ-टविशेषे । ঘুরঘুরিয়া পোকা । त्रिका. । (कः) । शब्दविशेषे । গলা ঘড় ঘড় করা । च.इ.१०अ. ।

**घुलञ्चः** । पुं । गवेधुकायां । গড়গড় । र.मा. ।

**घुलघुलारवः** । पुं । पारावतभेदे । रा.नि.व. १९ । [वा.व्या.चि. । "घुसृणैः पलार्द्धैः ।"

**घुसृणम्** । क्लौ । कुङ्कुमे । त्रिका. । सि.यो.च.द.

**घूकः** । पुं । उलूके । हे.च. ।

**घूकारिः** । पुं । काके । हे.च. ।

**घूकावासः** । पुं । शाकभेदे । वै.निघ. । स्नु-होवृक्षे । শ্যাওড়া গাছ । रा.नि.व.९ ।

**घूर्णः** । पुं । श्रीमसुन्दरके । গীমা । श.च. ।

**घूर्णि:** । स्त्री । घूर्णने । घूरुनि । ह.च. ।

**घृणावास:** । पुं । कुष्माण्डे । त्रिका. ।

**घृणि:(णी)** । पुं । वनशूकरे । वै.निघ. । अक्ष-रोगविशेषे । तेनाक्षस्य नासाभ्यन्तरे व्रणपिड़क-शोफा भवन्ति । "नासिकाभ्यन्तरे यस्य पिड़कानां समुद्भव: । व्रणं वा यदि वा शोथ: तस्य विद्याद्‌घृणीरुजम् ॥" ज.द.३८अ. ।

**घृतम्** । क्ली । नवनीतजपदार्थे । घि,घृत । घृतं दशविधं गव्यमाहिषाजामेषगार्दभीष्ट्राविकैड़क-मानुष्यहास्तिकभेदेन । तेषां गुणादिकं तत्तत्पर्य्यायेषु मृग्यम् । सा. घृतगुणा:—"आयुर्वर्द्धकं देहदार्ढ्यकरं सौकुमार्य्यकान्तिबुद्धिस्मृतिबलकरं शीतघ्नं बाल्ययौवनवार्द्धक्येषु प्रधानबलकरं पथ्यञ्च । रा.नि.व.१५ । पुराणघृतगुणा:—"सर्पिर्जीर्णञ्चैव सम्भ्रमे च मूर्च्छाकुष्ठोन्मादकर्णाक्षिशूले । शोफाशंसायोनिदोषव्रणेषु शस्तं सर्पिर्जीर्णमेव नृणां स्यात् ॥" नवस्य गुणा: —"बलक्षये तर्पणभोजनेषु श्रमे च पित्तासृजि रेणुयुक्ते । नेत्रामये कामलपाण्डुरोगे क्षये नवं सर्पिरुदाहरन्ति ॥ ज्वरे विबन्धेषु विसूचिकायामरोचके वा ग्रहिते तथाग्नौ । पानात्यये वापि मदात्यये वा शस्तं न सर्पिर्बहुमन्यते च ॥" अत्रि,८अ. । पक्कघृतं—वर्षात्परं हीनवीर्य्यं ॥ भा. । तर्पणं नेत्ररोगघ्नं दाहनुत्पयसा घृतम् । यथा—घृतप्रस्थमग्निपक्वं निष्फेनं स्थिरवीत्याय्य किञ्चित् शीतं हरिद्रामातुलुङ्गरसमुस्तामलकीहरीतकीविभीतकानां कल्कीकृतानां यथाक्रमं प्रत्येकं पलेन मूर्च्छयेत् । यथा —"धात्रीपथ्याबिभीतैर्जलधररजनीमातुलुङ्गद्रवैस्तु सर्व्वैरेतै: सुपिष्टै: पलकपरिमितैर्मन्दमन्दानलेन । आज्यप्रस्थं निफेनं परिपचनगतं मूर्च्छयेद्वैदविज्ञ: तस्मादामीपदोषं त्यजति च सहसा वीर्य्यवत्सौख्यदायि ॥" भैष. ।

**घृतकरञ्ज:** । पुं । करञ्जविशेषे । घियां करमचा । गुणा: —कटूष्ण: वातघ्न: व्रणनाशन: त्वग्दोषघ्न: अर्शोघ्नश्च । रा.नि.व.८ ।

**घृतका** । स्त्री । घृतकुमार्य्याम् । वै.निघ. ।

**घृतकुमारिका (री)** । स्त्री । स्वनामख्यातक्षुपे । घृतकुमारी । See गृहकन्या ।

**घृतपर्णक:** । पुं । घृतकरञ्जे । रा.नि.व.८ ।

**घृतपशु:** । पुं । घृते । वै.निघ. ।

**घृतपूर: (क:)** । पुं । घन्द्रपुलीति खियोड़ इति च ख्याते पिष्टकविशेषे। तत्प्रणाली—"मर्दितां समितां क्षीरनारिकेलघृतादिभि: । अवगाह्य घृते पक्का घृतपूरोऽयमुच्यते । घृतपूरो गुरुर्वृष्य: कफकृत् रक्तमांसद: । रक्तपित्तहरो हृद्य: स्वादु: पित्तहरोऽग्निद: ॥" भा. । प्रकारान्तरं यथा—"गोधूमचूर्णं सूक्ष्मञ्च स्वच्छं तस्मिन् घृतं क्षिपेत् । यावत्तत् पिण्डतां गच्छेत् पश्चाद्दुग्धे विमर्दयेत् । फेलयित्वा द्रवीभूते तत: पात्रे घृतं न्यसेत् । सम्यक् सुघृते तप्ते तस्य धारामपास्य जेत् । यावच्च व्याप्य तत्पात्रं प्रसरेद्घृतपूरक: । यत्किञ्चिन्नामतां यान्ति खण्डपङ्के निमज्जयेत् ॥" गुणा:—"स हृद्यो गुरुहृद्यश्च बलकृद्धातुवर्द्धन: । कफास्रमांसलकरो वातपित्तक्षयं हरेत् ॥" वै.निघ. ।

**घृतमण्ड:** । पुं । अग्नि, अक्षे । वै.निघ. । सर्पिर्मण्डे । गुणा:—मधुर: सर: योनिश्रोत्राक्षिशिरसां शूलघ्न: वस्तिनस्याक्षिप्रपूरणेषूपदिश्यते । सु.सू. ४५अ. ।

**घृतमण्डलिका** । स्त्री । हंसपादीक्षुपे । रा.नि.व.५ । रक्तलज्जालुकायाम् । काकजङ्घायाम् । वै निघ. ।

**घृतमण्डा** । स्त्री । मधूली । मालकाँकड़ी, माकड़शाता । र.मा.श.च. । रक्तलज्जालुकायाम् वै.निघ. ।

**घृतवर:** । पुं । घृतपूरे । मोहनभोगे । ह.च. ।

**घृतहेतु:** । पुं । नवनीते । ननि । वै.निघ. ।

**घृता** । स्त्री । काकजङ्घायाम् । श.च. । काकतुण्डिकायाम् । केयोठुँटी । वै.निघ. । त्रिका. ।

**घृताङ्क:** । पुं । सरलद्रवे । সরলগাছের আটা ।

**घृताची** । स्त्री । एलायाम् । वै.निघ. ।

**घृताची(गर्भ)सम्भवा** । स्त्री । स्थूलैलायां । बड़ एलाइच । रा.नि.व.६ ।

**घृताभ्यङ्ग:** । पुं । घृतमर्द्दने । घृतमर्दन । तत्र विधिनिषेधौ—"वाते पित्ते कफे रक्ते सन्निपाते क्षताङ्गके । मदमूर्च्छाप्रलापेषु तृष्णादाहज्वरेषु च । सन्तप्ते सन्तते जीर्णे ह्यध्वश्रान्ते विशेषत: । बालमध्यमजीर्णानां घृताभ्यङ्ग: प्रशस्यते ॥ गुल्मजीर्णे

विस्रदनकामलासातिसारिषु । श्वासकासोदरच्छर्दिपाण्डुसर्व्वाङ्गशोषिषु ॥ विद्रधौ पार्श्वशूलेषु गण्डमालार्बुदादिषु । शीतज्वरे प्रमेहे च घृताभ्यङ्गो न शस्यते ॥” इत्याद्याः ।

**घृताह्वः** । पुं । वृकधूपे, कृत्रिमधूपे । त्रिका. ।

**घृतिला** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । प.मु. । [का । है.च. ।

**घृतेली** । स्त्री । तैलपायिकायाम् । তেলাপো-

**घृष्टम्** । क्ली । सद्योव्रणविशेषे । যেমন লাগিয়া ঘা বা ক্ষত । “विगतत्वक् यदङ्गं हि सङ्घर्षादन्यथापि वा । उषासावान्वितं तत्तु घृष्टमित्युपदिश्यते ॥” सु.चि.२अ. । पुं । गोधूमे । वै.निघ. ।

**घृष्टतलः** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं यथा —“घृष्टं भूमौ तलं यस्य ताम्रीभवति वाजिनः । तस्य घृष्टतलो नाम पादरोगः प्रकीर्त्तितः ॥” ज.द.३९अ. ।

**घृष्टिः** । पुं । शूकरे । प.मु. । (ष्टी) स्त्री । वराहक्रान्तायां । वाराहीकन्दे । চামর আলু । अम. । घर्षणे । अपराजितायाम् । मे. । [र.मा. ।

**घृष्टिला** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া ।

**घृष्विः** । पुं । वनवराहे । वै.निघ. ।

**घेञ्चुलिका** । स्त्री । (Arum orinense.) कौञ्चादने । ঘেঁচু । र.मा. ।

**घोटः (कः)** । पुं । अश्वे । प.मु. । See अश्वः ।

**घोटकारिः** । पुं । महिषे । वै.निघ. ।

**घोटकीदुग्धम्** । क्ली । अश्वीदुग्धे । ঘুড়ীর দুধ । गुणाः— रुक्षमम्लं लवणं दीपनं लघु देहस्थैर्य्यकरं बल्यं गौरवकान्तिकृच्च । रा.नि.व.१५ । See अश्वीक्षीरं ।

**घोटगलः** । पुं । कासतृणे । वै.निघ. ।

**घोटिका** । स्त्री । वड़वायाम् । हस्वलोणीशाके । বড় নুনী । गुणाः—कटूष्णं मधुरं वातव्रणकण्डूकुष्ठरक्तशोथघ्न । रा.नि.व.५ । See लोणी ।

**घोटी** । स्त्री । घोण्टायाम् । শেয়াকুল । रा.नि.व.८ । क्षुद्रबदरवृक्षे । वै.निघ. ।

**घोणकः** । पुं । गोनाससर्पे । वै.निघ. ।

**घोणसा** । क्ली । लताविशेषे । वै.निघ. ।

**घोणा** । स्त्री । नासिकायाम् । रा.नि.व.१८ । अश्वस्य नासाच्छिद्रान्तिमध्यभागे । ज.द.२अ. । छिक्किन्याम् । হেঁচেতা । वै.निघ. ।

**घोणान्तभेदनः** । पुं । आरण्यशूकरे । वन शूकर । वै.निघ. ।

**घोणी (इन)** । पुं । शूकरे । वनशूकरे । प.मु. ।

**घोण्टा** । स्त्री । (Zizyphus jujuba.) गोपघण्टायाम् । শেয়াকুল গাছ । मं कं घोंटी । गोइथी । गुणाः— कटुः उष्णा मधुरा वातघ्नी व्रणकण्डूतिकुष्ठश्वयथुघ्नी च । रा.नि.व.८ । पूगीवृक्षे । গুপারি গাছ । रा.नि.व.११ । वा.सू.१५अ. । मदनवृक्षे । नागबलायाम् । शाकवृक्षे । শেগুন গাছ । वै.निघ. । [গাছ । रा.नि.व.८ ।

**घोण्टाख्यः (स्थः)** । पुं । मदनवृक्षे । ময়না

**घोण्टाफलम्** । क्ली । पूगफले । গুপারি । वै.निघ. । बदरीफले । सु.चि.१७अ. । [च. ।

**घोनसः** । पुं । गोनससर्पे । तिलित्ससर्पे । है.

**घोरम्** । क्ली । विषे । रा.नि.व.६ । पुं । वस्तिकुण्डले । নাইকুণ্ডল । त्रि । मारके । भा. ।

**घोरकुष्ठा** । स्त्री । छिन्नालीति ख्यातलतायाम् । वै.निघ. ।

**घोरघण्टः** । पुं । पूगवृक्षे । গুপারি গাছ । मद. व.६ । [বাঘ । रा.नि.व.१९ ।

**घोरदर्शनः** । पुं । उलूके । तरक्षौ । ঠেঁদো

**घोरनृसिंहरसः** । पुं । सन्निपातज्वरे रसः । “भागैकं मृतताम्रस्य द्विभागं मृतलौहकं । त्रिभागञ्च मृतरसः चतुर्भागं मृताभ्रकम् । माक्षिकं रसगन्धौ च तथा मुक्ता मनःशिला । चत्वार्य्येतानि ताम्रस्य प्रत्येकं तुल्यमेव च । गरलञ्चाभ्रतुल्यं स्यात् त्रिकटुश्चाभ्रतुल्यकः । एतत्सर्व्वसमं देयं विषमाख्यं तथैव च । एतत्सर्व्वस्य द्रव्यस्य द्विगुणं कालकूटकं । मात्स्यमाहिषमायूरच्छागपित्तैर्विभावयेत् । चित्रकस्य द्रवेणैव प्रत्येकं याममात्रकम् । सर्षपाभा वटी कार्य्या...... । दापयेद्वटिकामेकां पयःपेटीरसेन च ॥” भैष. । विषमाख्यं कुचेलके । [निघ. ।

**घोरप्रदा** । स्त्री । गोधायाम् । গোসাপ । वै.

**घोरदासनः(सी)** । पुं । मृगाले । त्रिका ।

**घोरा** । स्त्री । देवदाल्याम् । দেয়াতাড়া । रा. नि व.३ ।

**घोलम्** । क्ली । सस्नेहजलमथिते दधनि । ঘোল । सु.सू.४५अ. । विजलमथिते दधनि । र. मा.। पादजलत्रिभागदधिकृते तक्रे। रा.नि.व.१५।

**घोलवटकः** । पुं । घोलकृतवटके । ঘোলবড়া । वै निघ. ।

**घोलिः (ली)** । स्त्री । पत्रशाकविशेषे । শাকবিশেষ । हिं घोली, लोंडघोलि, किर्कगोलि । घोली द्विधा चैत्रजारामघोलिभेदात् । गुणाः— चैत्रशाकं लवणं रूक्षम् अम्लं वातकफप्रदञ्च । आरामघोलिशाकम् अम्लं रुच्यं रूक्षं वातघ्नं पित्तश्लेष्म करं जीर्णज्वरापहम् । रा.नि.व.६ ।

**घोलिका** । स्त्री । घोली । वै.निघ. ।

**घोषः** । पुं। कांस्ये । তামা ও দস্তায় নির্ম্মিত ধাতু । प.मु. । घोषालतायाम् । मे. । मशके । पटोले । भ्रमरे । त्रिका. ।

**घोषकः** । पुं । कोशातक्याम् । हस्तिघोषालतायाम् । ঘোষা, মধুলতা । भा.पू.१भ.शाकव. । See कोशातकी ।

**घोषका** । स्त्री । घोषालतायाम् । वै.निघ. ।

**घोषकाकृतिः** । पुं । घोषायाम् । ঘোষা লতা । र.मा. ।

**घोषणः** । पुं । कोकिले । श.र. ।

**घोषपुष्पम्** । क्ली । कांस्ये । रा.नि.व.१३ ।

**घोषयित्नुः** । पुं । कोकिले । त्रिका. । निघ. ।

**घोषवती** । स्त्री । शताह्वायाम् । শুল্ফা । वै.

**घोषा** । स्त्री । (Anethum sowa.) शताह्वाख्यक्षुपे । মউরী, শুল্ফা । रा.नि.व.४ । कर्कटशृङ्ग्यां । रा.नि.व.६। विड़ङ्गे । वै.निघ. ।

**घोषातकी** । स्त्री । श्वेतकोशातक्यां । শ্বেত ঘোষা । र.मा. ।

**घोषितः** । पुं। शिशुमारे। শুশোক । वै.निघ.।

**घोषिलः** । पुं । वनशूकरे । वै.निघ. ।

**घ्राणम्** । क्ली । स्वनामख्यातेन्द्रिये । নাসিকা । रा.नि.व.१८ । आघ्राणे । मा.नि. । अम. ।

**घ्राणतर्पणः** । त्रि । घ्राणेन्द्रियतृप्तिजनके ।

**घ्राणदुःखदा** । स्त्री । छिक्किन्यां । হেঁচেতা । भा. । नासारोगे । হাঁচি । वै.निघ. ।

**घ्राणपाकः** । पुं । नासापाके । वा.उ.१९अ. ।

**घ्राणेन्द्रियम्** । क्ली । नासिकायाम् । वै.निघ. ।

**घ्राणोदकम्** । क्ली । नासारन्ध्रेण प्रातर्निपीतोदकपाने । নাকে জল খাওয়া । गुणाः— तार्क्ष्यनेत्रत्वं स्वर्गाचार्य्यसदृशवक्तृशालित्वं बुद्धिमत्त्वमश्विनीकुमारसदृशत्वं शिरोरोगनाशित्वं वलिपलितविहीनत्वञ्च । रा.नि.व.१४ ।

**घ्रातिः** । स्त्री । नासिकायाम् । श.च. ।

---

## च

**चः** । पुं । कच्छपे । मे. ।

**चकोरः (कः)** । पुं । चातकपक्षिणि । চাতক পাখী । रा.नि.व.१९ ।

**चक्रम्** । क्ली । तगरपादिके । তগরপাদুকা । नकुल.१३अ.।सु.कल्प.५अ.।चनि.२स्थान२अ.। विषभेदे । प.मु. । रक्तकुलत्थे । काञ्जीभेदे । কাঁজি । वै.निघ. पुं। चक्रवाकपक्षिणि । চকাচকি । अम.।

**चक्रकः** । पुं । राजिमत्सर्पविशेषे । सु.कल्प.४अ.। See सर्पः । वै.निघ. ।

**चक्रकारः** । पुं । जलचरकवाके । चक्रवाक ।

**चक्रका** । स्त्री । स्वनामख्यातमहौषधौ । सु.चि. ३०अ. । See औषधिगणः ।

**चक्रकारकः** । पुं, क्ली । नखीनामगन्धद्रव्ये । नखी । वै.निघ. ।

**चक्रकुल्या** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । श.च. । कच्छतुलस्याम् । वै.निघ. ।

**चक्रगजः** । पुं । चक्रमर्दक्षुपे । চাকন্দা । रा. नि.व.४ ।

**चक्रगुच्छः** । पुं । अशोकवृक्षे । श.च. ।

**चक्रगुल्मः** । पुं । उष्ट्रे । वै.निघ. ।

**चक्रदन्ता (न्ती)** । स्त्री । जैपालवृक्षे । जय-पाल । प.मु. । [पालविठि । रा.नि.व.६ ।

**चक्रदन्तीबीजम्** । क्ली । जैपालबीजे । जय

**चक्रधरः** । पुं । सर्पे । त्रिका. ।

**चक्रधारम्** । क्ली । अर्द्धधाराम्रविशेषे । तच्चा-ष्टाङ्गुलायतम् उरसि अङ्गुलविस्तारं त्र्यङ्गुलफलञ्च । सु.सू.टी.७.८अ. । [द्रव्ये । नखी । रा.नि.व.१२ ।

**चक्रनखः (नायकः)** । पुं । नखीनामगन्ध-

**चक्रनामा(न्)** । पुं । माक्षिकधातौ । স্বর্ণ-মাক্ষিক । नखीभेदे । नखी । प.मु. । [श.र. ।

**चक्रपन्नाटः** । पुं । चक्रमर्द्दक्षुपे । চাকন্দা ।

**चक्रपरिव्याधः** । पुं । आरग्वधवृक्षे । শোঁ-দাল গাছ ।

**चक्रपर्णा (र्णी)** । स्त्री । कृष्णतुलस्याम् । কাল তুলসী । वै.निघ. । पृश्निपर्ण्याम् । চাকু-লিয়া । श.च. ।

**चक्रपाणिः** । पुं । स्वनामख्यातप्रकृष्टसंग्रहादि-कारी । स गौड़राजस्य पाकशालाध्यक्ष आसीत् । "गौड़ाधिनाथरसवत्यधिकारिपात्रम्" । च.द. ।

**चक्रबन्धना** । स्त्री । वनमल्लिकायां । वै.निघ. ।

**चक्रबाला** । स्त्री । आम्रातकवृक्षे । আমড়া গাছ । वै.निघ. ।

**चक्रवालिकः** । पुं । अश्वस्य पादरोगभेदे । "क्लिद्यन्ते वलयो यस्य खुरसन्धिसमुद्भवाः । अक्लिन्ना वाथ सरुजः तं विद्याच्चक्रबालिकम् ॥" ज.द. ।

**चक्रमण्डली (इन्)** । पुं । मण्डलिसर्पजाति-भेदे । हे.च. ।

**चक्रमर्द्दः (कः)** । पुं । (Cassiatora.) स्व-नामख्यातक्षुपे । চাকন্দা, চাট্‌কাটা, এড়াঞ্চী । हिं चक्वड़् । मं तरवटा । कं चगचे । तें क्षुपवि-शेषम् । गुणाः—कटुः तीव्रः मेदोवातकफघ्नः व्र-णकण्डूकुष्ठदद्रुपामादिहरश्च । रा.नि.व.४ । लघुः स्वादुः रुक्षः वातपित्तघ्नः हृद्यः हिमः कफश्वास-दद्रुकुष्ठकृमिहरश्च । तत्फलं उष्णं कुष्ठकण्डूदद्रुवि-षवातघ्नं गुल्मकासकृमिश्वासघ्नं कटु च । तत्पत्रम् अम्लं दद्रुघ्नं वातकफघ्नं कण्डूकासकृमिश्वासकुष्ठघ्नञ्च । भा. । (र्द्दः) कर्कटभेदे । श.च. । स्त्री (मर्द्दिनी) । अलर्कके । रा.नि.व.६ ।

**चक्रमुखः** । पुं । शूकरे । वै.निघ. ।

**चक्रयन्त्रम्** । क्ली । औषधपाकार्थयन्त्रविशेषे । लक्षणं यथा—"गर्त्तवाह्ये भवेद्गर्त्तो मध्यगर्त्ते रसं कुरु । चक्रयन्त्रमिदं सिद्धं वाह्ये गर्त्ते वृहत्पुटम्" ॥ अत्रि. ।

**चक्ररथः** । पुं । चक्रवाकपक्षिणि । वै.निघ. ।

**चक्ररदः (दंष्ट्रः)** । पुं । शूकरे, वनशूकरे । वै.निघ. । [वै.निघ. ।

**चक्ररेणुका** । स्त्री । रक्तकरवीरे । রক্তকরবী ।

**चक्रलः** । पुं, क्ली । रक्तकुलत्थे । লাল কুলথ । वै.निघ. । [नि.व.११ ।

**चक्रलताम्रः** । पुं । बहुरसालताम्रे । रा.

**चक्रलक्षणा (णिका)** । स्त्री । गुडूच्याम् । र.मा. । [नागरमुस्तायाम् । वै.निघ. ।

**चक्रला** । स्त्री । उच्चटायाम् । ওকড়া । अम. ।

**चक्रवर्त्तिः (र्त्ती, र्त्तिनी)** । पुं, स्त्री । वा-स्तुकशाके । বেতো শাক । प.मु. । लाक्षायाम् । जटामांस्याम् । रा.नि.व.१२ । [वै.निघ. ।

**चक्रवल्लरी** । स्त्री । स्नुहीभेदे । ফণিমনসা ।

**चक्रवाकः** । पुं । (Anas casarca.) Rudy-goose. स्वनामख्यातहंसजातीयपक्षिविशेषे । চ-কাচকী, রামচকা । तन्मांसं लघु स्निग्धं बलदं अग्निकरं सर्व्वशूलघ्नमुष्णं वातरोगघ्नञ्च । रा.नि.व. १९ । कटु हृद्यम् उष्णवीर्य्यं कटुपाकि मलवृद्धि-करञ्च । राज. । अश्वविशेषे । नकुल. । (का, की) स्त्री । चक्रवाकपत्न्याम् । চক্রবাকী । वृहत्याम् । विरुतौ । प.मु. ।

**चक्रवीजम्** । क्ली । जैपालवीजे । रा.नि.व.६ ।

**चक्रवेधकम्** । क्ली । चुक्रनामककाञ्जिके । नि-र्काम्ले । रा.नि.व.१५ । [र.मा. ।

**चक्रश्रेणी** । स्त्री । अजशृङ्ग्याम् । গেড়াশৃঙ্গী ।

**चक्रसम्म्** । क्ली । वज्रे । हे.च. ।

**चक्रा** । स्त्री । कर्कटशृङ्ग्याम् । কাঁকড়াশৃঙ্গী । नागरमुस्तायाम् । নাগরমুতা । रा.नि.व.६ ।

**चक्राङ्का** । स्त्री । नागरमुस्तायाम् । रा.नि.व.६ । सुदर्शनायाम् । উরতীপুরতী । पद्मगुड़ूच्याम् । पद्मगुलुञ्च । वै.निघ. । (ङ्गी) हंसपद्याम् । श.र. ।

**चक्राङ्गः** । पुं । हंसे । अम. ।

**चक्राङ्गा (ङ्गी (इन्))** । स्त्री, पुं । सुदर्शनलतायाम् । উরতীপুরতী । हिं दहपति । कटुक्यां । কটকী । रा.नि.व.६ । कर्कटशृङ्ग्याम् । কাঁকড়াশৃঙ্গী । प.मु. । हिलमोचिकायाम् । हिञ्चे । त्रिका. । हंस्याम् । श.र. । मञ्जिष्ठायां । रा.नि.व.६ । वालुके । वै.निघ. ।

**चक्राटः** । पुं । विषवैद्ये । मे. ।

**चक्राधिवासी** । पुं । नागरङ्गवृक्षे । টাবা বৃক্ষ । त्रिका. । [वै.निघ. ।

**चक्रालुः** । पुं । मल्लारसालाम्रे । থাস আম ।

**चक्राह्वः (यः)** । पुं । चक्रमर्दक्षुपे । চাকন্দা । रा.नि.व.४ । भैष.कुष्ठ.चि. । चक्रवाकपक्षिणि । रा.नि.व.१९ ।

**चक्रिकः** । पुं । रक्तकुलत्थे । वै.निघ. ।

**चक्रिका** । स्त्री । जानुनि । হাঁটু । रा.नि.व. १८ । श्वेतगुञ्जायाम् । সাদা কুঁচ । रक्तकार्पास्याम् । লালকাপাস । चक्रमर्दे । চাকন্দা । वै.निघ. ।

**चक्रिपक्षी** । स्त्री । चक्रवाकस्त्रियाम् । চক্রবাকী । श्वेततुलस्याम् । वै.निघ. ।

**चक्री** (इन्) । पुं । कोकपक्षिणि । চক্রবাক । चक्रमर्दे । চাকন্দা । तिनिशवृक्षे । সাদন গাছ । काके । गर्दभे । व्याघ्रनखे । নখীবিশেষ । দধনি । रा.नि.व.२३ । स्त्री । त्वचि । দারুচিনি । वै.निघ. ।

**चक्रीवान्** । पुं । गर्दभे । अम. । चक्रवाके । চকা । वै.निघ. ।

**चक्रेन्द्रकः** । पुं । देवसर्षपवृक्षे । রাই । वै.निघ. ।

**चक्रेश्वरी** । स्त्री । वत्सनाडिकायां । वै.निघ. ।

**चक्रोत्थः** । पुं । कुक्कुटपादीलतायां । লতা ফটকী । वै.निघ. ।

**चक्र(क्रु)रः** । पुं । वृक्षे । मे. ।

**चङ्क्रमणम्** । क्ली । भ्रमणे । পুনঃপুনর্ভ্রমণ । गुणाः—“यदारोग्यमनायुष्यं चङ्क्रमणोपधातकृत् । पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् ॥” सु. चि.२४अ. । “यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् । तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ॥ चङ्क्रमेदः कफस्थौल्यसौकुमार्यविनाशनम् ।” राज. २प. । [वै.निघ. ।

**चचण्डी** । स्त्री । क्षुद्रजिह्वायाम् । আলজিভ ।

**चचेण्डा** । स्त्री । चिचिण्डायाम् । চিচিঙ্গা, হোঁপা । गुणाः—शोषरोगे हितं पटोलादीनगुणाश्च । मद ।

**चञ्चत्कुठाररसः** । पुं । अर्शसि रसः । रसः गन्धकः लौहं प्र. २ भ. । त्रिकटु दन्तीमूलं कुष्ठं प्र. १ भ. विषलाङ्गलिकामूलं ६ भ. यवक्षारः सैन्धवं टङ्कणक्षारः प्र. ५ भ. गोमूत्रं स्नुहीक्षीरं प्र.१२भ. । यावत्पिण्डं स्वल्पाग्निना पचेत् । र.सा.सं. ।

**चञ्चरी** (इन्) । पुं.स्त्री (री) । मधुमक्षिकायां । भ्रमरे । ভ্রমর । वै.निघ. ।

**चञ्चरीकः** । पुं । भ्रमरे । त्रिका. ।

**चञ्चलतैलम्** । क्ली । शिलारसे । त्रिका. ।

**चञ्चला** । स्त्री । पिप्पल्याम् । श.च. ।

**चञ्चुसूचिः** । पुं । कारण्डवपक्षिणि । সারস । থড়া হাঁস । त्रिका. ।

**चञ्चुः** । पुं, स्त्री । क्षुद्रचुञ्चुक्षुपे । চেচড়া শাক । गोनाडीचे । নাড়ীচ শাক । रा.नि.व.४ । रक्तैरण्डे । रा.नि.व.८ । एरण्डसामान्ये । मे. । त्रोटौ श.र. । पक्षिणः ओष्ठे । পাখির ঠোঁট । अम. ।

**चञ्चुकः (का, की)** । पुं, स्त्री । चुञ्चुक्षुपे । চেঁচকো । भा.रा.नि.व.४ । स्त्री (का, की) । पक्षिचञ्चौ । श.र. । [न.व.४ ।

**चञ्चुपत्रः (पत्राख्यः)** । पुं । चुञ्चुशाके । रा.

**चञ्चुरः** । पुं । चुञ्चुशाके । रा.नि.व.४ ।

**चञ्चुलुः** । पुं । रक्तैरण्डे । वै.निघ. ।

**चञ्चुसूचिः (कः)** । पुं । पक्षिविशेषे । কাদা খোঁচা । कारण्डवपक्षिणि । त्रिका. । हे.च. ।

**चञ्चूः** । स्त्री । पक्षितुण्डे । পাখির ঠোঁট । हे.च. ।

**चटकः** । पुं । Sparrow. क्षुद्रपक्षिविशेषे । চড়াই পাখী । हिं चबुड़ैया । मं चिमणा । स द्विविधः गृहारण्यभेदात् । प्रथमस्य मांसगुणाः—

शीतं लघु हृष्यं बलदञ्च । द्वितीयस्य मांसगुणाः—लघु पथ्यदञ्च । रा.नि.व.१७। तदण्डगुणः—हंसीवत् ज्ञेयः । कृष्णचटके । श्यामा पाखी । राज. । स्त्री (का) । पिप्पलीमूले । भ.टी.। चटकस्त्रियां। अम. ।

**चट(कि)का** । स्त्री । चटकपत्न्याम् । मादि चड़ाइ । हला. । रक्तगुञ्जायाम् । लाल कुँच । च. द.उन्मा.चि. । [रा.नि.व.६ ।

**चट(टि)काशि(शी)रः** । पुं । पिप्पलीमूले।

**चटाफलः** । पुं । नारिकेलवृक्षे । श.र. ।

**चटि(टी)का** । स्त्री । चटकस्त्रियाम् । पिप्पलीमूले । वै.निघ. । [निघ. ।

**चटुः** । पुं । उदरे । मे. ।

**चट्टिका** । स्त्री । जलौकायाम् । জোঁক । वै.-

**चट्टुः** । पुं । लौहपात्रविशेषे । চাটু ।

**चणः (कः)** । पुं । (Cicerariatinum.) Gram or chick pea. स्वनामख्यातशिम्बीधान्ये । ছোলার গাছ । हिं चणा, चाणा । मं चणा । कं कड़ले । गुणाः—रक्तपित्ते हितं । सि.यो.र.पि.चि. । “रक्ते कफे पीनसके च कण्ठे गलामये वातरुजे सपित्ते । शीतप्रतिश्याय-कृमीन् निहन्ति शुष्कस्तथार्द्रश्चणकः प्रशस्तः ।” अत्रि.१५अ. । मधुरः रूक्षः मेहघ्नः वातपित्तकरः दीप्तिवर्णकरः बलकरः रुच्यः आध्मानकरश्च । तद्यूषगुणाः—मधुरः कषायः कफघ्नः वातविकारकरः श्वासोऽर्ककासपीनसघ्नः बलदीपनश्च । रा.नि.व.१६ । कषायः कटुकश्चोष्णो वातघ्नः कफदोषकृत् । रक्तपित्तं निहन्त्याशु चणानां यूष उच्यते ॥ अङ्गारभृष्टस्तैलभृष्टश्च तद्गुण एव । आर्द्रभृष्टः बल्यो रुचिकरश्च । शुष्कभृष्टस्तु रूक्षो वातकुष्ठप्रकोपनः । स्विन्नः पित्तघ्नः कफघ्नश्च । तत्सूपः क्षोभकरः । आर्द्रोऽतिकोमलः रुच्यः पित्तशुक्रहरः शीतलश्च । भा.पू १भ.धान्यव. । तत्शाकं रुच्यं दुर्जरं कफवातकृत् अम्लं विष्टम्भजनकं पित्तघ्नं दन्तशोथहरञ्च । भा.शाक.व. । पर्य्युषितचणकजलगुणाः—शीतं प्रातः पीतं पित्तरसहरं पुष्टिदं सन्तर्पणञ्च । रा.नि.व.१६ ।

**चणकरोटिका** । स्त्री । चणकचूर्णकृतरोटिकायाम् । ছোলার রুটী । गुणाः—रूक्षा विष्टम्भकरी गुरुः श्लेष्मपित्तरक्तघ्नी च । भा. ।

**चणकलोणी** । स्त्री । चणकाम्ले । গাছ ছোলা । চাণাশাক । वै.निघ. । [छातू ।

**चणकशक्तुः** । पुं । चणककृतशक्तौ । ছোলার

**चणकक्षारः** । पुं । चणकपुष्पे । रसकौ.क्रव्यादरसे ।

**चणका** । स्त्री । अतस्याम् । মশিনা । र.सा.सं.।

**चणकाम्लकम्** । क्ली । पिप्पलीमूले । चणकक्षारे । ছোলার শাক, গাছ ছোলা । हिं चणकलोणी । गुणाः—“चणकाम्लकमत्यम्लं दीपनं दन्तहर्षणं लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ।” भा.र.सा.सं.अम्लवर्गे । [शीतलजले । रत्ना.।

**चणकाम्लवाः** । क्ली । चेत्रस्थफलवश्चणकपत्र-

**चणक्यम्** । क्ली । चाणक्यमूलके । वैद्यकम् ।

**चणद्रुमः** । पुं । क्षुद्रगोक्षुरे । ছোট গোখ্‌রী । रा.नि.व.४ ।

**चणपत्रकः (पत्री)** । पुं, स्त्री । रुदन्तीवृक्षे । रोदन्तीति उत्कले । रा.नि.व.५ । गोक्षुरके । গোখ্‌রী । वै.निघ. ।

**चणिका** । स्त्री । तृणविशेषे । চোণার শাক । गुणाः—वृष्या बल्या मधुरा वीजैस्तृणैश्च पशुहिता। रा.नि.व.८ ।

**चण्डः** । पुं । तिन्तिड़ीवृक्षे । मे. । रक्तकरवीरे । आरण्यशूकरे । वै.निघ. । ग्रन्थिपर्णे । গেঁঠেলা । हिं चौरा । रा.नि.व.१२ । [मयूरे । वै.निघ. ।

**चण्डकः (की (इन्))** । पुं । रक्तकरवीरे ।

**चण्डका** । स्त्री । वचायाम् । वै.निघ. ।

**चण्डशुक्रा** । स्त्री । तिन्तिड़्याम् । वै.निघ. ।

**चण्डचन्द्रिका** । स्त्री । रसजारणादिशाने । वैद्यकम् ।

**चण्डहासा** । स्त्री । गुडूच्याम् । रा.नि.व.३ ।

**चण्डा** । स्त्री । (Andropogon aciculatum.) चोरनामगन्धद्रव्ये । চোরা । तें लिंमिटोंड़ । अम. । अजमोदायाम् । वै.निघ. । शङ्खपुष्प्याम् । चोरपुष्प्याम् । ভাটুই, ড়ানকুনী । मे.। लिङ्गिन्याम् । हिं पचगुड़िया । कपिकच्छ्वाम् ।

·आगाकुली। आखुकर्णाम्। ईन्दुरकाणी। रा. नि.व.३। श्वेतदूर्व्वायाम्। रा.नि.व.८।

**चण्डाख्या** । स्त्री। दारुहरिद्रायाम्। वै.निघ.।

**चण्डात: (क:)** । पुं। करवीरे। अम.। रुद्लीढचे। वै.निघ.।

**चण्डाल: (क:)** । पुं। रक्तकरवीरे। तण्डुलीयशाके। চাঁপানটিয়া,কাঁটানটিয়া। वै.निघ.।

**चण्डालकन्द:** । पुं। स्वनामख्यातमहाकन्दशाके। চণ্ডালকন্দ। मं चण्डालकन्द। कं मादगेगड्डे। स एकपत्रद्विपत्रत्रिपत्रचतुष्पत्रपञ्चपत्रभेदेन बहुधा। गुणा:—मधुर: कफपित्तरक्तदोषघ्न: विषभूतादिदोषघ्न: रसायनश्च। रा.नि.व.७।

**चण्डालिका** । स्त्री। करवीरे। चण्डालवल्ल्याम्। বনচাঁড়াল। मे.।

**चण्डाली** । स्त्री। शिवलिङ्गिन्याम्। লিঙ্গিনী লতা। रा.नि.व.१३। रस.र.प्रमेह-चि.मेहहिरदसिंहरसे।

**चण्डिका** । स्त्री। चतस्रां। মশিনা। তিকা।

**चण्डी** । स्त्री। चिड़ादेवदारौ। शिवलिङ्गिन्यां। শিবলিঙ্গিনী লতা। रा.नि.व.३। [नि.व.१०।

**चण्डीकुसुम:** । पुं। रक्तकरवीरवृक्षे। रा.

**चण्डीलता** । स्त्री। ग्रन्थिपर्णभेदे। গেঁটেলা। हिं चीरा। वै.निघ.।

**चण्डु:** । पुं। मूषिके। श.च.।

**चण्डेश्वररस:** । पुं। नवज्वरे रस:। "रसं गन्धं विषं ताम्रं मर्द्दयेदेकयामकं। आर्द्रकस्वरसेनैव मर्द्दयेत्सप्तवारकम्। निर्गुण्ड्या: स्वरसे पश्चात् मर्द्दयेत्सप्तवारकम्। गुञ्जैकार्द्ररसेनैव दत्ता हन्ति ज्वरं क्षणात्॥" রস, গন্ধক, বিষ, তাম্র প্রত্যেকে সমভাগ প্রতিদিন আদার রসে ১প্রহর মর্দ্দন করিয়া ৭ ভাবনা দিবে। ঐরূপ নিশিন্দা রসে ৭ ভাবনা দিবে। মাত্রা ১ র. অনুপান আদার রস। रसकौ.।

**चतुर:** । पुं। काके श.च.। [निघ.।

**चतुरङ्ग:** । पुं। कलायभेदे। তেওড়া। वै.

**चतुरङ्गा** । स्त्री। घोटिकावृक्षे। শেয়াকুল। रा.नि.व.८।

**चतुरङ्गावलेह:** । पुं। ज्वरे अवलेह:। सप्तसमभागद्राक्षामलकपथ्यापिप्पलीमधुकृत:। भा.।

**चतुरङ्गुल:** । पुं। आरग्वधविशेषे। বড় সোণালু। हिं धनवहेड़ा। प.मु.। पटोलसदृशफुललतायाम्। তিৎপলতা। सु.सू.३८अ.।

**चतुरम्लम्** । क्ली। अम्लचतुष्टये। यथा—कोलदाड़िमवेतसवृक्षाम्लेषु। कपित्थदाड़िमतिन्तिड़ीफलवृक्षाम्लेषु। (वृक्षाम्लं आम्रातके।) अम्लवेतसवृक्षाम्लवृहज्जम्बीरनिम्बुकेषु। অম্লবেতস, আমড়া, গোঁড়া লেবু, কাগজী নেবু। भा.।

**चतुरूर्द्ध्वपात:** । पुं। शरभमृगे। वै.निघ.।

**चतुरूषणम्** । क्ली। कणामूलसहिते त्र्यूषणे। "त्र्यूषणं सकणामूलं कथितं चतुरूषणम्। व्योषस्येव गुणा: प्रोक्ता अधिकाश्चतुरूषणे॥" वैद्यकम्।

**चतुर्गति:** । पुं। कच्छपे। श.च.।

**चतुर्जातम्** । क्ली। चातुर्जातके। গুড়ত্বক্ তেজপত্র এলাইচ নাগেশ্বর। वै.निघ.,२भ. वा. व्या.लघुनपाके। [দুই দিন অন্তর জ্বর।

**चतुर्थक:** । पुं। विषमज्वरभेदे, चातुर्थिकज्वरे।

**चतुर्थिका** । स्त्री। पलमाषे ४ वा ८ तौ। प.प्र.। [निघ.।

**चतुर्दंष्ट्रा** । स्त्री। गोक्षुरक्षुपे। গোখ্‌রী। वै

**चतुर्दल:** । पुं। सुनिषण्णशाके। শুশুনিশাক। भा.।

**चतुर्दशाङ्ग:** । पुं। सान्निपातिकज्वरे कषायभेदे। सदशमूलकिराततिक्तादिगणे। दशमूलं चिरातता गुडूची मुस्ता शुण्ठी मिलित्वा २ तो.। प्रक्षेप: ढवचूर्णं ४ माषा। দশমূল, চিরেতা, গুলঞ্চ, মুতা,শুঁট মিলিত ২ তো.। প্রক্ষেপ তেউড়ীচূর্ণ ৪ মাষা। सा.कौ.।

**चतुर्दशी** । स्त्री। श्वेतनिर्गुण्ड्याम्। শ্বেত নিশিন্দা। वै.निघ.।

**चतुर्द्रव:** । पुं। चतुर्गुणद्रवद्रव्ये। शि.यो.।

**चतुर्धारी** । स्त्री। चतुर्धारकाण्डवल्ल्याम्। करलाविशेष। वै.निघ.। [তাড়ক। वै.निघ.।

**चतुर्भद्रा** । स्त्री। शक्रवृद्धदारके। শ্বেতবীজ

**चतुर्भद्रः** । पुं । समभागेषु सुस्तकातिविषागुडूची शुण्ठीषु । वैद्यकम् ।

**चतुर्भद्रिकावलेहः** । पुं । चातुर्भद्रावलेहे ।

**चतुर्मुखः** । पुं । वातव्याधौ रसविशेषे । रसगन्धकलौहाभ्राणि प्र. समभागानि स्वर्णभस्म सूततुल्यं कुमारीरसेन मर्द्दयित्वा एरण्डपत्रैः वेष्टयित्वा धान्यराशौ दिनत्रयं स्थापयेत् । र.सा.सं. ।

**चतुर्वर्णः** । पुं । कलायभेदे । তেওড়া । वै. निघ. ।

**चतुर्विंशतिकः** । पुं । पुरुषे । च.शा.१अ. ।

**चतुर्विधान्नम्** । क्ली । चर्व्यचोष्यलेह्यपेयेषु । See अन्नम् ।

**चतुर्बीजम्** । क्ली । मेथिकादिबीजचतुष्टये । "मेथिका चन्द्रसूरश्च कालाजाजी यवानिका । एतच्चतुष्टयं युक्तं चतुर्बीजमिति स्मृतम् । तच्चूर्णं भक्षितं नित्यं निहन्ति नयनामयं । अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् ॥" भा. ।

**चतुश्छदः (दा)** । पुं, स्त्री । चाङ्गेर्य्याम् । আমরুল । सुनिषण्णके । শুশুনি । वै.निघ. ।

**चतुष्की** । स्त्री । मशहर्य्याम् । মশারি । मे. ।

**चतुष्कुवलयम्** । क्ली । कुवलयस्य नालकन्ददलकेसरेषु । পদ্মের ডাঁটা, মূল, পাতা ও কেসর । वा.उ.३९अ., सिद्धरसायनघृते ।

**चतुष्पत्रः (त्री (ङन्))** । पुं । चण्डालकन्दे । रा.नि.व.७ । क्षुद्रपाषाणभेदक्षुपे । ছোট পাথরকুচি । रा.नि.व.५ । सुनिषण्णकशाके । শুশুনি শাক । हिं चौपत्तिशाक । "चाङ्गेरीसदृशः पत्रैः चतुर्दल इति स्मृतः । शाको जलान्विते देशे चतुष्पत्रीति चोच्यते ॥" भिषग्दाम् । ঝাঁটী । च.टी. ।

**चतुष्पदः (ष्पात्)** । पुं । भिण्डाक्षुपे । रा. नि.व.४ । पशौ गजाश्वादौ । मे. ।

**चतुष्पदा** । स्त्री । भेण्डायाम् । वै.निघ. । जलजपुष्पविशेषे । चर्कधि. । [रा.नि.व.५ ।

**चतुष्पर्णी** । स्त्री । क्षुद्राम्लिकायां । आमरुल ।

**चतुष्पादः** । पुं । चिकित्सायाः पादचतुष्टये । "भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।" वैद्यकम् ।

**चतुष्पुटोदरा** । स्त्री । पीतपुष्पकरवीरवृक्षे । वै.निघ. ।

**चतुष्पुण्ड्रः** । पुं । भिण्डाक्षुपे । रा.नि.व.४ ।

**चतुष्फला** । स्त्री । नागबलायां । গোরক্ষচাকুলিয়া । रा.नि.व.५ ।

**चतुस्समः** । पुं । आमज्वरे योगविशेषे । যোগবিশেষ । हरीतकीलवङ्गसैन्धवयवानीसमभागेषु । मिलितचन्दनागुरुकस्तूरीकुङ्कुमेषु । हे.च. । जातीफललवङ्गजीरकटङ्कणेषु । गुणाः—"आमशूलविबन्धघ्नं पाचनं दोषशोषणात् ।" च. । आमातिसारशूले जातीफलं लवङ्गं जीरकं टङ्कणं समभागचूर्णं माक्षिकसितासहितं लिह्यात् ।

**चत्वालः** । पुं । दर्भभेदे । गर्भाशये । वै निघ. ।

**चद्रिरः** । पुं । हस्तिनि । कर्पूरे । सर्पे । उणा. ।

**चनः** । क्ली । भक्ते । ভাত । वै.निघ. ।

**चन्दकः** । पुं । मत्स्यविशेषे । চান্দা মাছ । तन्मांसम् अनभिष्यन्दि मधुरं बलकरञ्च । रा.नि. व.१९ ।

**चन्दनः** । पुं, क्ली । Sandal. (Sirium myrtifolium.) स्वनामख्याततरौ । यस्य काष्ठं परमसुगन्धि । চন্দন গাছ । स सप्तभेदः—श्रीखण्डशवरपीतपत्तङ्गरक्तचन्दनवर्बरहरिगन्धभेदेन । श्रेष्ठचन्दनलक्षणं—"स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितं । ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते ॥" भा. । सा. गुणाः—"चन्दनानि च सर्व्वाणि सदृशानि रसादिभिः । गन्धेन तु विशेषोऽस्ति पूर्व्वं श्रेष्ठतमं गुणैः । चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु ॥" रा.नि.व.१२ । "हृद्यं वर्ण्यं विषश्लेष्मतृष्णापित्तास्रदाहजित् ॥" म.द. । क्ली । रक्तचन्दने । मे. । पुं । वानरविशेषे । हे.च. ।

**चन्दनगोपा (पी)** । स्त्री । शारिवाविशेषे । कृष्ण शারিবা, শ্যামা লতা । रा.नि.व.१२ ।

**चन्दनद्रुमः** । पुं । रक्तचन्दनवृक्षे । सर्ज्जतरौ । वै.निघ. ।

**चन्दनपुष्पम्** । क्ली । लवङ्गे । रा.नि.व.१२ ।

**चन्दनमूलम्** । क्ली । चन्दनतरुमूले । इदं कुङ्कुमविषघ्नम् । नकुल.१६अ. ।

**चन्दनमूलिका** । स्त्री । कृष्णसारिवायाम् । श্যামালতা । वै.निघ. ।

**चन्दनसारिवा** । स्त्री । गोपीचन्दने । তিল-কমাটী । कृष्णसारिवायाम् । रा.नि.व.१२ ।

**चन्दनसारः** । पुं । वज्रक्षारे । रा.नि.व.६ ।

**चन्दना** । स्त्री । कृष्णसारिवायाम् । रा.नि.व. १२ । श्वेतसारिवायाम् । भा. ।

**चन्दनादितैलम्** । क्ली । राजयक्ष्माधिकारे । तिलतैलं ४ श. दधिमस्तु १६ श. लाक्षारसः ४ श. (लाक्षा १६ प. वारि १६ श. शे. ४ श.) । कल्कार्थं—रक्तचन्दनं बालकं नखी कुष्ठं यष्टिमधु शैलजं पद्मकाष्ठं मञ्जिष्ठा सरलकाष्ठं देवदारु श-टी एला खट्टाशी नागकेशरं तेजपत्रं शिलारसः मुरामांसी जटामांसी काकोली प्रियङ्गुः मुस्ता ह-रिद्रा दारुहरिद्रा श्यामालता अनन्ता लताकस्तूरी लवङ्गं अगुरु कुङ्कुमं गुड़त्वक् रेणुकं नलुका प्र. २ तो.। তিলতৈল ৪ শ. দধিমস্তু ১৬শ. লাক্ষারস ৪ শ. (লাক্ষা ১৬ প. জল ১৬ শ. শে. ৪ শ) কল্কার্থ—রক্তচন্দন, বালা, নখী, কুড়, যষ্টি-মধু, শৈলজ, পদ্মকাষ্ঠ, মঞ্জিষ্ঠা, সরলকাষ্ঠ, দেবদারু, শটী, এলাইচ, খাটাশী, নাগেশ্বর, তেজপত্র, শিলারস, মুরামাংসী, জটামাংসী, কাকোলী, প্রিয়ঙ্গু, মুতা, হরিদ্রা, দারুহরি-দ্রা, শ্যামালতা, অনন্তমূল, লতাকস্তুরী, লবঙ্গ, অগুরু, কুঙ্কুম, গুড়ত্বক্, রেণুক, নালুকা প্র-ত্যেকে ২ তোলা । च.द. ।

**चन्दनादिलौहम्** । क्ली । जीर्णज्वरे । "रक्त-चन्दनह्रीवेरपाठोशीरकणाशिवाः । नागरोत्पलधा-त्रीभिस्त्रिमदैन समन्वितं । लौहं निहन्ति विवि-धान् समस्तान् विषमज्वरान् ॥" রক্তচন্দন, বা-লা, আকনাদিমূল, বেণার মূল, পিপুল, হ-রীতকী, শুঁট, নীলোৎপল, আমলা, মুতা, চিতার মূল, বিড়ঙ্গ প্রত্যেকে সমভাগ। সর্ব্বসমান লৌহ একত্র জলে মাড়িবে। र.सा.सं. ।

**चन्दनाम्बु** । क्ली । सुगन्धजलभेदे । वैद्यकम् ।

**चन्दिरः** । पुं । कर्पूरे । तथा. । हस्तिनि । मे. ।

**चन्द्रः** । पुं । निशाकरे । अम. । कर्पूरे । जले । मे. । काम्पिल्लके । কমলাগুঁড়ি । रा.नि.व.१२ । भा.म.१म.सन्ततज्वर चि. । रौप्ये । स्वर्णे । रा.नि. व.१३ । रक्तमुक्ताफले । र.चि.३स्त. । हीरके । भा. । गैरिके । शुक्लचित्रतायाम् । वै.निघ. ।

**चन्द्रकः** । पुं । मत्स्यविशेषे । চাঁদা মাছ । गु-णाः—"चन्द्रकस्त्वनभिष्यन्दी मधुरो बलवर्द्धनः ।" राज.३प. । मेचके । ময়ূরপুচ্ছের চাঁদ । अम. । नखे । श.च. । क्ली । श्वेतमरीचे । रा.नि.व.६ । चन्दने । स्त्री। मेथिकायां । মেতি । कपिकच्छ्वां । আলকুশী । वै.निघ. । [श.र. ।

**चन्द्रकला** । स्त्री । वाचामत्स्ये । বাচা মাছ

**चन्द्रकवान्** । पुं । मयूरे । वै.निघ. ।

**चन्द्रकान्तः** । पुं । स्वनामख्यातमणौ । চন্দ্র কান্ত মণি । गुणाः—शीतलः स्निग्धः रक्तपित्त तापहरः शिवप्रीतिकरः ग्रहालक्ष्मीदूरकृत् स्वच्छ श्च । तत्परीक्षा—"स्निग्धं श्वेतं पीतमाभासमं तद्व त्ते चित्ते स्वच्छतां यन्मुनीनां । यच्च स्रावं याति च न्द्रांशुसङ्गाज्ञात्यं रत्नं चन्द्रकान्ताख्यमेतत् ॥" रा नि व.१३ । तदुत्थजलगुणाः—लघु गङ्गाम्बुसदृश पित्तघ्नं निर्म्मलं मूर्च्छादाहरक्तपित्तकासमदात्यये हितञ्च । रा.नि.व.१४ । क्ली । श्रीखण्डचन्दने कैरवे । प.मु. । स्त्री । निर्गुण्ड्यां । वै.निघ. । रा त्रौ । श.च. ।

**चन्द्रकान्ति** । क्ली । रूप्ये । রূপা । वै.निघ. ।

**चन्द्रकी** (इन्) । पुं । मयूरे । चिका. । लिङ्गनाशरोगे, दृष्ट्युपसर्गविशेषे । यथा—"दृष्टि कांस्यसमच्छाया चन्द्रकी चन्द्रकाकृति ।" वा.उ १४अ. ।

**चन्द्रगन्धा** । स्त्री । शट्याम् । শটী । वै.निघ. ।

**चन्द्रगोलिका** । स्त्री । चन्द्रकमीने । চাঁদ মাছ । वै.निघ. । [शि । सु.चि.८अ.

**चन्द्रचक्रम्** । क्ली । चन्द्रवद्वक्राकारच्छेदकर्म्म

**चन्द्रचञ्चलः** । पुं । खलिशमत्स्ये । খলশিয় মাছ । चिका. । चन्द्रकमत्स्ये । চাঁদা মাছ জটা. । [निघ. ।

**चन्द्रचन्दनम्** । क्ली । कुङ्कुमागुरुचन्दने । वै

**चन्द्रजोपलः** । पुं । चन्द्रकान्तमणौ । रा.नि व.१३ ।

**चन्द्रटः** । पुं । शिशिलट्टीकाव्याख्याकारे ।

**चन्द्रतरः** । पुं । महासोमवल्ल्याम् । वै.निघ. ।

**चन्द्रद्युति** । क्ली । चन्दने । वै.निघ. ।

**चन्द्रनामा(न्** । पुं । कर्पूरे । रा.नि.व.१२ ।

**चन्द्रपुष्पम्** । क्ली । रौप्ये । वै.निघ. । (ष्पा, ष्पी) स्त्री । श्वेतकण्टकार्य्याम् । रा.नि.व.४ ।

**चन्द्रप्रभा** । स्त्री । वाकुच्याम् । সোমরাজ । रा.नि.व.४ । कर्चूरके । शटी । वै.निघ. । पायस विशेषे । পায়স বিশেষ । लक्षणं —"आतप्ततण्डुली धौती परिभ्रष्टौ घृतेन च । खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत् । भ्रष्टजीरचतुर्जातचन्द्रविन्दुसुरोचनः ॥" राज.३प. । अर्शसि प्रमेहे च औषधविशेषे —विडङ्गं चित्रकमूलं त्रिकटु त्रिफला देवदारु चवी किरातत्तिक्तकं पिप्पलीमूलं मुस्ता शटी वचा शुद्धस्वर्णमाक्षिकं सैन्धवं यवक्षारः सर्ज्जिक्षारः हरिद्रा दार्व्वी धान्यकं गजपिप्पली अतिविषा प्र. २ तो. शुद्धशिलाजतु ८ प. (३२ तो.) शुद्धगुग्गुलुः २ प. शर्करा ४ प. वंशरोचनात्रिवृतादन्तीमूलत्वगेलापत्राणां प्र. १ प. । अत्र पलप्रमाणं रसगन्धकयोरपि केचिद्वदति । मात्रा वदरास्थिसमा । रस.र. । [ইচ । अम. ।

**चन्द्रवाला** । स्त्री । स्थूलैलायाम् । বড় এলা-

**चन्द्रभस्म** । क्ली । कर्पूरे । त्रिका. ।

**चन्द्रभा** । स्त्री । श्वेतकण्टकार्य्याम् । वै.निघ. ।

**चन्द्रभागा** । स्त्री । भारतवर्षीयनदीविशेषे । तज्जलगुणाः—सुशीतलं पित्तदाहघ्नं वातकरञ्च । रा.नि.व.१४ ।

**चन्द्रभूतिः** । स्त्री । रौप्ये । रा.नि.व.१३ ।

**चन्द्रमणिः** । पुं । चन्द्रकान्तमणौ । हे.च. ।

**चन्द्रमल्लिका (ल्ली)** । स्त्री । मल्लिकाभेदे । চন্দ্রমল্লিকা ।

**चन्द्रमसी** । स्त्री । योनिमध्यस्थनाडीविशेषे । यथा—"या चापरा चान्द्रमसी च नाड़ी कन्दर्पगर्भे भवति प्रधाना । सा सुन्दरी योषितमेव सूते .... ॥" भा. ।

**चन्द्रमा** । पुं । सोमलताभेदे । सु.चि.२९अ. ।

**चन्द्ररश्मिनः** । पुं । चकोरपक्षिणि । वै.निघ. ।

**चन्द्रराजी** । स्त्री । वाकुच्याम् । হাকুচ । रा. नि.व.४ । [वै.निघ. ।

**चन्द्ररुक्** । क्ली । चन्द्रकमत्स्ये । চাঁদা মাছ ।

**चन्द्रे(ले)खा** । स्त्री । सोमराज्याम् । प.मु. । वाकुचीवीजे । হাকুচ। वा.चि.१४अ. कन्दर्पसारतैले।

**चन्द्रलता** । स्त्री । एलालतायाम् । वै.निघ. ।

**चन्द्रलोह(क)म्** } क्ली । रौप्ये । रा.नि.व. १३ ।
**चन्द्रवपुः** }

**चन्द्रवल्लभा (वल्लरी)(वल्ली)** । स्त्री । (री) सोमलतायाम् । रा.नि.व.१३ । ब्राह्मीक्षुपे । ব্রাহ্মী শাক । अ.टी.भ. । (भा, ल्ली) प्रसारण्याम् । গন্ধভাদুলী । माधवीलतायाम् । रा.नि.व.५।१०। चन्द्रमल्लिकायाम् । वै.निघ. ।

**चन्द्रविहङ्गमः** । पुं । वकपक्षिणि । त्रिका. । सारसपक्षिणि । वै.निघ. ।

**चन्द्रशकला** । स्त्री । वाकुच्याम् । হাকুচ । वै.निघ. । [हारा. ।

**चन्द्रशालिका** । स्त्री । प्रासादशिरोगृहे ।

**चन्द्रशू(सू)रम्** । क्ली । पशुमेहनकारिकायां । হালিম, চাঁদসুর । वै.निघ.२भ.हिक्का.चि.चन्द्रसूरकषाये । गुणाः—"चन्द्रशूरं हितं हिक्कावातश्लेष्मातिसारिणाम् । असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनम् ॥" भा.ह.वर्गः । वनमेथिकायां । वै.निघ. ।

**चन्द्रशेखररसः** । पुं । शीताङ्गसन्निपातज्वरे रसः । रसगन्धकमरिचटङ्कणानि प्र. समानि सर्व्वतुल्या शुद्धमनःशिला मत्स्यपित्तेन १ दिनं भावयेत् । र.सा.सं. ।

**चन्द्रसंज्ञः** । पुं । कर्पूरे । अम. ।

**चन्द्रसम्भवा** । स्त्री । सूक्ष्मैलायाम् । श.च. ।

**चन्द्रहासम्** । क्ली । रौप्ये । रा.नि.व.१३ ।

**चन्द्रहासा** । स्त्री । लम्बिकाभेदे । মোহনভোগ । भा. । गुडूच्याम् । रा.नि.व.३। कन्दगुडूच्याम् । प्रसारण्यां । श्वेतकण्टकार्य्याम् । वै.निघ. ।

**चन्द्रा** । स्त्री । कर्कटशृङ्ग्याम् । কাঁকড়া শৃঙ্গী । रा.नि.व.६ । एलायाम् । श.र. । गुडूच्याम् । ग्रन्थिपर्णे । গেঁটেলা। श्वेतकण्टकार्य्याम् । वै.निघ.

**चन्द्रापुरपूगम्** । क्ली । तत्स्थानजातपूगफले । चन्द्रापुरी सुपारि । रा.नि.व.११ ।

**चन्द्राब्जम्** । क्ली । कुमुदपुष्पे । श्वेत शुन्दि, श्वेतोत्पल । रा.नि.व.१० ।

**चन्द्राभिधा** । स्त्री । वाकुच्याम् । वै.निघ. ।

**चन्द्रामृतरसः (लौहञ्च)** । पुं । राजयक्ष्माधिकारे रसः । पारदः १ भ. गन्धकः २ भ. सैन्धवं १ भ. शमीश्वेतापराजितापत्ररसेन एकत्र सम्मर्द्य गोलकीकृत्य नागवल्लीदलैर्वेष्टयित्वा पातालयन्त्रे पचेत् । दिनान्ते च उद्धृत्य यन्त्रोर्द्धलग्नम् औषधं ग्राह्यम् । मात्रा ३ रक्तिः । अनु. मृगाङ्कवत् । अन्यः कासे—रसः गन्धकः लौहं प्र. २ तो टङ्कणक्षारः ४ वा ८ तो. मरिचचूर्णं २ वा ४ तो. त्रिकटु त्रिफला धान्यकं जीरकं सैन्धवलवणं चविका एषां प्र. चूर्णं १ तो. छागीदुग्धेन पेषयेत् । मात्रा ६ र. । र.सा.सं. । अन्यः बृहच्चन्द्रामृतरसः राजयक्ष्मणि—रसः १ तो. गन्धकः १ तो. अभ्रं २ तो. (मतान्तरे ४ तो.) कर्पूरं ॥० तो. स्वर्णभस्म १ तो. ताम्रभस्म १ तो. लौहभस्म २ तो. इन्द्रदारुकबीजं जीरकं भूकुष्माण्डः शतमूली कोकिलाक्षबीजं बला कपिकच्छुमूलं गोरक्षतण्डुलीमूलं जातीफलं जयित्री लवङ्गं सिद्धिबीजं श्वेतधूनकं प्र. ॥० तो. मधुना मर्दयेत् । र.सा.सं. ।

**चन्द्रार्द्धम्** । क्ली । भगन्दरस्य अर्द्धचन्द्राकारच्छेदने । सु.चि.८अ. ।

**चन्द्रालोकः** । पुं । कर्पूरे । वै.निघ. ।

**चन्द्राश्मा (न्द्रिकाद्रावः)** । पुं । चन्द्रकान्तमणौ । रा.नि.व.१३ ।

**चन्द्रिका** । स्त्री । स्थूलैलायाम् । कर्णस्फोटायां । काणछिड़ा । श्वेतकण्टकार्य्याम् । रा.नि.व.४ ।

**चन्द्रिकापायी (यिन्)** । पुं । चकोरे । रा.नि.व.१९ ।

**चन्द्रिकाम्बुजम्** । क्ली । कुमुदे । श्वेतोत्पल वा श्वेत शुन्दि । रा.नि.व.१० ।

**चन्द्रिलः** । पुं । नापिते । वास्तुकशाके । मे. ।

**चन्द्री** । स्त्री । वाकुच्याम् । रा.नि.व.४ ।

**चन्द्रेष्टम्** । क्ली । कुमुदपुष्पे । वै.निघ. ।

**चन्द्रेष्टा** । स्त्री । उत्पलिन्याम् । कुमुदिनी । रा.नि.व.१० ।

**चन्द्रोदयमकरध्वजः (रसः)** । पुं । रसायनाधिकारे रसः । शुद्धकण्टकवेध्यसुवर्णपत्रं १ प. शुद्धरसः ८ प. शुद्धगन्धकः १६प. एतानि रक्तकार्पासपुष्पैः मर्द्दयित्वा पुनः घृतकुमारीरसेन मर्द्दयेत् ततो दृढ़काचकूप्यां स्थापयेत् । अथ तां कूपीं मृत्तिकावस्त्रखण्डेन लेपयित्वा इष्टकादिना मुखं रोधयेत् । ततो मन्दमध्यातिशयवह्निना यथाक्रमं दिनत्रयं वालुकायन्त्रेण पचेत् । तत उद्धृत्य कूपिकोर्द्धलग्नसिन्दूरस्य १ प. कर्पूरं ४ प. जातीफलं पिप्पली लवङ्गं कस्तूरी (मृगनाभिः) एषां प्रति ४ मा. एकत्र मर्द्दयित्वा माषकप्रमाणा वटिका कार्य्या पर्णानुपानतो भोक्तव्या च । रस.र. । तद्वत्—ध्वजभङ्गाधिकारे । शुद्धसूक्ष्मस्वर्णदलं १ प. शुद्धपारदः ८ प. एकत्र सम्यक्सम्मर्द्य १६ प. शुद्धगन्धकेन एकत्र कज्जली कार्य्या । अथ रक्तकार्पासपुष्परसेन कुमारीरसेन च उक्तां कज्जलिकां सुभाव्य शुष्कीकृत्य समतलविलेपितकाचकूपिकायां स्थापयित्वा खटिकया कूपीमुखं निरोधयेत् । ततस्तां कूपीं तलमध्ये सच्छिद्रहण्डिकाभ्यन्तरे संस्थाप्य वालुकायन्त्रयोगेन दिवसत्रयं पचेत् । शीते अवतार्य्य कूपीकण्ठलग्नमौषधं गृहीत्वा तस्य १ प. कर्पूरस्य च ४ प. तथा जातीफललवङ्गमरिचकस्तूरीमृगनाभीनां प्रत्येकं ४ मा. गृहीत्वा एकत्र मर्द्दयेत् । मात्रा ४ र. पर्णेन भक्षणीयम् । स्वल्पः—ध्वजभङ्गे रसः । तस्य प्रणाली यथा—कर्पूरजातीफलमरिचलवङ्गानां प्र. १ तो. मृगनाभिः स्वर्णं प्र. तोलकाष्टमभागं (१ मा.) रससिन्दूरं सर्व्वसमं गृहीत्वा एकत्र मर्द्दयेत् । मात्रा ४ र. अनु. पर्णरसः । भैष. ।

**चन्द्रोदयवर्त्तिः** । स्त्री । नेत्ररोगे हिता । हरीतकी वचा कुष्ठं पिप्पली मरिचं विभीतकास्थिमज्जा शुद्धं शङ्खनाभिः शुद्धमनःशिला एषां प्र. समभागः छागदुग्धेन एकत्र मर्दयेत् ।

**चन्द्रोपलः** । पुं । चन्द्रकान्तमणौ । हे.च. ।

**चप(व)लः** । पुं । पारदे । चिका. । र.सा.सं. माणिक्यरसे । राजमाषे । रा.नि.व.१६ । चोरकनामगन्धद्रव्ये । रा.नि.व.१२ । प्रस्तरविशेषे । दण्डा । वै.निघ. । मूषिकभेदे । तद्दष्टे छर्दिः मूर्च्छा

तृष्णा च भवेत् । सु.कल्प.६अ. । वा.उ.३८अ. ।

**चपलतामयः** । पुं । अजीर्णरोगे । निदा. ।

**चपला** । स्त्री । पिप्पल्याम् । रा.नि.व.६ । भा.म.४भ.योनिरोग.चि.। विजयायां । सिद्धि । मद्यसामान्ये । रा.नि.व.१४ । जिह्वायां । भा । पिप्पलीमूले । ग्रहणी.चि.पानीयभक्तवट्याम् ।

**चपलाजटा (मूलम्)** । स्त्री। पिप्पलीमूले। वै.निघ.२भ.कास.चि.मञ्जिष्ठाद्यचूर्णे ।

**चपेटः** । पुं । तले । चापड़ । रा.नि.व.१८ ।

**चमटः** । पुं । स्थूलगोधूमे । बड़गम । वै.निघ.।

**चमत्कारः** । पुं । अपामार्गे । श.र. ।

**च(चा)मरम्** । क्ली । चामरे । बालव्यजने । चामर । मे. । तद्वायुगुणाः—ओजस्करः मक्षिकादिनाशकश्च । राज. ।

**चमरः (री)** । पुं, स्त्री । चमरीमृगे । चमरी, चमरी गाभि । मं चवरीगाय । कं हुंह । तन्मांसं स्निग्धं मधुरं कासघ्नं विपाके मधुरं वातपित्तघ्नञ्च । सु.सू.४६अ. । (री) स्त्री । मञ्जर्य्याम् । मे. । चमरस्त्रियाम् ।

**चमरपुच्छः** । पुं । कोकड़मृगे । रा.नि.व.१६ ।

**चमरिकः** । पुं । कोविदारवृक्षे । काञ्चन गाछ । अम. ।

**चमसः** । पुं । पर्पटे । पांपर । पिष्टकभेदे । लड्डुके । (अजयपाल.) । (सी) स्त्री । मुद्गमसूरादिपिष्टके तच्चूर्णे च । "चूर्णं यच्चणकमाषाणां चमसी साभिधीयते ।" भा. ।

**चमूरुः** । पुं । हरिणभेदे । अम. । [श.मा. ।

**चम्पः** । पुं । कोविदारवृक्षे । काञ्चन गाछ ।

**चम्पकः** । पुं । (Michelia champaca.) स्वनामख्यातपुष्पवृक्षे । चाँपाफुलेर गाछ । प.मु. हिं मं चंपा । कं संपगे । गुणाः—कटुः तिक्तः शीतलः दाहघ्नः कण्डूकुष्ठव्रणघ्नः राजचम्पकाद्गुणाश्चैव । रा.नि.व.१० । "चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः । विषक्रिमिहरः कृच्छ्रकफवातास्रपित्तजित् ॥" भा. । पनसवृक्षे । नागकेसरचम्पके । वै.निघ. । क्ली । चम्पकपुष्पे । स्वर्णकदल्याम् । चाँपाकला ।

**चम्पककदली (रम्भा)** । स्त्री । सुवर्णकदल्यां । चाँपाकला । गुणाः—वातपित्तहरं गुरु वीर्य्यकरम् अतिशीतं रसे पाके च मधुरम् । रा.नि व.११ । वातपित्तघ्नं गुरु वीर्य्यकरं अतिशीतलं रसे पाके च मधुरम् । राज. ।

**चम्पककलिका** । स्त्री । चम्पककोरके । चाँपार कलि । रा.नि.व.१० ।

**चम्पकागदः** । पुं । लूताकीटादिविषहरागदभेदे । यथा—"हरिद्राद्वयपत्तङ्गमञ्जिष्ठानतकेसरैः । सक्षौद्रासर्पिः ।" वा.उ.३७अ. ।

**चम्पकालुः (लुः)** }
**चम्पालुः** } पुं । पनसवृक्षे । काँठाल गाछ । श.र. ।

**चम्पकुन्दः** । पुं । मत्स्यविशेषे । चापिला माछ, चाँदकड़ा । गुणाः—"चम्पकुन्दो गुरुर्हृद्यः मधुरो वातपित्तजित् शुक्रलो बलकृत्प्रोक्तः स्नेहनः श्लेष्मकोपनः ॥" राज.३प. । [गाछ । चिका. ।

**चम्पकोलः (षः)** । पुं । पनसवृक्षे । काँठाल-

**चम्पलः** । पुं । महानागकेशरचम्पके । नागेश्वर चाँपा । चिका. ।

**चयः** । पुं । विष्ठायाम् । रोगवृद्धौ । वै.निघ. ।

**चरः** । पुं । खञ्जरीटपक्षिणि । खञ्जन पाखी । श.मा. । कपर्द्दके । कड़ि । रा.नि.व.१३ ।

**चरकः** । पुं । पर्पटके । क्षेत्पापड़ा । प.मु. । तन्नामकवैद्यकसंहितायाम् । स्वनामख्याते अग्निवेशकृततन्त्रप्रतिसंस्कर्त्तरि वैद्यकसंहिताकारे । चरक मुनि । आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् । संहितोत्पत्तिः यथा—"मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् । तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता । चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥" तत्प्रादुर्भावः—"यदा मत्स्यावतारेण हरिणा वेद उद्धृतः । तदा शेषश्च तत्रैव वेदं साङ्गं समाप्तवान् । अथर्वान्तर्गतं सम्यगायुर्व्वेदञ्च लब्धवान् । एकदा स महीवृत्तं द्रष्टुं चर इवागतः । तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीड़ितान् । स्थलेषु बहुषु व्ययान् म्रियमाणांश्च दृष्टवान् । तान् दृष्ट्वातिदयायुक्तः तेषां दुःखेन दुःखितः । अनन्तश्चिन्तयामास रोगोपशमकारणम् । संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव

च। प्रविशत विवरात् पैदर्यैदार्ष्टैर्दिनः। सन्तत्र इवाचातः न ज्ञातः केनचित्तः। तत्राचरत्वात्वाती विख्यातः चिर्तिमत्तवि॥" भा.।

**चरटः** । पुं । खञ्जरीटपक्षिणि । खञ्जन पाखी। श.मा.। [रा.नि.व.२। क्ली। भक्षणे। है.च.।

**चरणः** । पुं । पादे । रा.नि.व.१८ । तन्मूले ।

**चरणग्रन्थिः** । पुं । पदगुल्फे । है.च.।

**चरणायुधः** । पुं । कुक्कुटे । कुकड़ा । अम.।

**चरतिपञ्चिका** । स्त्री । रास्नायां । वै.निघ.।

**चरप्रियम्** । क्ली । मरिचे । वै.निघ.।

**चराचरः** । पुं । कपर्द्दके । रा.नि.व.१३ ।

**चरिचा** । स्त्री । तिन्तिड़ीवृक्षे । श.र.। [मे.।

**चरुः** । पुं । अन्ने । हव्यान्ने । हव्यान्नपाकभाण्डे ।

**चरुका** । स्त्री । तृणधान्यभेदे । गुणाः – श्यामाकवत् । च.सू.२७अ.।

**चरुव्रणः** । पुं । चित्रपूपे, रोटिकायाम् । চিতাই পিঠা । चिका.।

**चर्चरीकः** । पुं । शाके । महाकाले । मे.।

**चर्चा** । स्त्री । नियमापरित्यागे ।

**चर्पटी** । स्त्री। पूपालिकायाम् । পুলিবিশেষ । चिका.। [गाछ । हला.।

**चर्भटः** । पुं । कर्कटिकालतायाम्। কাঁকুড়

**चर्म्म** (कण्टकः) । पुं । त्वचि । চাম্ড়া । रा.नि.व.१८ । पर्पटके । ক্ষেৎপাবড়া । वै.निघ. जिह्वक.ज्व.चि.।

**चर्म्मकषा** (सा) । स्त्री । The plant Chámara ghása, स्वनामख्यातगन्धद्रव्ये । চামরকষা, চামরঘাস । र.मा.अ.टी.भ.। मांसरोहिण्याम् । रा.नि.व.१२ ।

**चर्म्मकारतरुः** । पुं। शुक्लमदनवृक्षे । वै.निघ.।

**चर्म्मकारालुः** (कः) । पुं । वाराहीकन्दे । শুয়ার আলু । वै.निघ.।

**चर्म्मकारिका** (री) । स्त्री। चर्म्मकषायाम्। চামরঘাস । मे.ज.द.।

**चर्म्मकी** (इन्) । स्त्री, पुं । चर्म्मपक्षिणि । চামচিকে । रा.नि.व.१९ ।

**चर्म्मकीलः** । पुं । तन्नामकक्षुद्ररोगे । আঁচিল । "स्वनामनिदानाभ्यां चर्म्मकीलः प्रकीर्त्तितः ।" सु.नि.१३अ.। "मांसैस्मलमूतततरान् चर्म्मकीलान् विनाशितान् ।" वा.उ.३१अ.। अर्शोभेदे । अर्श, हारिश् । सम्प्राप्तिः—"व्यानस्तु प्रकुपितः श्लेष्मार्थ परिगृह्य बहिः स्वराचि कीलवदर्शांसि निर्वर्त्तयन्ति तानि चर्म्मकीलान्यर्शांसि भाषयते ॥" सु.नि.२अ.। "वातेन तोदपारुष्ये पित्तादसितरक्तता। श्लेष्मणा स्निग्धता चास्य ग्रथितत्वं सवर्णता ॥" भा.नि.। [वै.निघ.।

**चर्म्मघटिका** । स्त्री । जलौकायां । জোঁক ।

**चर्म्मचट(टि)का (टी)** । स्त्री । चर्म्मचट्यां। চামচিকে । चिका.। है.च.श.र.।

**चर्म्मचित्रकम्** । क्ली । श्वित्रकुष्ठे । धवल । रा.नि.व.२० । [व.१८ ।

**चर्म्मजम्** । क्ली । रक्तधातौ । लोम्नि । रा.नि.

**चर्म्मजा** । स्त्री । मसूरिकाभेदे । चामरगोटीति लोके । "स्फोटानां मिलनादेषा बहुस्फोटापि दृश्यते । एकस्फोटा च कृष्णा च बोद्धव्या चर्म्मजाभिधा ॥" भा.।

**चर्म्मटी** । स्त्री। जलौकायां । জোঁক্ । वै.निघ.

**चर्म्मण्वती** । स्त्री । कदलीवृक्षे । मे.।

**चर्म्मतरङ्गः** । पुं । त्वक्सङ्कोचे । মাংসচেতা। रा.नि.व.१८ । चर्म्मकीलरोगे । আঁচিল। वै.निघ.।

**चर्म्मदलम्** । क्ली । क्षुद्रकुष्ठभेदे । लक्षणं—"रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि । तच्चर्म्मदलमाख्यातं स्पर्शासहमथ यत् ॥" भा.। अन्यच—"स्पर्शेन कण्डुव्यथनोषचोषासत्विषु तच्चर्म्मदलं वदन्ति ।" सु.नि.५अ.।

**चर्म्मदूषिका** । स्त्री । चर्म्मरोगविशेषे । কোঠ রোগ । रा.नि.व.२० । खर्ज्ज्वाम् । চুলকুনি । वै.निघ.।

**चर्म्मद्रुमः** । पुं । भूर्ज्जवृक्षे । रा.नि.व.२३ ।

**चर्म्मनाशकः** । पुं। चन्द्रसूरे । হালিম । भा.।

**चर्म्मन्** । क्ली । त्वचवल्कले । গাছের ছাল । त्वगिन्द्रिये, सप्त असृग्धरानामकत्वेति । इतिसंज्ञ ख्यातम् । চাম্ড়া । रा.नि.व.१८ ।

**चर्म्मपत्रा (त्री)** । स्त्री, पुं (त्रः, त्रः) । चर्म्म-चटिकायां । চামচিকী । जटा. । रा.नि.व.१८ ।

**चर्म्मपिड़का** । स्त्री । मसूरिकारोगभेदे । চর্ম্ম-দল বসন্ত । लक्षणं—"कण्ठरोधारुचिस्तम्भप्रला-पारतिसंयुताः । दुश्चिकित्स्याः समुद्दिष्टाः पिड़काः चर्म्मसंज्ञिताः ॥" भा.नि. । [পোড় । अम. ।

**चर्म्मप्रभेदिका** । स्त्री । चर्म्मप्रभेदनास्त्रे ।

**चर्म्मबन्धनम्** । क्ली । मरिचे । वै.निघ. ।

**चर्म्मरङ्गा** । स्त्री । आवर्त्तकीलतायाम् । আৎ-ঘোড়া । रा.नि.व.३ ।

**चर्म्मरी** । स्त्री । तन्नामकफलविषभेदे । सु.कल्प. २अ. । See फलविषम् । [गेषु । वै.निघ ।

**चर्म्मविन्दुका** । स्त्री । शीतपित्तोदर्द्दकोठरो-

**चर्म्म(र्म्मि)वृक्षः** । पुं । भूर्ज्जवृक्षे । सु.कल्प. ५अ । चर्म्मलोहे । सु.चि.११अ. । [वै.निघ. ।

**चर्म्मव्रणः** । पुं । चर्म्मरोगभेदे, लूतारोगादौ ।

**चर्म्मसम्भवा** । स्त्री । एलायाम् । द्वारा. ।

**चर्म्मसा** । स्त्री । जलौकायाम् । वै.निघ. ।

**चर्म्मसारः** । पुं । शरीरस्थरसधातौ । अन्नर-स । रा.नि.व.१८ ।

**चर्म्महन्त्री** । स्त्री । चन्द्रशूरे । হালিম । भा. ।

**चर्म्माख्यम्** । क्ली । क्षुद्रकुष्ठभेदे । "अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं । तदेककुष्ठं चर्म्माख्यं बहुलं गजचर्म्मवत् ॥" भा. । (ख्या) स्त्री । सप्त-लायाम् । চামরঘাস । प.मु. ।

**चर्म्मानुरञ्जनम्** । क्ली । हिङ्गुले । वै.निघ. ।

**चर्म्माभः** । पुं । रसधातौ । रा.नि.व.१८ ।

**चर्म्मारकः** । पुं । शुक्रहिङ्गुले । वै.निघ. ।

**चर्म्माह्वयः** । पुं । पर्पटके । ক্ষেৎপাবড়া । वै.निघ. ।

**चर्म्मा(र्म्मस)ह्वा** । स्त्री । सप्तलायां । চামর-কষা । वा.सू.१५अ. । श्यामादिगणे । हेमा. । आम्रायां । वा.टी.अरुण. ।

**चर्म्मी** (र्म्मिन्) । पुं । भूर्जपत्रवृक्षे । अम. । भङ्ग-रीटौ । মোচা । प्र.र. । चर्म्मचटके । वै.निघ. ।

**चर्व्वणम्** । क्ली । अष्टविधान्नान्यतमे अन्ने । कु-र्य्यान्न । रा.नि.व.२० । भक्षणे । दन्तैर्भक्षणे । চি-বান । हे.च. ।

**चर्व्वितः** । त्रि । दन्तैः भक्षिते । अम. ।

**चर्षणिः** । पुं । मनुष्ये । वै.निघ. ।

**चलः** । पुं । शिलारसे । र.मा. । च.द.वा.व्या. महाराज.प्र.तैले । सुवर्णचम्पके । नखे । नखी । वै.निघ. । वायुरोगे । কাঁপা । मे. ।

**चलघ्नी** । स्त्री । सल्लक्यां । পিড়িং । वै.निघ. ।

**चलचञ्चुः** । पुं । चकोरपक्षिणि । हे.च. ।

**चलत्पूर्णिमा** । स्त्री । चन्द्रकमत्स्ये । চাঁদা মাছ । त्रिका. ।

**चलदङ्गः (कः)** । पुं । मत्स्यभेदे । চেঙ্গমাছ । गुणाः—"चलदङ्गोऽनभिष्यन्दी हितो वाते च रो-चनः ।" राज.३प. । [प्र । रा.नि.व.११ ।

**चलदलः (पत्रः)** । पुं । अश्वत्थवृक्षे । मद.व.

**चलद्रुमः** । पुं । गोक्षुरक्षुपे । वै.निघ. ।

**चलनम्** । क्ली । कम्पने । भ्रमणे । मे. । पुं । हरिणे । जटा. । पादे । हे.च. ।

**चलपुच्छः** । पुं । खञ्जरीटे । वै.निघ ।

**चला** । स्त्री । सिह्लके । শিলারস । र.मा. ।

**चलाचलः** । काके । रा.नि.व.१९ । त्रि । च-पले । अम. ।

**चलातङ्कः** । पुं । वातव्याधौ । रा.नि.व.२० ।

**चलापत्रः** । पुं । वरुणवृक्षे । বরুণ গাছ । रक्तकुलत्थे । লাল কুর্ত্তি । वै.निघ. ।

**चलुः** । पुं । गण्डूषे । हे.च. ।

**चलुकः** । पुं । प्रसृतिमाने । मे. । [र. ।

**चविः (वी)** । स्त्री । चविकायाम् । চই । प्र.

**चविकम्** । क्ली । चविकायाम् । भ.रुद्रः ।

**चविका** । स्त्री । चव्ये । চই । रा.नि.व.६ । गजपिप्पल्याम् । तन्मूले । वै.निघ. ।

**चविकाशिरः** । क्ली । पिप्पलीमूले । वै.निघ. ।

**चव्य(क)म्** । क्ली । (Piper chaba. Syn. Chavica officinarum.) स्वनामख्यातक-

द्रुलतायाम् । चई गाछ । तें तेवाम् । गुणाः—
उष्णं कटुकं लघु दीपनं रुच्यं श्वासकासशूलघ्नम् ।
रा.नि.व.६ । पिप्पलीमूलसदृशं गुदजरोगे हितं ।
भा.पू.१भ. । भेदकं कफघ्नञ्च । राज. । हस्तिपि-
प्पलीमूले । सु.सू.३८ऋ. । कार्पासे । गजपिप्पल्यां ।
गुञ्जायां । कूँच । वै.निघ. ।

**चव्यजा** । स्त्री । गजपिप्पल्याम् । रा.नि.व.६ ।

**चव्यफलम् (ली)** । क्ली, स्त्री । गजपिप्प-
ल्याम् । रा.नि.व.६ ।

**चव्या** । स्त्री । कार्पास्याम् । কাপাস । रा.नि.
व.४ । चव्ये । চই । रा.नि.व.६ । वचायां । मे. ।
पिप्पल्याम् । वै.निघ. ।

**चषकम्** । क्ली, पुं । सुराभेदे । मधुविशेषे । मे. ।
सुरापानपात्रे । हे.च. ।

**चषतिः** । पुं । जीर्णतायाम् । भक्षणे । उणा. ।

**चष्पणम्** । क्ली । अवदंशे । চাট् । हे.च. ।

**चक्षुः** । क्ली । नेत्रे । रा.नि.व.१८ । मेषशृङ्गी-
वृक्षे । र.मा. । [प.मु. ।

**चक्षुःपुष्पः** । पुं । पाठायाम् । আকনাদি ।

**चक्षुकः** । पुं । तिनिशवृक्षे । সাদন । प.मु. ।

**चक्षुर्धावनम्** । क्ली । नेत्रधावने । চক্ষু ধো-
ওয়া । [শিঙে, জিওল । र.मा. ।

**चक्षुर्बहुलः** । पुं, क्ली । मेषशृङ्गीवृक्षे । মেড়া-

**चक्षुष्यम्** । खर्परधातौ । খাপর । प.मु. । प्र-
पौण्डरीकविशेषे । পুণ্ডরিয়াবিশেষ । र.मा. ।
खर्परीतुत्थे । তুঁতে । स्थलपद्मे । सौवीराञ्जने ।
নীল শুর্ম্মা । रा.नि.व.१३ । निर्म्मलीवीजे । नि-
र्म्माल्य । पद्मे । वै.निघ. । पुं । शोभाञ्जनवृक्षे ।
সজিনা গাছ । रा.नि.व.७ । केतकवृक्षे । मे. ।
रसाञ्जने । हे.च. । त्रि । चक्षुर्हितकरे ।

**चक्षुष्या** । स्त्री । कुलत्थिकायाम् । কুলথ ক-
লায় । मे. । अरण्यकुलत्थिकायाम् । বন কুলথ ।
रा.नि.व.५ । अजशृङ्ग्यां, मेषशृङ्ग्याम् । মেড়া-
শিঙে । रा.नि.व.९ । नीलाञ्जने । क्षीरकमण्यौ ।
केतकवृक्षे । त्रिका. । कुलत्थाञ्जने । অঞ্জনবিশে-
ষ । रा.नि.व.१३ । [ণ । र.मा. ।

**चाकचिचा** । स्त्री । श्वेतवृक्षायां । শ্বেত বো-

**चाङ्गः** । पुं । चाङ्गेर्याम् । भटी.रा. ।

**चाङ्गेरी** । स्त्री । Wood sorrel, (Oxalis
monadelpha.) अम्ललोणिकायाम् । আমরুল
শাক । हिं चौपतिया । मं आंववती । कं पुलु-
ब्बुसिरे । शाकगुणाः—कटु रोचनं पाचनं रुक्षम्
अत्युष्णं दीपनं कफवातार्शोग्रहण्यतिसारघ्नम् ।
रा.नि.व.७ । च.सू.२७अ. । पित्तला अम्ला कुष्ठघ्नी
च । भा.पू.१भ.शाकव. । उष्णा कषाया मधुरा
अग्निदीपनी च । अत्रि.१६अ. । र.सा.सं.चाङ्गेरी-
घृते । भा.अतिसा.चि. । निम्बुकवृक्षे । भैष.क्षुद्ररो-
ग-चि. । पालङ्कशाके । পালংশাক ।

**चाङ्गेरीघृतम्** । क्ली । क्षुद्ररोगाधिकारे गुद-
भ्रंशे च । गव्यघृतं ४ श. चाङ्गेरीकुलत्थदध्नां रसः
प्र. १० प. ५ तो. ३ मा. । कल्कार्थे—शुण्ठीयव-
क्षारयोः प्र. ४ प. । ঘৃত ৪ শ. আমরুলের
রস, কুলত্থের রস এবং অম্ল দধি প্রত্যেকে
১০ প. ৫ তো. ৩ মা. । কল্কার্থ—শুঁঠ ও য-
বক্ষার প্রত্যেকে ৪ প. । सा.कौ. । च.चि.
द्वितीयो यथा—शुण्ठी पिप्पलीमूलं चित्रकमूलं
चविका गोक्षुरः पिप्पली धान्यकं विल्वमूलं पाठा-
मूलं यमानी एषां मिलित्वा १ श. घृतं ४ श.
अम्लदधिमस्तु १६ श. चाङ्गेरीरसः १६श. । च.द. ।

**चाङ्गेरीसदृशपत्रः** । पुं । सुनिषण्णकशाके ।
শুশুনি শাক । भा.पू.१भ.शाकव. ।

**चाटकैरः** । पुं । चटकशिशौ । वै.निघ. ।

**चाटुकर्त्ता** । पुं । पारावते । वै.निघ. ।

**चाणक्य(मूलक)म्** । क्ली । चणकमूलीति
ख्याते मूलकभेदे । মূলাবিশেষ । मं थोरमूला
कं दोड़मूलङ्गि । गुणाः—उष्णं कटुकं रुच्यं दी-
पनं गुरु ग्राहि कफवातक्रमिगुल्मघ्नं । रा.नि.व.७

**चाण्डाला (लिनी)** । स्त्री । लिङ्गिन्याम्
रा.नि.व.३ । र.सा.सं.रसमारकवर्गे ।

**चातकः** । पुं । तन्नामकपक्षिणि । ফটিকজল
পাখী । हिं तोका । तन्मांसं लघु शीतलं रक्तपि-
त्तकफघ्नम् अग्निकरञ्च । राज. । हृद्यं बलपुष्टिदञ्च
रा.नि.व.१६ ।

**चातुर्जातकम्** । क्ली । समभागलवंगलापत्रके-
शरेषु । গুড়ত্বক্, এলাচ, তেজপত্র, নাগেশ্ব

समभाग। गुणाः—"चातुर्जातमिदं वर्ण्यं वह्निकृ च विषापहम्।" रा.नि.व.२१।

**चातुर्थ(र्थि)कः।** पुं। चतुर्थदिनभवविषमज्वरभेदे। ४दिन अन्तर ज्वर। "चातुर्थिको दर्शयति प्रभावं द्विविधं ज्वरः। जङ्घाभ्यां श्लैष्मिकः पूर्व्वं शिरसोऽनिलसम्भवः॥" मा.नि.। "चातुर्थिको नाम गदो दारुणो विषमज्वरः। शोषणः सर्व्वधातूनां बलवर्णाग्निनाशनः। त्रिदोषजो विकारः स्यादस्थिमज्जगतोऽनिलः। कुपितं पित्तमेवन्तु कफश्चैवं स्वकालतः। शीतदाहकरस्तीव्रस्त्रिकालमनुवर्त्तते। स सन्निपातसम्भूतो विषमो विषमज्वरः। ऊर्द्ध्वं कायस्य गृह्णाति यः पूर्व्वं सोऽनिलात्मकः। पूर्व्वं गृह्णात्यधःकायं श्लेष्मपूर्व्वज्वरश्च सः॥" हारीत.।

**चातुर्भद्र(क)म्।** क्ली। कफाधिकपित्तश्लेष्मज्वरे योगभेदे। शुण्ठी अतिविषा मुस्ता गुडूची चेति चतुष्टये। "नागरातिविषा मुस्ता त्रयमेतत्त्रिकार्षिकं। गुडूच्या मिलितं तच्च चातुर्भद्रकमुच्यते॥" रा.नि.व.२२।

**चातुर्भद्रकपञ्चमूलम्।** क्ली। तत्पञ्चमूली-किरातादिगणकृते सान्निपातिकज्वरे योगविशेषे। सि.यो.।

**चातुर्भद्रावलेहिका।** स्त्री। कासश्वासहरे कफघ्नेऽवलेहभेदे। "कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह।" "घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतं। शिशोर्ज्वरातिसारघ्नम्।" च.द.।

**चान्द्रम्।** क्ली। रौप्ये। पुं। चन्द्रकान्तमणौ। हे.च.।

**चान्द्रकम्।** क्ली। शुण्ठ्याम्। रा.नि.व.६।

**चान्द्रा।** स्त्री। अतिविषायाम्। আতইচ। रा.नि.व.६। [नि.व.६।

**चान्द्राख्यम्।** क्ली। आर्द्रके। আদা। रा.

**चान्द्री।** स्त्री। सोमराज्याम्। সোমরাজ। श्वेतकण्टकार्य्याम्। रा.नि.व.४। [जटा।

**चाप(व)पटः।** पुं। पियालवृक्षे। পেয়াশাল।

**चामरः।** पुं। चमरीमृगे। गण्डस्थले। গাল। मे.। ग्रन्थिपर्णे। वै.निघ.। चमरीलोमव्यजने। तद्गुणाः—ओजस्करः मक्षिकादिवारकश्च। राज.।

**चामरपुष्पः (कः)।** पुं। गुवाकवृक्षे। आम्रवृक्षे। केतकवृक्षे। কেয়া গাছ। (कः) काशे। কেশে ঘাস। मे.।

**चामरा (री)।** स्त्री। चामरे। श.टी.भ.। (री इन्) पुं। अश्वे। त्रिका.।

**चामली।** स्त्री। अम्लमल्ले। प.मु.।

**चामीकरम्।** क्ली। सुवर्णे। रा.नि.व.१३। धुस्तूरे। श्म.। नागकेशरपुष्पे। प.मु.।

**चाम्पेयः।** पुं. क्ली। नागकेशरवृक्षे। নাগেশ্বর গাছ। रा.नि.व.६। चम्पकवृक्षे। চাঁপার গাছ। प.मु.। च.द.वा.व्या.चि.। पद्मकेशरे। भा.। सुवर्णचम्पके, नागचम्पके। নাগেশ্বর চাঁপা। वै.निघ.। क्ली। स्वर्णे। त्रिका.।

**चाम्पेयकम्।** क्ली। किञ्जल्के। পদ্মকেসর। रा.नि.व.१०।

**चारम्।** क्ली। कृत्रिमविषे। हे.च.।

**चारः (कः)।** पुं। पियालवृक्षे। अस्य बीजं 'चारदाना' इत्युच्यते। পেয়াশাল। ইহার বীজকে চারদানা, পেয়ালবীজ কহে। मं चारली। कं चारबीज। गुणाः—पक्वं फलं हृद्यं गौल्यं गुरु। तद्बीजं मधुरं हृद्यं पित्तदाहघ्नञ्च। रा.नि.व.११।

**चारटिका (टी)।** स्त्री। नीलीनामक्षुपे। নীল গাছ। रा.नि.व.४, पैशाचघृते। नलीनामगन्धद्रव्ये। रा.नि.व.१२। गुञ्जायाम्। वा.उ.३६ अ.। भा.उपदंश चि.। (टी) स्थलपद्मिन्याम्। স্থলপদ্ম। वा.उ.६अ., च.द.उन्मा.चि.महापैशाचघृते। भूम्यामलक्याम्। रा.नि.व.५।

**चारणी।** स्त्री। करवीरपुष्पवृक्षे। स्थलपद्मिन्यां। স্থলপদ্ম। वै.निघ.।

**चारवायुः।** पुं। शीतलसुरभिवाते। त्रिका.।

**चारवीजम्।** क्ली। पियालवीजे। পেয়ালবিচি। हिं चारदाना। रा.नि.व.११।

**चारिणी।** स्त्री। करुणीपुष्पवृक्षे। रा.नि.व.१०।

**चारिवा।** स्त्री। तिन्तिड़ीवृक्षे। श.र.।

**चारिलः।** पुं। शशघातिनि। শশারি। सु.सू.७अ.।

**चारिवाक्** । स्त्री । भजमोदायाम् । वै.निघ. ।

**चारी** । स्त्री । छिलमीचिकायाम् । छिक्के । भा.पू.१भ.शाकव. । [शालतरौ । वै.निघ. ।

**चारु** । क्ली । पद्मकाष्ठे । केशरे । कुङ्कुम । पुं ।

**चारुकः** । पुं । शरबीजे । गुणाः—"चारुको मधुरो रुच्यो रक्तपित्तकफापहः । शीतलो लघुर्वृष्यश्च कषायो वातकोपनः ॥" भा.पू.१भ.धान्यव. । क्ली । रक्तचन्दने । वै.निघ. ।

**चारुकेश(स)रा** । स्त्री । नागरमुस्तायाम् । तरणीपुष्पे । रा.नि.व.१० ।

**चारुकेशा** । स्त्री । वनमल्लिकायाम् । वै.निघ. ।

**चारुदर्शनः** । पुं । प्लक्षवृक्षे । पाकुड़ गाछ । मद.व.५ ।

**चारुदारुः** । पुं । प्लक्षवृक्षे । वै.निघ. ।

**चारुधाम** । क्ली । आम्रहरिद्रायां । वै.निघ. ।

**चारुनालकम्** । क्ली । रक्तपद्मे ।

**चारुपत्रिका (त्री) (र्णी)** । स्त्री । प्रसारिण्याम् । गन्धभादुलिया । रा.नि.व.५ । मद.व.१ ।

**चारुफला** । स्त्री । द्राक्षालतायां । रा.नि.व.११ ।

**चारुमोदा** । स्त्री । पीतयूथिकायां । वै.निघ. ।

**चारुयूथी** । स्त्री । शुक्लयूथिकायां । वै.निघ. ।

**चारुरवम्** । क्ली । खर्वे । वै.निघ. ।

**चारुलोचनः** । पुं । हरिणे । त्रिका. ।

**चारुवर्त्तिनी** । स्त्री । लाक्षायाम् । वै.निघ. ।

**चारुवृक्षः** । पुं । प्लक्षवृक्षे । मद.व.५ ।

**चारुशिला** । स्त्री । रत्ने । त्रिका. ।

**चालः** । पुं । स्वर्णचूड़पक्षिणि । वै.निघ. । दन्तचालरोगे । [स्थानान्तरनयने । सु.सू.७भ. ।

**चालनम्** । क्ली । पित्ते । वै.निघ. । स्थानात्

**चाषः (सः)** । पुं । तन्नामकपक्षिणि । फिङे । (पथ्यापथ्ये) । च. । स्वर्णचातके । सोणाचड़ा वा नीलकण्ठ पाखी । भ.टी.भ. । (सः) इक्षौ । मे. ।

**चाशुकः** । पुं । दितिसिद्धवृक्षे । प.सु. ।

**चिकः (क्कः)** । पुं । छुछुन्दर्याम् । छुँचो । त्रिका. । (क्कम्) क्ली । गुवाके । चिकि सुपारि । वै.निघ. । [चर्मरे । त्रिका. ।

**चिक(कु)रः** । पुं । केशे । रा.नि.व.१८ । ह-

**चिकित्सकः** । पुं । वैद्ये । रा.नि.व.२० । स द्विविधः—एकः प्राणाभिसरः रोगहन्ता, अन्यः रोगाभिसरः प्राणहन्ता च ।

**चिकित्सा** । स्त्री । रोगनिदानप्रतिकारे । "चिकित्सा तत्प्रतीकारः ।" रा.नि.व.२० । "या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते । याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः । सा चिकित्सा विकाराणां कर्म्म तद्भिषजां मतम् ॥" भा. । सा त्रिधा यथा—"आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता । शस्त्रैः कषायैर्लौहाद्यैः क्रमेणान्त्या सुपूजिता ॥" भैष. । सा च पुनरष्टधा—"क्वचिद्धर्म्मः क्वचिन्मैत्रं क्वचिदर्थः क्वचिद्यशः । कर्म्माभ्यासः क्वचिच्चापि चिकित्सा नास्ति निष्फला ।" वैद्यकसर्व्वस्वे १भ. । [शिषे ।

**चिकित्साकलिका** । स्त्री । वैद्यकसंग्रहवि-

**चिकित्साङ्गम्** । क्ली । चिकित्साया अङ्गसम्भके, रोगी दूतो भिषक् आयुः द्रव्यं सेवकः सदौषधश्चेति । भा. । [द्यापतिकृते ।

**चिकित्साञ्जनम्** । क्ली । वैद्यकग्रन्थभेदे वि-

**चिकित्सादीपकः** । पुं । धन्वन्तरिकृतचिकित्साग्रन्थे । [कित्सासंग्र…

**चिकित्सादीपिका** । स्त्री । वङ्गसेनकृतचि-

**चिकित्साप्राभृतः** । पुं । वैद्ये । च.सू.१६भ. । चिकित्सा प्राभृतमुपायनं यस्येति विग्रहः ।

**चिकित्सामृतम्** । क्ली । चिकित्सासंग्रहभेदे

**चिकित्सार्णवः** । पुं । सदानन्दशुक्लकृतचिकित्साशास्त्रे ।

**चिकित्सितम्** । क्ली । चिकित्सायां । र.सा.

**चिकित्स्यः** । त्रि । चिकित्सार्हे । চিকিৎসার যোগ্য । तल्लक्षणाः—"निजप्रकृतिवर्णाभ्यां युक्तः सत्वेन चक्षुषा । चिकित्स्यो भिषजां रोगी वैद्यभक्तो जितेन्द्रियः ॥" भा. ।

**चिकुलः** । पुं । दन्तीवृक्षे । वै.निघ. ।

**चिक्कणः (पूगः)** । पुं । पूगवृक्षे । सुपारि

गाछ। क्ली। पूगफले। रा.नि.व.११। चिक्कण्य-अनादौ। चिकण। अम.।

**चिक्कणा (णी)** । स्त्री। पूगफले। চিকি শু-পারি। रा.नि.व.११। श.र.। [वै.निघ.।

**चिक्कसः** । पुं। यवचूर्णे। हे.च.। यवपिष्टके।

**चिक्का** । स्त्री। पूगफले। रा.नि.व.११। See अक्षोटः।

**चिक्किणा** । स्त्री। पूगवृक्षे। वै.नि.घ.।

**चिक्किरः** । पुं। मूषिकविशेषे। तद्दष्टे—"चिक्किरेण शिरोदुःखं शोफो हिक्कावमी तथा।" सु.कल्प.६अ.।

**चिङ्गटः (ड़ः)** । पुं। मत्स्यभेदे। গোচাচিংড়ী, গল্লা চিংড়ী। गुणाः—"चिङ्गटस्तु गुरुर्ग्राही मधुरो बलवर्द्धनः। मेदःपित्तास्रजिद्‌धृष्यो रोचनः कफवातलः॥" राज.३प.। श.मा.।

**चिङ्गटी** । स्त्री। क्षुद्रचिङ्गटे। ঘুষচিংড়ী। गुणाः—मधुरा हृद्या वातघ्नी गुरुः श्लेष्मकरी च। राज.३प.।

**चिचण्डः (ण्डा) (ण्डिका)** । पुं, स्त्री। (Trichosanthes anguinae.) फलशाकविशेषे। চিচিঙ্গা, চিচিণ্ডা। गुणाः—वातपित्तघ्नः बल्यः पथ्यः रुचिप्रदः शोषे हितः गुणैः पटोलस्य ईषद्धीनश्च। भा.पू.१भ.शाकव.। शोषरोगे हितं पटोलाद्यूनगुणः। मद.।

**चिचिः** । पुं। चित्रकवृक्षे। गुणाः—दीपनः पाचनः आमपाचनश्च। शार्ङ्ग.।

**चिचिटिङ्गः** । पुं। वायव्यकीटविशेषे। सु.कल्प.८अ.। See कीटः।

**चिञ्चा (ञ्चिका)** । स्त्री। (Tamarindus Indica.) Tamarind tree. तिन्तिड़ीवृक्षे। তেঁতুল গাছ। रा.नि.व.११। मद.व.६। नाड़ीचवल्पत्रशाके, चुच्चुशाके। চেঁচড়া। वै.निघ.।

**चिञ्चातैलम्** । क्ली। तिन्तिड़ीबीजभवतैले। কাঁইবীজের তেল। गुणाः—कटुपाकं तीक्ष्णं वातकफघ्नं वर्ण्यं नातिशीतलं कषायञ्च। रा.नि.व.१५।

**चिञ्चाम्लम्** । क्ली। (Rumex vesicatorius.) अम्लशाके। চুকা শাক। चिञ्चासारे। তেঁতুলের অম্বল। रा.नि.व.११।

**चिञ्चासारः** । पुं। (Rumex vesicatorius.) अम्लशाके। চুকা শাক। अम्लसारे। তেঁতুলের সার, শরবৎ বা অম্বল। गुणाः—अत्यम्लः वातघ्नः कफदाहघ्नः। शर्करामिश्रः स पित्तदाहकफघ्नश्च। रा.नि.व.११। [२७अ.।

**चिञ्चितिका** । स्त्री। तिन्तिड़ीवृक्षे। च.सू.

**चिञ्ची** । स्त्री। गुञ्जायाम्। কুঁচ। [निघ.।

**चिञ्चुका** । स्त्री। चिञ्चोटके। চেঁচকো। वै.

**चिञ्चोट(कः)** पुं। (Marsilea dentata.) चुच्चुक्षुपे, सुनाकृतिलघुकसेरी मूलशाकविशेषे। চেঁচড়া। गुणैः कसेरुतुल्यः। भा.पू.१भ.शाकव.। गुणाः—गुरुत्वम् अजीर्णकारत्वं शीतलत्वञ्च। राज.३प.। See चुचुः।

**चिटिका** । स्त्री। आरामशीतलायां। वै.निघ.।

**चिड़ा** । स्त्री। स्वनामकदेवदारौ। वै.निघ.।

**चित्तम्** । क्ली। मनसि। रा.नि.व.१८।

**चित्तभ्रमसन्निपातः** । पुं। स्वनामख्यातसन्निपातज्वरविशेषे। यथा—"गायति नृत्यति हसति प्रलपति विकृतं निरीक्षते मुह्येत्। दाहव्यथाभयार्त्तो नरस्तु चित्तविभ्रमे ज्वरे भवति॥" भा.म.१भ.। [च.। अम.।

**चित्तविप्लवः (भ्रमः)** । पुं। उन्मादे। हे.

**चित्रः** । पुं। एरण्डवृक्षे। ভেরেণ্ডা গাছ। प.मु। सा.कौ.सिंहनादगुग्गुले। अशोकवृक्षे। रा.नि.व.१०। श्वेतैरण्डे। रा.नि.व.८। तरम्बुजे। তরমুজ। लावपक्षिणि। वै.निघ.। चित्रकवृक्षे। रा.नि.व.६। वृश्चिकविशेषे। सु.कल्प.८अ.। See वृश्चिकः।

**चित्र(क)म्** । क्ली। चित्रके। तिलके। मे.।

**चित्रकः** । पुं। (Plumbago Zeylanica.) स्वनामख्यातक्षुपे। চিতে গাছ। हिं चिता। मं चित्रक। तें चित्रमूलमु। उत्. रक्तचिता, धुवचिता। स द्विधा पुष्पादिवर्णभेदेन। तयोः रक्तएव प्रशस्तः। वाभटस्तु त्रिविधं चित्रकमाह श्वेतपीतकृष्णभेदेन। "यथाक्तं चित्रकः कृष्णः

श्वेत: पीतसितासितै: । यथोत्तरं स गुणवान् बोधनाय रसायनम् ॥” वा.उ.३९अ. । गुणा:— कासग्रहणीकफशोषघ्न: कटु: उष्ण: कुष्ठशोथार्श:-क्रमिघ्न: वातश्लेष्महर: श्लेष्मपित्तघ्न: पाके कटुक: अग्निकर: पाचन: लघुश्च । भा.पू.१भ. । एरण्डवृक्षे । है.च. । श्वेतैरण्डे । अम. । तित्तिरपक्षिणि । তিতির পাখী । मुचुकुन्दवृक्षे । মুচকুন্দ । वै.निघ. । चित्रवर्णोपव्याघ्रे । চিতিবাঘ । मण्डलिसर्पविशेषे । सु.कल्प.४अ. । See सर्प: । शूरणे । शूरणमोदके ।

**चित्रकजीवी** । पुं । जीवके । वै.निघ. ।

**चित्रकण्टक:** । पुं । गोक्षुरके । वै निघ. ।

**चित्रकण्ठ:** । पुं । पारावते । जटा. । सारसपक्षिणि । वै.निघ. ।

**चित्रकन्धर:** । पुं । पक्षिविशेषे । वै.निघ. ।

**चित्रकर्म्मा** । पुं । तिनिशवृक्षे । श.च. ।

**चित्रकाण्डाली** । स्त्री । गोनसवल्ल्याम् । वै.निघ. ।

**चित्रकाद्यलौहम्** । क्ली । शोथाधिकारे । चित्रकमूलशुण्ठीवासाशालपर्णीसैन्धवगुडूचीतालपुष्पाणां प्र. ६ तो. जारितलौहं यवक्षार: सौवर्चललवणं पिप्पली विट् एषां प्र. चूर्णं ४ तो. गोमूत्रं २ श. एकत्र पचेत् । प्रक्षेप: मधु २ प. । मा. १ तो. । सा.कौ. । [रा.नि.व.१९ ।

**चित्रकाय:** । पुं । चित्रकव्याघ्रे । চিতিবাগ ।

**चित्रकूला** । स्त्री । क्षुद्रदन्तीवृक्षे । वै.निघ. ।

**चित्रकृत्** । पुं । तिनिशवृक्षे । अम. ।

**चित्रकोल:** । पुं । आञ्जनेये । আঞ্জনী । त्रिका. ।

**चित्रगन्धम्** । क्ली । हरिताले । रा.नि.व.१३ ।

**चित्रगन्धा** । स्त्री । शुकनासायाम् । গাঁদাল । वै.निघ. ।

**चित्रगुड़िका** । स्त्री । वातग्रहण्याम् । “चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च । व्योषं हिङ्गजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् । गुड़िका मातुलुङ्गस्य दाड़िमस्य रसेन वा ॥” च.द. । भा. ।

**चित्रग्रीव:** । पुं । सारसपक्षिणि । वै.निघ. ।

**चित्रघटम्** । क्ली । वक्रे । वै.निघ. ।

**चित्रतण्डुलम्** । क्ली । विड़ङ्गे । प.मु. ।

**चित्रतण्डुला** । स्त्री । विड़ङ्गक्षुपे । रा.नि.व.६ ।

**चित्रतनु:** । पुं । लावपक्षिणि । वै.निघ. ।

**चित्रत्वक्** । पुं । भूर्जवृक्षे । रा.नि.व.९ ।

**चित्रदण्डक:** । पुं । शूरणक्षुपे । ওল গাছ । र.मा.सं. । वनशूरणे । कार्पासवृक्षे । वै.निघ. ।

**चित्रदेवी** । स्त्री । महेन्द्रवारुणीलतायाम् । বড় মাকাল । रा.नि.व.३ ।

**चित्रदेह:** । पुं । लावपक्षिणि । वै.निघ. ।

**चित्रनेत्रा** । स्त्री । सारिकायाम् । শালিক পাখী । हारा. ।

**चित्रपत्र:** । पुं । भूर्जवृक्षे । वै.निघ. ।

**चित्रपत्रक:** । पुं । मयूरे । वै.निघ. ।

**चित्रपत्रिका** । स्त्री । द्रोणपुष्प्याम् । घलघसा । रा.नि.व.५ । पृश्निपर्ण्याम् । চাকুলিয়া । वै.निघ. । कपित्थपर्णीवृक्षे । र.मा. ।

**चित्रपत्री** । स्त्री । महाराष्ट्रीनामक्षुपे, जलपिप्पल्याम् । কাঁচড়া । रा.नि.व.४ । पृश्निपर्ण्याम् । वै.निघ. ।

**चित्रपदा** । स्त्री । गोधापदीलतायां । श.मा. ।

**चित्रपर्णिका (र्णी)** । स्त्री । पृश्निपर्ण्याम् চাকুলিয়া । जलपिप्पल्याम् । र.मा. । रा.नि.व. ४ । कर्णस्फोटालतायां । কাণফোড়া । रा.नि. व.३ । मञ्जिष्ठायाम् । प.मु. ।

**चित्रपक्ष:** । पुं । वनकुक्कुटे । तित्तिरपक्षिणि তিতির পাখী । त्रिका. । जटा. ।

**चित्रपाठी (ली)** । पुं । चित्रके । वै.निघ. ।

**चित्रपादा** । स्त्री । शारिकायाम् । हारा. ।

**चित्रपिच्छ: (क:)** । पुं । मयूरे । त्रिका. च.चि.२७अ. ।

**चित्रपुङ्ख:** । पुं । शरे । त्रिका. ।

**चित्रपुष्पी** । स्त्री । अम्बष्ठायाम् । रा.नि.व.४ पुं । आम्रातकवृक्षे । वै.निघ. ।

**चित्रपृष्ठ:** । पुं । चटकपक्षिणि । हारा. ।

**चित्रप्रिया** । स्त्री । हरिताले । वै.निघ. ।

**चित्रफलः (कः)** । पुं । तरक्षुजवृक्षे । चित्रका । (Mystus chitala.) चित्तलमत्स्ये । চিতল মাছ । गुणाः —गुरुः स्वादुः स्निग्धः हृद्यः बल्यश्च । राज.४प. ।

**चित्रफला** । स्त्री । महेन्द्रवारुण्याम् । बड़ মাকাল । लिङ्गिन्याम् । हिं पञ्चगुडिया । रा.नि.व.३। चिर्भिटायाम् । कण्टकार्य्याम् । भा.४भ.पूलमायह चि.। वार्त्ताकौ । रा.नि.व.४ । पटोले । मत्स्यभेदे । फलুই মাছ । श.र. । [अर्कवृक्षे । श.र. ।

**चित्रभानुः** । पुं । चित्रकवृक्षे । भल्लातकवृक्षे ।

**चित्रभेषजम् (जा)** । क्ली, स्त्री । काकोदुम्बरिकायाम् । रा.नि.व.११ । मद.व.५ ।

**चित्रमण्डलः** । पुं । मण्डलिसर्पविशेषे । सु.कल्प.४अ. । See मण्डली ।

**चित्रमृगः** । पुं । चित्रवर्णमृगे । च. ।

**चित्रमेखलः** । पुं । मयूरे । चिका. ।

**चित्रयोधी (इन्)** पुं । अर्ज्जुनवृक्षे । रा.नि.व.६ । लावपक्षिणि । वै.निघ. ।

**चित्ररञ्जकम्** । क्ली । वङ्गे । वै.निघ. ।

**चित्रलता** । स्त्री । मञ्जिष्ठायां । रा.नि.व.६ ।

**चित्रला** । स्त्री । गोरक्ष्याम् । रा.नि.व५ । राजिकायाम् । রাই । वै.निघ. ।

**चित्रलेखिनी** । स्त्री । तूलिकायाम् । हारा. ।

**चित्रलोचना** । स्त्री । शारिकापक्षिणि । जटा. ।

**चित्रवदालः** । पुं । मत्स्यभेदे । চিতল মাছ । जटा. ।

**चित्रवर्त्तिनी** । स्त्री । रेणुकवीजे । वै.निघ. ।

**चित्रवल्लिकम्** । क्ली । तरक्षुजफले । তরমুজ । पुं । वदालमत्स्ये । हे.च. ।

**चित्रवल्ली** । स्त्री । महेन्द्रवारुणीलतायाम् । বড় মাকাল । रा.नि.व.३ ।

**चित्रवीजः** । पुं । रक्तैरण्डे । (जा) स्त्री । विडङ्गे । रा.नि.व.८ ।

**चित्रवीर्य्यः** । पुं । रक्तैरण्डे । रा.नि.व.८ ।

**चित्रव्याघ्रः** । पुं । चित्रकव्याघ्रे । रा.नि.व.१६ ।

**चित्रशीर्षः** । पुं । वायव्यकीटविशेषे । सु.कल्प.८अ. । See कीटः ।

**चित्रशोकः** । पुं । अशोकवृक्षे । वै.निघ. ।

**चित्रसर्पः** । मालुधानसर्पे । श.र. ।

**चित्रसारा** । स्त्री । हरिताले । वै.निघ. ।

**चित्रस्तुपः** । पुं । द्रोणपुष्प्याम् । ঘলঘসিয়া । रा.नि.व.५ ।

**चित्रांशुः** । पुं । गुग्गुलौ । ज.द.१२अ. ।

**चित्रा** । स्त्री । इन्द्रवारुण्याम् । রাখালশশা । दन्त्याम् । दन्तीमूले । च.द.अपस्मा.चि. । च.सू.४अ । विडङ्गायाम् । বিড়ঙ্গ । मञ्जिष्ठायाम् । गोडुम्बायाम् । রাজ গোমক । प.मु. । हृद्दन्त्याम् । भा. । आखुकर्णीलतायाम् । মূষাকাণী । रा.नि.व.३ । वा.सू.१५अ. । सुतश्रेण्याम् । रा.नि.व.४ । द्रवन्त्याम् । रा.नि.व.५ । गण्डदूर्व्वायाम् । रा.नि.व.८ । [नि.व.१३ ।

**चित्राङ्गम्** । क्ली । हरिताले । हिङ्गुले । रा.

**चित्राङ्गः** । पुं । चित्रकवृक्षे । रक्तचित्रके । रा.नि.व.६। सर्पविशेषे । চিতিসাপ । रा.नि.व.१९। हरिणविशेषे । गुणाः—"चित्राङ्गो वातशमनो बृंहणो बलकृन्मतः । श्लेष्मलः कथितो वापि दुर्जरो मेदवर्द्धनः ॥" अत्रि.२० । वृश्चिके । বিছা । वै.निघ. ।

**चित्राङ्गा (ङ्गी)** । स्त्री । मञ्जिष्ठायाम् । रा.नि.व.६ । राजसुषव्याम् । গঙ্গা করলা । प.मु. । कर्णजलौकायाम् । रा.नि.व.१९ ।

**चित्रान्नम्** । क्ली । खेचरान्ने । वै.निघ. ।

**चित्रापूपः** । पुं । अपूपविशेषे । চিতাই পিঠা । चिका. ।

**चित्राम्बररसः** । पुं । ग्रहण्यधिकारे । पारदः १भ. ताम्रं १भ. गन्धकः १भ. दिनं मर्द्दयेत् । अथ छताभ्यक्ते लौहपात्रे मृदग्निना प्रहरं पचेत् लौहदण्डेन चालयेच । अवतार्य्य जीरकक्वाथेन दिनत्रयं भावयेच । मात्रा १ माषा ।

**चित्रायसम्** । क्ली । तीक्ष्णलौहे । रा.नि.व.१३ ।

**चित्राली** । स्त्री । तिलकुसुमे । [चिका. ।

**चित्राक्षी** । स्त्री । शारिकायां । শালিকপাখী ।

**चित्रिकः** । पुं । चैत्रमासि । श.र. ।

**चित्रौदनम्** । क्ली । विचित्रान्ने । খেচরান্ন ।

**चिन्तामणिचतुर्मुखः** । पुं । वातव्याधौ रसः । रससिन्दूरं २ तो. लौहं १ तो. अभ्रं १ तो. स्वर्णं ॥० तो. घृतकुमारीरसेन सम्मर्द्य एरण्डपत्रैरावेष्ट्य धान्यमध्ये ३ दिनं स्थापयेत् । भैष. ।

**चिन्तामणिरसः** । पुं । जीर्णज्वरे रसः । हरितालं शुक्तिचूर्णं (वा ताम्रचूर्णं) तुल्यकं समभागं जलेन पिष्टा चक्रिका कार्य्या । अथ शरावसंपुटे गजपुटेन रात्रौ पचेत् । र.सा.सं. । [कोषः ।

**चिन्तिड़ा (ड़ी)** । स्त्री । तिन्तिड़्यां । हि.

**चिनः** । पुं । चीनधान्ये । চীনা ধান । श.च. ।

**चिपिटः** । पुं । चक्षुस नेत्ररोगविशेषे । চক্ষের পিচুটী রোগ । अ.द.३०अ. । चिपीटके । চিঁড়া । हे.च. ।

**चिपिटकः** । पुं । पृथुके । চিড়ে । हिं चूड़ा भिका. । गुणाः—गुरुः स्निग्धः हृद्यः कफवर्द्धनश्च । राज. । See पृथुकः ।

**चिपिटा** । स्त्री । गुण्ठासिनीवृक्षे । रा.नि.व. ८ । वनकुलत्थे । वै.निघ. ।

**चिपुटः** । पुं । चिपिटके । रुद्रकोषः ।

**चिप्पटम्** । क्ली । वस्त्रे । वै.निघ. ।

**चिप्यः** । पुं । नखमांसाश्रितक्षुद्ररोगे । আঙুল হাড়া । बेढ़वा इति भा.म.४भ. । चिप्यलक्षणं —“नखमांसमधिष्ठाय वातः पित्तञ्च देहिनाम् । करोति दाहपाकौ च तं व्याधिं चिप्यमादिशेत्॥” सु.नि.१३अ. ।

**चिमः** । पुं । पट्टशाके । পাটশাক । श मा. ।

**चिमिः (कः)** । पुं । तिमिमत्स्ये । पट्टशाके । श.मा. । शुकपक्षिणि । श.र. ।

**चिमिचिमिः** । स्त्री । वातजपीडायाम् । झिनझिनीति लोके ।

**चिरम्** । क्ली । स्वर्णे । वै.निघ. । [जटा. ।

**चिरजीवकः** । पुं । असनवृक्षे । जीवकवृक्षे ।

**चिरजीविनी** । स्त्री । शाल्मलीवृक्षे । वै.निघ. ।

**चिरजी(जी)वी** । पुं । जीवके । रा.नि.व. ५ । शाल्मलीवृक्षे । रा.नि.व.८ । काके । मे. । हे.च. । सञ्ज्ञायाम् । পিড়িং ।

**चिरज्वरः** । पुं । दीर्घकालानुबन्धिज्वरे । वा. चि.१अ. । वङ्गः । [नि.व.१८ ।

**चिरटी** । स्त्री । प्रागवरजस्कायां स्त्रियि । रा.

**चिरतिक्तः** । पुं । किरातातिक्तके । চিরেতা । श.र. । (क्ता) स्त्री । तिक्तकर्कटिकायाम् । তিৎ-কাঁকড়ী । वै.निघ. ।

**चिरन्तनम्** । क्ली । पुष्करमूले । वै.निघ. ।

**चिरपत्रकः** । पुं । क्षुद्रसर्ज्जवृक्षे, लघुशालवृक्षे । वै.निघ. । [जाम । वै.निघ. ।

**चिरपत्रा (त्री)** । स्त्री । भूमिजम्बूवृक्षे । वन

**चिरपत्रिका** । स्त्री । चुचुशाके । वै.निघ. ।

**चिरपर्णः** । पुं । सर्जवृक्षे । শাল গাছ । वै. निघ. । [त्रि । चिरकालिन पक्के रोगे ।

**चिरपाकी** । पुं । कपित्थवृक्षे । रा.नि.व.११ ।

**चिरपुष्पः** । पुं । वकुलवृक्षे । रा.नि.व.१० ।

**चिरपोटा** । स्त्री । वास्तूकभेदे । বেতুয়াবিশেষ । वै.निघ. ।

**चिरमेही** । पुं । गर्दभे । त्रिका. । हे.च. ।

**चिरञ्जयः** । पुं । चिल्लपक्षिणि । চিল পাখী । त्रिका. ।

**चिरबिल्वः (कः)** । पुं । करञ्जवृक्षे । ডহর করঞ্জ । रा.नि.व.९ । च.सू.४अ. । सु चि.२अ. ।

**चिरा** । स्त्री । स्वनामख्यातगन्धद्रव्ये । চিড়া দেবদারু । जलौकायाम् । জোঁক । वै निघ. ।

**चिराटिका** । स्त्री । श्वेतपुनर्नवायाम् । শ্বেত পুণ্য । रा.नि.व.५ । लोहचटकायाम् । भैष.शूलचि.विद्याधराभ्रे । चटिकायाम् । পাতাড়ী । वैद्यकसंग्रहः ।

**चिरातच्छदा** । स्त्री । कदलीवृक्षे । वै.निघ. ।

**चिरातिक्तः** । पुं । चिरतिक्तके । চিরাতা । श.र. । [वै.निघ. ।

**चिरायुः** । पुं । तालवृक्षे । रा.नि.व.९ । काके ।

**चिरिः** । पुं । चिल्लपक्षिणि । চিল পাখী । वै.निघ. । शुकपक्षिणि । টিয়া পাখী । त्रिका. ।

**चिरिटी** । स्त्री । मधुदपक्षिविशेषे । च.सू.२७अ.।

**चिरिण्टी** । स्त्री । शङ्खपुष्प्याम् । रा.नि.व.३ । युवत्यां । मे. ।

**चिरिपत्रः** । पुं । क्षुद्रकारवेल्ले । वै.निघ. ।

**चिरिल्लः** । पुं । महामत्स्यभेदे । वै.निघ. ।

**चिरिविल्वः** । पुं । करञ्जवृक्षे । डहर करञ्ज । च.टी.भ. ।

**चिरु** । क्ली । बाहुसन्धौ । श.च. ।

**चिर्भटी** । स्त्री । राजसुषव्याम् । गन्ना करला । प.सु. । फलशाकविशेषे । काँकुड़, गोमुक, फूटी । हिं सुकर । मं वेलवेंधाकं भरमेके । गुणाः —बाल्ये तिक्ता ईषदम्ला च, पाके दीपनी । शुष्का रुचा श्लेष्मवातारुचिघ्नी जाड्यघ्नी रोचनी दीपनी च । रा.नि.व.७ । "चिर्भिटं मधुरं रुच्यं गुरु पित्तकफापहम् । अनुष्णं ग्राहि विष्टम्भि पक्वन्तूष्णञ्च पित्तलम् ॥" भा.पू.१भ.आम्रव. । पुष्पञ्च चिर्भटञ्चैव दोषत्रयकरं स्मृतं । अपक्वं शीर्षकफकृत् पक्वं किञ्चिद्विशिष्यते ॥" अत्रि.१६अ. ।

**चिर्भिटः** । पुं क्ली । चिर्भटिकायाम् । फूटी । रा.नि.व.७ ।

**चिर्भिटा (टिका) (टी)** । स्त्री । चिर्भट्याम्, कर्कटिकायाम् । फूटी, काँकुड़ । रा.नि.व.७।

**चिलमीलिका** । स्त्री । खद्योते । मे. ।

**चिलि(ली)चि(ची)मः (मिः)** पुं । मत्स्यभेदे । नना चेला, वेले गुड़ गुड़ि माछ । स लघुः रुचः अनभिष्यन्दी वातकरः कफघ्नश्च । चेङ्गमीने । च्याং माछ । गुणाः —लघुः रुचः अनभिष्यन्दी वातवर्द्धकः कफघ्नश्च । राज.१प. । च.टी.भ. । इच्चाके । एँचला माछ । भ. ।

**चिलिमीलकः (लिका)** । पुं. स्त्री । चिलिचिममत्स्ये । च.टी.भ. । [वै.निघ. ।

**चिलिम्बः** । पुं । मत्स्यवृक्षे । पाकुड़ गाछ ।

**चिल्लः** । पुं । तन्नामकपक्षिणि । चिल पाखी । अयं प्रसहजातीयः काकसमगुणः । सु.सू.४६अ. । चन्दनवृक्षे । वै.निघ. । क्लिन्ननेत्ररोगे । अम. ।

**चिल्लका** । स्त्री । झिल्लिकायाम् । श.च. ।

**चिल्लभक्ष्या** । स्त्री । नखीनामकद्रव्ये । श.र. ।

**चिल्लिः (ल्लि(ल्ली)का) (ल्ली)** । स्त्री । स्वनामख्यातपत्रशाके, लघुपत्रगौरवास्तूके । शाक वेतो शाक । हिं चिलारी । सा त्रिधा श्वेतरक्तग्रन्थकभेदेन । श्वेतचिल्लीगुणाः—मधुरा क्षारा शीतला त्रिदोषघ्नी पथ्या ज्वरघ्नी च । इयं भागीरथीतीरे स्याता । रक्तचिल्लीगुणाः—वास्तूकतुल्या सलवणा श्लेष्मपित्तघ्नी प्रमेहमूत्रकृच्छ्रघ्नी पथ्या रुचिरा च । ग्रन्थकचिल्लीगुणाः—कटुः तीक्ष्णा कण्डूघ्नी व्रणघ्नी च । रा.नि.व.७ लघुपत्री तु चिल्ली या सा वास्तूकसमा मता । च.द. । "तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम् ।" अत्रि.१६अ. । लोध्रवृक्षे । चिल्लपक्षिणि । गोदा चिल, शङ्ख चिल । वै.निघ. । झिल्लिकायाम् । श.र. । भुवि । रा.नि.व.१८ ।

**चिविः (वुः)** । पुं । चिबुके । जटा. । भ. ।

**चिविटः** । पुं । चिपिटे । च.टी. ।

**चिविल्लिका** । स्त्री । शाकपत्रविशेषे । मं कं चिविलि । किरुगोलि । गुणाः—कटुः कषाया ज्वरे अतिसारे च हिता रसायनी च । रा.नि.व.५।

**चिवुकः** । पुं । मुचुकुन्दवृक्षे । रा.नि.व.१० । क्ली । ओष्ठाधरभागे । थूँति । रा.नि.व.१८ ।

**चिह्नम्** । क्ली । रूपे, लक्षणे । च.टी.भ. । "स्वर्णं चिह्नमाकृतिः ।" मा.नि. ।

**चिह्नधारिणी** । स्त्री । श्यामालतायां । श.च.।

**चिह्नः (कः)** । पुं । वृक्षविशेषे । चिह्ला । हिं चिलह । गुणाः—"चिह्नको वातनिर्हारः श्लेष्मघ्नो धातुपुष्टिकृत् । आग्नेयो विषवदस्य फलं भस्मनिसूदनम् ॥" भा. ।

**चीड़ा** । स्त्री । स्वनामख्यातदेवदारुविशेषे । सा पश्चाद्देशीया अतिसुगन्धिः । चीड़ा देवदारु, गन्धद्रव्यविशेष । गुणः—कटूष्णा कासघ्नी दीपनी, अतिसेविता पित्तभ्रमहरा । रा.नि.व.१२ ।

**चीड़ागन्धः** । पुं । श्रीवेष्टनामकगन्धद्रव्ये । रा.नि.व.१२ ।

**चीनम्** । क्ली । अंशुके । पुं । लौहविशेषे । तीक्ष्ण लोह । हरिणभेदे । मे. । षष्टिकाद्वीनगुणे

शालिधान्यविशेषे। চীনাধান্য। च.सू.२७अ.। अपाङ्गव्रणबन्धनभेदे। सु.सू.१८अ.।

**चीनकः** । पुं। काककङ्गी। কাংণী ধানবিশেষ। गुणा:—शोषणं वायुवर्द्धनं पित्तश्लेष्मघ्नं कषायञ्च। रा.नि.व.१६। कङ्गुसमगुणः। भा.। धूनके। चीनकर्पूरे। চীনের কর্পূর। रा.नि.व.१२

**चीनकर्कटिका (टी)** । स्त्री। कर्कटीविशेषे। চীনা কাঁকুড়। वै.निघ.।

**चीनकर्पूरः** । पुं। स्वनामख्यातकर्पूरे। চীনের কর্পূর। गुणा:—तिक्तः कफचयकुष्ठकण्डूवमिहरः कटुतिक्तः ईषच्छीतः पाचनश्च। रा.नि.व.१२।

**चीनजम्** । क्ली। तीक्ष्णलौहे। रा.नि.व.१३।

**चीनपिष्टम्** । क्ली। सीसके। रा.नि.व.१३। सिन्दूरे। हे.च.।

**चीनबन्धः** । पुं। अपाङ्गव्रणबन्धनविशेषे। চীরা কাছা। बहुभिश्चीराभिर्हती ग्रन्थिबन्धनरहितश्चीराभिरेव वेष्टिताभिर्बन्धनयुक्तश्चीनबन्धः। ड.। "चीनबन्धं विजानीयात् चीराभिर्बहुभिर्हतं" इति लक्षणम्। [व.१३।

**चीनवङ्गम्** । क्ली। शीषके। সিসা। रा.नि

**चीना (कः)** । स्त्री, पुं। चीनकर्कट्याम्। सर्ज्जरसे। धूना। वै.निघ.।

**चीनाकर्कटी** । स्त्री। चित्रकूटदेशप्रसिद्धस्वनामख्यातकर्कटिकायाम्। চীনা কাঁকুড়। गुणा:—रुच्यं शीतलं पित्तदाहशोषघ्नं मधुरं रुमिदं ह्यञ्च। रा.नि.व.७। [शिम्ब्यां। भैष.वाजी.।

**चीनीचोपः** । पुं। तोपचीनी इति ख्याते व-

**चीरम्** । क्ली। वल्कले। গাছের ছাল। जीर्णवस्त्रखण्डे। (सुभूतिः) सीसके। हे.च.। गोस्तने। मे.। [चुचुशाके। रा.नि.व.७।

**चीरपत्रा (त्रिका)** । स्त्री। चिल्लीशाके।

**चीरपर्णः** । पुं। सर्ज्जवृक्षे। শাল গাছ। रा.नि.व.६।

**चीरिः** । स्त्री। नेत्रांशुके। श.र.।

**चीरिका (री)** । स्त्री। झिल्ल्याम्। हे.च.।

**चीरितच्छदा (पत्रिका)** । स्त्री। पालक्यशाके। পালং শাক। भा.।

**चीरुकम्** । क्ली। चेँउर इति ख्याते फले। गुणा:—रुचिकरं दाहकरं कफकरं पित्तकरं श्रमघ्नञ्च। राज.१प.।

**चीर्णपर्णः** । पुं। निम्बवृक्षे। खर्जूरवृक्षे। मे.।

**चीलिका** । स्त्री। चीरिकायाम्। श.र.।

**चील्लका** । स्त्री। झिल्ल्यां। श.र.।

**चील्लिका** । स्त्री। चिल्लीशाके। वै.निघ.।

**चीवरम्** । क्ली। शाकविशेषे। उणा.।

**चुक्रम्** । क्ली। Distilled vinegar. अम्लकाञ्जिकविशेषे। সির্কা। "विनष्टमम्लं मद्यं वा मधुरद्रवः पुनः संहितश्चुक्रम्।" शार्ङ्ग.। गुणा:—तिक्ताम्लं स्वादु कफपित्तघ्नं नासारोगशिरोरोगदुर्गन्धघ्नञ्च। रा.नि.व.१५। सन्धानविशेषे। मधुशुक्त। "यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम्। धान्यराशिस्थं सुक्तं चुक्रं तदुच्यते॥" प.प्र.२ख.। "गुडमाक्षिकधान्याम्लमस्तुभिर्द्विगुणं क्रमात्। संश्लिष्ट चुक्रसिद्धार्थं किञ्चिन्निमधुकान्वितम्॥" तोड़.। वृक्षाम्ले, महार्द्रके। মহা আদা। रा.नि.व.६। अटा.। चुक्रवास्तूकनामपत्रशाके। চুকা বেতো। मं चुकावड़िलि। आंववती, चुलिकक्कीत इति कर्णाटादौ ख्यातम्। गुणा:—अम्लपत्रं लघु उष्णं वातगुल्मघ्नं रुच्यं दीपनं पथ्यम् ईषत्पित्तकरञ्च। रा.नि.व.७। अम्लवेतसे। भा.

**चुक्रः** । पुं। अम्लरसे। अम्लपालङ्के। টক পালং। प.मु.। अम्लवेतसे। मद.व.६।

**चुक्रकम्** । क्ली। चुक्रे। চুকা পালং। प.मु.। गुणा:—दुर्जरं भेदि वातघ्नं पित्तकरं गुरु च। राज.३प.। पुं। अम्लवेतसे। वै.निघ.।

**चुक्रकेतुः** । पुं। अम्लवेतसे। वै.निघ.। [६।

**चुक्रचण्डिका** । स्त्री। तिन्तिड़ीवृक्षे। मद.व

**चुक्रफलम्** । क्ली। वृक्षाम्ले। আমড়া। रा.नि.व.६। [পালঙ। भा.

**चुक्रवास्तूकम्** । क्ली। महाम्लवास्तूके। চুক

**चुक्रवेतसः** । पुं। अम्लवेतसे। वै.निघ.।

**चुक्रवेधकम्** । क्ली। काञ्जीविशेषे। সির্কা। रा.नि.व.१०। [वै.निघ.

**चुक्रशाकः** । पुं। चुक्रपालङ्के। চুকা পালং

**चुक्रा (क्री)**। स्त्री। Indian sorrel. (Rumex vesicarius.) चाङ्गेर्य्याम्। আমরুল। रा.नि.व.५। अम्लपालङ्के। চুকা পালঙ। हिं चुका। गुणाः—"चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत्। रुच्या लघुतरा पाके हृल्लाके नातिरोचनी॥" भा.पू.१भ.शाकव.। तिन्तिड्यां। रा.नि.व.११।

**चुक्राम्लम्**। क्ली। वृक्षाम्ले। তেঁতুল। रा.नि.व.६। चिञ्चाम्ले। তেঁতুলের অম্বল। रा.नि.व.११। अम्लकाञ्जिके। सिर्काम्न।

**चुक्राम्ला**। स्त्री। अम्ललोणिकायाम्। See चाङ्गेरी। चिञ्चायाम्। काञ्जिकभेदे। सिर्काम्न। वै.निघ.।

**चुक्रि(क्री)का**। स्त्री। चुक्रनामककाञ्जिके। सिर्काम्न। रा.नि.व.१५। अम्ललोणिकायाम्। रा.नि.व.५। भा.पू.१भ.शाकव.। कुठारिया इति च.द.तृष्णा.चि.। "चुक्रीका चुक्रिकारसः।" चुक्रपालङ्के। চুকা পালং। र.मा.। भा.पू.१भ.शाकव.। तिन्तिड्याम्। रा.नि.व.११। मद.व.६। आम्रातकफले। वै.निघ.।

**चुचु(चू)कम्**। क्ली। स्तनाग्रभागे। रा.नि.व.१८। श.र.।

**चुचुन्दरः**। पुं। छुछुन्दरे। ছুঁচো। वै.निघ.।

**चुचूः**। पुं। सुनिषण्णकशाके। त्रिका.। पत्रशाकभेदे। गुणाः—पाके लघुः जन्तुघ्नः पिच्छिलो व्रणिनां हितः कषायः मधुरो ग्राही त्रिदोषघ्नश्च। सु.सू.४६अ.।

**चुचुः**। पुं, स्त्री। (Marsilea dentata.) पत्रशाकविशेषे। চেঁচকো। हिं चेंचुना। तें चिन्तचेट्टु। सा द्विधा क्षुद्रचुचुमहाचुचुभेदेन। सा. गुणाः—मधुरा तीक्ष्णा कषाया मलशोधनी गुल्मोदरविबन्धार्शोग्रहणीहरी च। महाचुचुः कटूष्णा कषाया मलरोधनी गुल्मशूलोदरार्शोविषघ्नी रसायनी च। क्षुद्रचुचुः मधुरा कटूष्णा कषाया दीपनी शूलगुल्मार्शोघ्नी विबन्धकृच्च। महाचुचुबीजं कटूष्णं गुल्मशूलोदरघ्नं विषघ्नं त्वग्दोषघ्नं कण्डूघ्नं कुष्ठघ्नम् आखुविषघ्नं च। रा.नि.व.४। रक्तैरण्डे। रा.नि.व.८। छुछुन्दर्य्याम्। हारा.।

**चुञ्चुपत्रः**। पुं। चुञ्चुक्षुपे। रा.नि.व.४।

**चुञ्चुरः**। पुं। चुञ्चुक्षुपे। रा.नि.व.४।

**चुण्टा (ण्टी)**। स्त्री। क्षुद्रे। अखनितजलाशयभेदे। हे.च.। कूपे। त्रिका.। [श.र.।

**चुतः (तिः)**। पुं,स्त्री। अपानद्वारे। মলদ্বার।

**चुम्बकः**। पुं,क्ली। कान्तलौहविशेषे। চুম্বক। हिं चुम्बक। रा.नि.व.१३। गुणाः—शीतलो लेखनो मेदोविषगरघ्नश्च। भा.पू.१भ.उपरस.व.।

**चुम्बला**। स्त्री। मुण्ड्याँ। মুণ্ডীরী। वै.निघ.।

**चुरवः**। पुं। क्रमौ। वै.निघ.।

**चुरी**। स्त्री। उपकूपे। स्वल्पजलाशये। हे.च.।

**चुलुकः**। पुं। प्रसृतिपरिमाणे। हे.च.। गण्डूषे। घनपङ्के। त्रिका.। क्ली। माषमज्जनजले।

**चुलुकी (इन्)**। पुं। गोधामत्स्ये। ঘড়িয়াল মাছ। श.र.।

**चुलुम्पः**। पुं। बाललालने। जटा.।

**चुलुम्पा**। स्त्री। छाग्याम्। त्रिका.। [श.र.।

**चुलुम्पी**। पुं। शिशुमाराकृतिमत्स्ये, उत्पलमत्स्ये।

**चुल्लः**। पुं। क्लिन्ननेत्ररोगे। अम.। [श.र.।

**चुल्लकी**। स्त्री। शिशुमारे। कौलीभेदे। मे.।

**चुल्लिः**। स्त्री। पाकार्थमग्निस्थाने। উনান। अ.टी.। [वै.निघ.।

**चुल्लिका**। स्त्री। शिशुमारविशेषे। শুশুক।

**चुल्लिकालवणम्**। क्ली। लवणविशेषे। वै.निघ.। [राजम.तैलि.। चितायाम्। मे.।

**चुल्ली**। स्त्री। गुवाकपुष्पे। च.द.वा.व्या.महा-

**चुवुकः**। पुं। अधरोष्ठाधोभागे। मुखे। वै.निघ.।

**चुस्तः**। पुं, क्ली। स्थालीपक्वमांसे। पनसफलस्यासारभागे। ভুঁতি। लिङ्गसं.भ.। कूपे। त्रिका.। मयूरशिखायाम्। अम.।

**चूचुकम्**। क्ली। स्तनाग्रभागे। रा.नि.व.१८।

**चूड़ा**। स्त्री। मल्लके। श्वेतगुञ्जायाम्। वै.निघ.।

**चूड़ामणिः**। पुं। गुञ्जालतायाम्। रा.नि.व.३। रक्तगुञ्जायाम्। वै.निघ.।

**चूड़ाम्लम्** । क्ली । वृत्ताम्ले । रा.नि.व.६ ।

**चूड़ालम्** । क्ली । मस्तके । श.र. । स्त्री । श्वेतगुञ्जायाम् । रा.नि.व.३ । उच्चटायां । अम. । अ. ह्.१२अ. । नागरमुस्तायाम् । रा.नि.व.६ ।

**चूतः (कः)** । पुं । आम्रवृक्षे । रा.नि.व.११ । पायौ । श.र. । कूपे । मे. ।

**चूर्णः** । पुं, क्ली । चूर्णवस्तुनि । गुंड़ा । "चूर्णन्तु वस्तुभिः सूक्ष्मैः ।" अम. । रा.नि.व.२० । लक्षणं—"अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् । तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्राकर्षसम्मिता । चूर्णे गुड़ः समो देयः शर्करा द्विगुणा भवेत् । चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् । लिह्याच्चूर्णं द्रवैः सर्व्वैः घृताद्यैः द्विगुणोन्मितैः । पिबेच्चतुर्गुणैरेव चूर्णमालोड़ितं द्रवैः ॥" शार्ङ्ग.६अ. । क्षारविशेषे । चून् । गुणाः—वातश्लेष्मघ्नः मेदोघ्नः । शङ्खचूर्णगुणाः—कटुः क्षारः उष्णः क्रिमिघ्नश्च । राज. । चूर्णजलगुणाः—"सद्यस्तं चूर्णसलिलं मधुमेहे हितं मतं । अम्लपित्ते च शूले च पथ्यमप्यौषधञ्च तत् ॥" तत्करणविधिः—"चतुःकर्षमिते चूर्णे तोयप्रस्थप्रावके । क्षिप्ते चूर्णोदकं तस्मात् त्र्यहेऽदयसंस्थितम् ॥" चक्रः ।

**चूर्णकः** । पुं । भृष्टतण्डुलकृतपिष्टे । वै.निघ. । षष्टिकधान्यभेदे । स व्रीहेर्हीनगुणः । सु.सू.४६अ. । च.सू.२७अ. । धान्यज्वरे । गजवैद्यकम् । सक्तौ । छातु । त्रिका. । क्ली । गुण्ठायां । गुंड़ा । च.द.१०अ. ।

**चूर्णकीलः** । पुं । अश्वस्य पादरोगभेदे । "सूक्ष्मचूर्णतलश्चैव चूर्णकीलः ।" ज.द.३१अ. ।

**चूर्णकुन्तलः** । पुं । अलके । अम. ।

**चूर्णखण्डः** । पुं, क्ली । कङ्करे । कँाकर । घुषिम् । हारा । [१३ । भा. ।

**चूर्णपारदः** । पुं, क्ली । हिङ्गुले । रा.नि.व.

**चूर्णवज्रम्** । क्ली । वैक्रान्तमणौ । रा.नि.व.१३ ।

**चूर्णमषी** । स्त्री । मसीविशेषे । कृष्णसर्पो दश्यमानो यदा कृष्णत्वं गच्छति तदा चूर्णमसीत्युच्यते । सु.चि.१अ. । [नि.व.७ ।

**चूर्णशाकाङ्कः** । पुं । गौरसुवर्णशाके । रा.

**चूर्णाञ्जनम्** । क्ली । त्रिविधाञ्जनान्यतमे अञ्जने । गुंड़ा काजल । भा. ।

**चूर्णिः (र्णी)** । स्त्री । कपर्द्दके । उणा. । मे. ।

**चूर्णिका** । स्त्री । सक्तौ । छातु ।

**चूर्णितम्** । क्ली । तन्नामककाण्डभग्नेऽस्थिभङ्गरोगे । See भग्नम् ।

**चूर्धरः** । पुं । ऋषभके । रा.नि.व.५ ।

**चूलः (कः)** । पुं । केशे ।

**चूलिकम्** । क्ली । लोचिकायाम् । लुची । श.च. । गुणाः—ग्राहि वातश्लेष्मघ्नं पाके किञ्चिदम्लकारि रुचम् आमयघ्नं ध्वीकासघ्नं च । वैद्यचन्द्रिका ।

**चूलिका** । स्त्री । हस्तिकर्णमूले । अम. ।

**चूलिकालवणम् (क्षारः)** । क्ली । चुलिकालवणे । नकुल.१३अ. । वै.निघ.२भ.अर्श.चि. राजवल्लभरसे ।

**चूषणम्** । क्ली । चोषणे, पाने । रा.नि.व.२० ।

**चूषा** । स्त्री । चूषणे । कक्ष्यायां । काछ दड़ि । अम. ।

**चेउलपूगम्** । क्ली । कोङ्कणदेशख्याते पूगफलविशेषे । रा.नि.व.११ । See अक्रोटः ।

**चेतः** । क्ली । चित्ते । अम. ।

**चेत(न)की** । स्त्री । हिमालयजत्रिशिरहरीतक्याम् । प.मु. । भा. । See हरीतकी । जात्याम् । जाती फुल । रा.नि.व.१० ।

**चेतनः** । पुं । मनुष्ये । आत्मनि । रा.नि.व.१८ । स्त्री । त्रिशिरहरीतक्यां । भल्लातकवृक्षे । वै.निघ. ।

**चेतनाधिष्ठा(स्था)नम्** । क्ली । हृदये । च.शा.७अ. । [नि.व.११ ।

**चेतनिका** । स्त्री । चेतकीहरीतक्याम् । रा.

**चेतनीया** । स्त्री । ऋद्धौ । शक्ति । रा.नि.व.५ ।

**चेतिका** । क्ली । जातीपुष्पवृक्षे । वै.निघ. ।

**चेदारः** । पुं । सरटे । वै.निघ. ।

**चेलकल्वक्** । स्त्री । गुवाकपुष्पत्वचि । सुपारि फुलेर बाकड़ा । च.द.वा.व्या.चि. । "व्याघ्रीवचाचेलकल्वक् ॥"

**चेलान: (ल:)** । पुं । लतापनसे । তরমুজ । चिका. । गुणा:—गुरु मधुरं विष्टम्भि कफवातकरञ्च । राज.३प. ।

**चेलीम:** । पुं । मत्स्यविशेषे । वै.निघ. । [श.च.।

**चेष्टक:** । पुं । तपस्विमत्स्ये । তপ্‌সি মাছ ।

**चेष्टा** । स्त्री । कायिकव्यापारे । आयासे । वाङ्मन:शरीरप्रवृत्तौ । [नि.व.२० ।

**चेष्टानाश:** । पुं । इन्द्रियस्वापे । प्रलये । रा.

**चेष्टितम्** । क्ली । चेष्टायाम् । मे. । [व.२० ।

**चैतन्यम्** । क्ली । चेतनायाम् । प्रकृतौ । रा.नि.

**चैतसघृतम्** । क्ली । उन्मादे घृतविशेषे । पाठ:—"पञ्चमूल्यावकाश्मर्यौ व्याघ्रैरण्डनिदिग्धला: । मूर्व्वा शतावरी चेति क्वाथैर्द्विपलिकैरिमै: । कल्याणकस्य चाङ्गेन तद्वृतं चैतसं स्मृतम् । सर्व्वचेतोविकाराणां शमनं परमं मतम् ॥" কাথার্থ—কণ্টকারী, শালপাণি, বৃহতী চাকুলে, গোক্ষুর, বেলছাল, শোণাছাল, পারুলছাল, গণিরিছাল, রাস্না, এরণ্ডমূল, তেউড়ী, বেলেড়া, মূর্ব্বা, শতমূলী, প্রত্যেকে ২ প. জল ৬৪ শ. শে. ১৬ শ. ঘৃত ৪ শ. । কল্কার্থ—রাখালশশা, ত্রিফলা, রেণুক, দেবদারু, এলবালুক, শালপাণী, তগরপাদুকা, হরিদ্রা, দারুহরিদ্রা, অনন্তমূল, শ্যামালতা, প্রিয়ঙ্গু, নীলোৎপল, এলাইচ, মঞ্জিষ্ঠা, দন্তী, দাড়িম, নাগেশ্বর, তালীশপত্র, মালতীফুল, বিড়ঙ্গ, চাকুলে, কুড়, রক্তচন্দন, পদ্মকাষ্ঠ প্রত্যেকে ২তো. ২মা. ৪র. । सा.कौ । भैष । च.द. । भा. ।

**चैत्यद्रु: (म:) (वृक्ष:)** । पुं । अश्वत्थवृक्षे । प.मु. । रा.नि.व.११ । र.मा. ।

**चैत्र: (क:)** । पुं । चित्रानक्षत्रयुक्तमासे । अम. ।

**चैत्रवृक्ष:** । पुं । आम्रवृक्षे । वै.निघ. ।

**चोक(ख)म्** । क्ली । स्वर्णक्षीरीमूले । শেয়ালকাঁটার মূল । "कटुपर्णी हैमवती हेमक्षीरी हिमावती । हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते ॥" भा. ।

**चोचम्** । क्ली । त्वचि । গুড়ত্বক্ । र.मा. । (सर्व्वलोभद्ररसे) । कदलीफले । (क्षारसुन्दरी) । नारिकेले । भा. । तालफले । भ. । पत्रे । (तेजःप-त्र) । चर्म्मणि । धरणि: वल्कले । लवङ्गे । द्वीपखर्ज्जूरे । वै.निघ. । भुक्तफलाद्यवशेषे । ছিবা, চোঁচা ।

**चोचकम्** । क्ली । वल्कले । श.र. ।

**चोदनी** । स्त्री । दुरालभायाम् । वै.निघ. ।

**चोर:** । पुं । चोरके । গেঁটেলা । क्षणशन्याम् । (हुडचन्द्र:) । पारसीकयमान्याम् । वै.निघ.क्रमि. चि.निम्बादिचूर्णे । शिरोरोगविशेषे । लक्षणं—"हल्वैकदातिशरणं वमनं तथैव आध्मानघूर्णनरुजश्च शिरोविंधाय । य: श्वासमात्रपरिरक्षितजीवयोगी रोगी बधूभिरुदित: स हि चोरनामा ॥" र-स.र.बाल चि. ।

**चोरक:** । पुं । पृक्कायाम् । प.मु. । चण्डायां । চোরকাঁচকি । वा.उ.६अ. । च.सू.४अ. । स्वनामख्यातगन्धद्रव्ये । ग्रन्थिपर्णस्यैव भेदे, भटेउर इति नेपालदेशे, गाठिवना इति महाराष्ट्रादौ, चौरा इति पार्व्वतीयदेशादौ प्रसिद्धे । वा.उ.२अ. महालाक्षादितैले । गुणा:—तीव्रगन्ध: उष्ण: तिक्त: वातकफघ्न: नासारोगमुखरोगघ्न: अजीर्णक्रमिघ्नश्च । रा.नि.व.१२ ।

**चोरकण्टक:** । पुं । शङ्खिनीवृक्षे । वै.निघ. ।

**चोरकपत्र:** । पुं । लाक्षावृक्षे । सु.सू.३८अ. ।

**चोरका** । स्त्री । चोरपुष्प्याम् । চোরহুলী । च.द.उन्मा.चि.महापैशाचघृते ।

**चोरपुष्पिका (ष्पी)** । स्त्री । शङ्खिन्याम् । চোরহুলী । श.र. । वा.व्या.महाराजप्रसारणीतैले ।

**चोरभण्टि(ण्ड)का** । स्त्री । वार्त्ताकौ । वै.निघ. ।

**चोरशुण्ठी** । स्त्री । श्वेतकिणिह्यां । वै.निघ. ।

**चोरस्नायु:** । स्त्री । श्वेतकाकजङ्घायाम् । काकनासायाम् । रा.नि.व.३ ।

**चोरा** । स्त्री । चोरपुष्प्याम् । श.च. ।

**चोलकम्** । क्ली । वल्कले । श.र. ।

**चोलकी** । पुं । शङ्खिन्याम् । वै.निघ. । करीरे । नारङ्गे । किष्कुपर्व्वणि । मे. ।

**चोलखण्डुक:** । पुं । शिरोवेष्टने । चिका. ।

**तृणकूर्म्मः** । पुं । श्वेतालाख्ये । वै.निघ. । श.मा. ।

**तृणकेतकी** । स्त्री । वंशलोचनविशेषे । वै.निघ. । [व.७ ।

**तृणकेतुः (कः)** । पुं । वंशे । बाँश । रा.नि.

**तृणकेसरम्** । क्ली । तृणकुङ्कुमे । रा.नि.व.१२ ।

**तृणगन्धा** । स्त्री । वृद्धदारकलतायां । वै.निघ. ।

**तृणगोधा** । स्त्री । सरटे । गिरगिटे । कृकलासे । मे. । तृणजलौकायाम् । शब्दकल्प. ।

**तृणगोधूमः** । पुं । स्वनामख्यातगोधूमे । घासि गम । प.मु. ।

**तृणगौरम्** । क्ली । तृणकुङ्कुमे । रा.नि.व.१२ ।

**तृणग्रन्थिः** । पुं । स्वर्णजीवन्त्यां । रा.नि.व.३ ।

**तृणग्राही** (इन्) । पुं, क्ली । नीलहीरके । प.मु. । नीलमणौ । काफूरदाना । रा.नि.व.१३ ।

**तृणचरः** । पुं । गोमेदमणौ । वै.निघ. ।

**तृणद्रुमः** । पुं । तालवृक्षे । केतकीवृक्षे । पूगवृक्षे । खर्ज्जूरीवृक्षे । ताड़ीद्रुमे । তেড়েৎ গাছ । नारिकेलवृक्षे । हिन्तालवृक्षे । হেঁতাল গাছ । एषां मज्जनिर्यासाः लघवः शीतला बल्या मोहमा हृद्या तृषातापहराश्च । रा.नि.व.९ ।

**तृणधान्यम्** । क्ली । तृणोद्भवश्यामाकादौ । শ্যামা ধান প্রভৃতি । गुणाः—"श्यामाकः शोषणो रूक्षः वातलः श्लेष्मपित्तहा । ऊड़िका कोद्रवश्चैव हस्तिश्यामाकचीनकौ । पीनसश्वासकासोरुस्तम्भकण्ठगदान् जयेत् । कङ्गुकांश्चापि जानीयात् एतान् श्यामाकवद्गुणैः । ऊड़िका तत्र कथिता बलासस्य विवर्द्धिनी । कोद्रवश्च परं ग्राही वातलः कफनाशनः ॥" राज.३प. । See कुधान्यम् ।

**तृणध्वजः** । पुं । वल्लजायां । উলু । रा.नि.व.८ । वंशे । अम. । [रा.नि.व.९ ।

**तृणनिम्बः** । पुं । नेपालनिम्बे । চিরেতা ।

**तृणपञ्चमूलम् (ली)** । क्ली, स्त्री । कुशकाशशरेक्षुदर्भेषु । दर्भ उलपः । शरेक्षुदर्भकाशशालय इति चरकः । "श्वेतक्षीरं पिबेद्वापि पञ्चमूल्या तृणाख्यया ।" सि.यो.र.पि.चि. । गुणाः—तृणाख्यपञ्चमूलन्तु पित्तरक्तमूत्रसङ्गहरी । "कुशः काशः शरो दर्भइक्षुश्चेति तृणोद्भवं । पित्तकृच्छ्रहरं पञ्चमूलं बस्तिविशोधनम् ॥" भा.मू.कृ.चि. ।

**तृणपञ्चमूलाद्यघृतम्** । क्ली । अश्मर्य्यधिकारे घृतम् । गव्यघृतं ४ श. । क्वाथार्थं—कुशः काशः शरः इक्षुः दर्भमूलं गोक्षुरः एषां प्र. १० प. वारि ६४ श. शे. १६ श. । कल्कार्थं—गुड़ गोक्षुरबीजे प्र. ४ प. । भा. ।

**तृणपत्रिका (त्री)** । स्त्री । इक्षुदर्भायाम् । ইক্ষুদর্ভা তৃণ । (त्री) गुण्ड्रासिनीतृणे । रा.नि.व.८ । [तृणे । रस.र.मल्लभल्लातकगुड़े ।

**तृणपर्णम्** । क्ली, पुं । चीनाखड़ इति प्रसिद्ध-

**तृणपुष्पम्** । क्ली । तृणकुङ्कुमे । रा.नि.व.१२ ।

**तृणपुष्पी** । स्त्री । सिन्दूरपुष्पीवृक्षे । रा.नि.व.१० । [चि.२ष. ।

**तृणपूली** । स्त्री । चञ्चाम् । চাঁচ । हारा. । च.

**तृणमणिः** । पुं । नीलहीरके । हारा. ।

**तृणमुद्गः** । पुं । श्यामाकधान्ये । শ্যামা ধান । प.मु. । [रस.र.रसमारणे ।

**तृणमुस्तिका** । स्त्री । मुस्ततृणे । मुस्तायाम् ।

**तृणमूलम्** । क्ली । गन्धतृणमूले । भा.म.३भ. मू.कृ.चि. ।

**तृणराजः (कः)** । पुं । तालवृक्षे । তাল গাছ । नारिकेलवृक्षे । वंशे । रा.नि.व.८।११।१२ । इक्षुवृक्षे । वल्लजायाम् । वै.निघ. । [नि.व.११ ।

**तृणराजाह्वः (यः)** । पुं । तालवृक्षे । रा.

**तृणवल्ल(ल्व)जा** । स्त्री । वल्लजायां । উলু । रा.नि.व.८ । [শামা ঘাস । र.मा. ।

**तृणबीजः (जोत्तमः)** । पुं । श्यामाकतृणे ।

**तृणवृक्षः** । पुं । नारिकेलवृक्षे । तालवृक्षे । पूगवृक्षे । केतकीवृक्षे । खर्ज्जूरीवृक्षे । रा.नि.व.९ । वै.निघ. । [प.मु. ।

**तृणशिम्बी** । स्त्री । निष्पावे । শীম গাছ ।

**तृणशीतः** । पुं । देवताड़वृक्षे । वै.निघ. । क्ली । कतृणे । गन्धतृणे । र.मा. । स्त्री । महाराष्ट्रीलतायां, जलपिप्पल्यां । কাঁচড়া । रा.नि.व.४ ।

**तृणशून्यम्** । क्ली, पुं । मालतीपुष्पे । प.मु. ।

स चि.३अ. । सु.चि.१८अ. । श्वेतकेतक्यां । च.सू.२५अ. । मल्लिकायां । केतकीफले । मे. । [१२ ।

**तृणशोणितम्** । क्ली । तृणकुङ्कुमे । रा.नि.व.

**तृणशोषकः** । पुं । राजिमत्सर्पविशेषे । सु.कल्प. ४अ. । See सर्पः । [गरूल । त्रिका. ।

**तृणषट्पदः** । पुं । कीटविशेषे, वरोलि । भौ-

**तृणसारा** । स्त्री । कदल्यां । हारा. । [व.८ ।

**तृणाख्य(ढ्य)म्** । क्ली । पर्व्वततृणे । रा.नि.

**तृणाग्निपः** । पुं । मन्थानकतृणे । रा.नि.व.८।

**तृणाञ्जनः** । पुं । कृकलासे । কাঁকলাস । त्रिका. ।

**तृणाधिपः** । पुं । मन्थानकतृणे । रा.नि.व.८।

**तृणान्नम्** । क्ली । देवधान्ये । नीवारधान्ये । भा. पू.१भ.धा.व. ।

**तृणाम्लम्** । क्ली । लवणतृणे । रा.नि.व.८ ।

**तृणारिः** । पुं । पर्पटके । ক্ষেৎপাপড়া । वै. निघ. ।

**तृणावर्त्तः** । पुं । गुच्छासिनीतृणे । वै.निघ. ।

**तृणास्रक्** । क्ली । तृणकुङ्कुमे । रा.नि.व.१२ ।

**तृणी** । स्त्री । आमहरिद्रायाम् । वै.निघ.

**तृणेलुः** । पुं । वल्वजायाम् । উলু । रा.नि.व.८।

**तृणोत्तमः** । पुं । ऊषरतृणे । रा.नि.व.८ ।

**तृणोत्थम्** । क्ली । तृणकुङ्कुमे । । रा.नि.व.१२ ।

**तृणोद्भवः** । पुं । नीवारे । বোরো ধান । रा. नि.व.१६ । [वा.उ.३७अ. ।

**तृणोलुपम्** । क्ली । उलपतृणे । উলুখড় ।

**तृणौकः** । पुं । तृणच्छादितगृहे । খড়ুয়া ঘর । हे.च. ।

**तृणौषधम्** । क्ली । एलवालुके । श.च. ।

**तृणमान्** । त्रि । तृणायुक्ते । वा.चि.६अ. ।

**तृतीयकः** । पुं । विषमज्वरविशेषे । একদিন অন্তর জ্বর । "दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः ।" भा. । "कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः । वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः ।" मा.नि.ज्व. ।

**तृतीयकविपर्य्ययः** । पुं । तृतीयकस्य ज्वरस्य भेदे । প্রথম ও শেষ দিনে ছাড়িয়া দ্বিতীয় দিনের জ্বর । यथा—आदावन्ते च मुञ्चति मध्ये एकं दिनं ज्वरयति । भा. ।

**तृतीय(या)प्रकृतिः** । पुं । नपुंसके । अ.टी. ।

**तृप(फ)ला** । स्त्री । लतायाम् । त्रिफलायाम् । उणा. । त्रिका. ।

**तृप्तिः** । स्त्री । सत्यपि भोजनसामर्थ्ये अनन्नाभिलाषे । भा.म.१भ.ज्व.चि. । "स्तम्भस्तृप्तिरथापि वा ।"

**तृप्तिघ्नः** । त्रि । तृप्तिजनके । क्षुधामान्द्यकरे ।

**तृप्तिघ्नवर्गः** । पुं । नागरचित्रकचव्यविडङ्गमूर्व्वागुडूचीवचामुस्तपिप्पलीपटोलेषु । च.सू.४अ. ।

**तृप्रः** । पुं । घृते । उणा. ।

**तृफुः** । पुं । सर्पे । उणा. ।

**तृवृता** । स्त्री । त्रिवृति । তেউড়ী । शुक्लत्रिवृतायां । শ্বেত তেউড়ী । वा.चि.२अ. । [प.मु ।

**तृषती** । स्त्री । शुक्लशिम्ब्याम् । আলাকুশী ।

**तृषा** । स्त्री । तृष्णायाम् । रा.नि.व.२० । लाङ्गलिकलतायाम् । श.च. ।

**तृषाभूः** । स्त्री । मूत्राशये । क्लोम्नि । श.च. ।

**तृषाह(का)म्** । क्ली । जले । श.च. । वै.निघ. ।

**तृषाह्वा** । स्त्री । शताह्वायाम्, मधुरिकायाम् । श.च. ।

**तृषितोत्तरा** । स्त्री । गोकर्णीनामवल्ल्याम् । वै.निघ. । अश्वनपर्णीलतायाम् । श.च. ।

**तृष्णक्** । त्रि । तृष्णावति । वा.ज्व.चि.१अ. । लुब्धे । अम. ।

**तृष्णा** । स्त्री । पानेच्छायां । পিপাসা । मे. । तर्षे । जटा. । पिपासारोगे । रा.नि.व.२० । "भयश्रमाभ्यां बलसङ्क्षयाद्वा ऊर्द्धचितं पित्तविवर्द्धनैश्च । पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥" "सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति । पुनः काङ्क्षति तोयञ्च तं तृष्णार्दितमादिशेत् ॥" "स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः । तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथाऽऽमात्समुद्भवा च भक्तोद्भवा सप्त-

भिक्षेति तासां निबोध लिङ्गान्यनुपूर्व्वशस्तु । आमास्वता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि । स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति । मूर्च्छाभ्रविशेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः । शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिदूयनञ्च । वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तथा तु । निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम् । क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु । रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतश्च निशादिनेषु । पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः ॥" इत्यादि । मा.नि.। पथ्यं—"शोधनं वमनं निद्रा स्नानं कवलधारणं । कोद्रवाः शालयः पेया विलेपी लाजसक्तवः । अन्नमण्डो धन्वरसाः सितामुद्गादिजा रसाः । खर्ज्जूरं दाड़िमं धात्री कक्कोलं नलदम्बु च । जम्बीरं करमर्द्दञ्च बीजपूरं गवां पयः । मधूकपुष्पं तिक्तानि मधुराणि विशेषतः । बालतालकशीताम्बु माक्षिकं सरसीजलं । घनसारो गन्धसारः कौमुदी शिशिराणि च । एला जातीकपत्रञ्च कुस्तुम्बुरु च टङ्कणम् । चन्दनार्द्रप्रियाश्लेषो रत्नाभरणधारणं । हिमानुलेपनञ्च स्यात्पथ्यमेतत् तृषातुरे ॥" पथ्यापथ्यम् । [नि.व.५ ।

**तृष्णारिः** । पुं । पर्पटके । (क्षेत्रपापड़ा । रा.

**तेजः** । क्ली । मज्जायां । रा.नि.व.१८ गुणाः—वृद्धुधानिद्रालस्यमैथुनेषु । रस.र.ज्व.चि.। पित्ते । रा.नि.व.२१ । घृते । कान्तौ । स्वर्णे । रा.नि.व. १३ । शुक्रे । मे. । नवनीते । चर्म्मे । हे.च. ।

**तेजःफलः** । पुं । तेजफलवृक्षे । (तेजवल । रा.नि.व.११ ।

**तेजनः (कः)** । पुं । शरे । प.मु. । वंशे । भा.। मुञ्जतृणे । उलपतृणे । अ.द.११अ. । रा.नि.व. ८ । क्ली । भोजने । रा.नि.व.२० । [व.८ ।

**तेजनाह्वयः** । पुं । मुञ्जतृणे । मूञ । रा.नि.

**तेजनी** । स्त्री । मूर्वायां । अम.। क्षीरमूर्व्वायां । कटुधान्ये । वै.निघ. । वचायां । भैष.मु.रो.चि. । ज्योतिष्मतीलतायां । श.र. ।

**तेजपत्रम्** । क्ली । स्वनामख्यातपत्रे । (तेजपात । प.मु. । See पत्रकम् ।

**तेजफलः** । पुं । हिमालयादौ ख्याते स्वनामख्यातवृक्षे । मं काइफल । कं गावटे । गुणाः—कटुः तीक्ष्णः सुगन्धः दीपनः वातश्लेष्माच्छिन्नः बालरक्षाकारकः । "तेजफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनः परः । वातश्लेष्मच्छिद्रञ्च बालरक्षाकरः परः ॥" रा.नि.व.११ ।

**तेजलः** । पुं । कपिञ्जलपक्षिणि । तितिर पाखी । रा.नि.व.१९ ।

**तेजवती** । स्त्री । जलपिप्पल्यां । कँाचड़ा । वै.निघ.२अ.अ.च.चि. । गजपिप्पल्यां । श.र. । तेजवल्कल, तेजबल इति च ख्याते द्रव्ये । गुणाः—"तेजस्विनी कफश्वासकासास्यामयवातहृत् । पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी ॥" भा. । वचायां । वच । भैष.क्षुद्ररो.चि. ।

**तेजसाह्वयः** । क्ली । मुञ्जतृणे । वै.निघ. ।

**तेजस्करः** । त्रि । तेजोवर्द्धके ।

**तेजस्विनी (जिनी)** । स्त्री । मूर्वायाम् । चविकायाम् । महाज्योतिष्मतीलतायाम् । रा.नि. व.३ । च.वि.८अ. । तेजोबलवृक्षे । वै.निघ. । ज्योतिष्मतीलतायाम् । लताफट्‌की । श.र. ।

**तेजोद्विषः** । पुं । पित्तजरोगे । भा. ।

**तेजोधातुः** । पुं । पित्ते । वै.निघ. ।

**तेजोमन्थः** । पुं । क्षुद्राग्निमन्थक्षुपे । (छोट गणिरि । प.मु. । गुणाः—"तेजोमन्थगुणाः प्रोक्ताश्चाग्निमन्थसमा बुधैः । विशेषाद्वातशोफे च प्रोक्ताः पूर्व्वैश्च सूरिभिः ॥" वै.निघ. ।

**तेजोमयम्** । क्ली । पित्ते । वै.निघ. ।

**तेजोवती** । स्त्री । महाज्योतिष्मतीलतायाम् । बड़ लताफट्‌की । हिं लमिजिनि । भैष.कुष्ठ. चि.पञ्चतिक्तघृते । वै.निघ.२अ.जीर्णज्व.चि. । चविकायाम् । चई । प.मु. । भा. । सा.कौ.चर्म्म-चि.माहशालगुड़े । गजपिप्पल्यां । श.र. । वचायां । सि.यो.हि.श्वास.चि.माहशालगुड़े । "हस्तेजोवती हस्ती ।" यत्र यत्र तेजोवती चास्ति तत्र तेजोवती ज्योतिष्मती ग्राह्या । श्रीकण्ठः । तेजोवल्कले । (तेजवल । स्वर्णजीवन्त्याम् । भा.म.४भ. मु.रो.चि. । सु.चि.२२अ. । मदिरो । वै.निघ. ।

**तेजीवीजम्** । क्ली । मज्जायाम् । मज्जा । वै. निघ. ।

**तेजोह्वः** । पुं । क्षुद्राग्निमन्थे । ছোট গণিরি । ग्रु.नि.व.८ ।

**तेजोह्वा** । स्त्री । तेजोवत्याम् । তেজবল । भा. म.४भ.मु.री.चि. । सु.चि.२भ. । वै.निघ.अर्शः-चि.वाहुशालगुड़े । वचायाम् । বচ । चक्रदत्त.चि. कालकचूर्णे ।

**तेमनम्** । क्ली । आर्द्रीकरणे । मे. । व्यञ्जने । "व्यञ्जनं सूपशाकादिमिष्टान्नं तेमनं स्मृतम् ।" रा. नि.व.२० ।

**तेमनी** । स्त्री । चुल्लीभेदे । है.च. ।

**तेरः (रणः)** । पुं । स्वनामख्यातक्षुपे । তেরড়া গাছ । मं तेरणा । कं वेवत्तिगे । गुणाः—शीतलः तिक्तः व्रणघ्नः अरुणरङ्गदः । रा.नि.व.४ ।

**तैजवल्ली** । स्त्री । शतावर्य्याम् । रा.नि.व.४ ।

**तैजसम्** । क्ली । घृते । रा.नि.व.१५ ।

**तैजसावर्त्तिनी** । स्त्री । स्वर्णादिपाकमुषायां । মুচি । अम. ।

**तैजसी** । स्त्री । गजपिप्पल्याम् । रा.नि.व.६ ।

**तैतिलः** । पुं । खड्गिनि । গণ্ডার । मे. ।

**तैत्तिरः** । पुं । तित्तिरपक्षिणि । रा.नि.व.१९ । गण्डके । গণ্ডার । मे. ।

**तैरणी(रिणी)** । स्त्री । तेरणक्षुपे । रा.नि.व.४ ।

**तैलम्** । क्ली । सिह्लके । শিলারস । च.द. । सि.यो.रा.य.चि.चन्दनादितैले । तिलादिसम्भूत स्नेहे, तैलसामान्ये । তেল । तच्चाष्टादशविधम् । तद्यथा—तिलजं सार्षपं कौसुम्भम् अतसीजं धान्यजम् एरण्डजं कारञ्जम् ऐङ्गुदं नैम्बं विभीतककं निर्गुण्डजं ज्योतिष्मतीजम् अभयाजं मधुरिकोत्थं कोशाम्रजं चित्राभवं कर्पूरजं त्रपुषवीजजञ्चेति । एषां विशेषगुणाः स्वस्वपर्य्यायेषु ज्ञेयाः । "तैलं न सेवयेद्धीमान् यस्य कस्य च यद्भवेत् । विषसाम्यगुणत्वाच्च योगे तन्न प्रयोजयेत् । उक्तञ्च, विषस्य तैलस्य न किञ्चिदन्तरं मृतस्य सुप्तस्य न किञ्चिदन्तरम् ।" रा.नि.व.१५ । तैलसामान्यगुणाः स्वरूपञ्च । "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम् । तच्च वातहरं सर्व्वं विशेषात्तिलसम्भवम् । तैलं स्वयोनिगुणकृत् वाग्भटेनाखिलं मतं । अतः शेषस्य तैलस्य गुणाः ज्ञेयाः स्वयोनिवत् । तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकं ॥" भा.पू.२भ तैलव. । "आमाह्नाष्ठीलवातास्रकम्पोदावर्त्तशूलिनां । हन्ति वातविकाराणां विदध्याच्च प्रशान्तये । यावन्तः स्थावराः स्नेहाः समासेन प्रकीर्त्तिताः । सर्व्वे तैलगुणाः ज्ञेयाः सर्व्वे चानिलनाशनाः ॥" अत्रि. १४अ. । तैलन्त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकाशि वृष्यं त्वक्प्रसादनं मेधामार्द्दवमांसस्थैर्य्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलबलासक्षयकरं क्रिमिघ्नमशीतपित्तजननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनञ्च । सु.सू.४५अ. । कटाहपक्वतैलगुणाः —"तैलद्रोणी प्रशस्ता विविधगदमये वातरोगादितेषु व्याकुल्ये पङ्गुभूते सविषमवधिरे भिन्नभिन्ने पदगदे च । धन्वङ्गे लम्बपृष्ठे प्रचलितपवने गात्रकम्पे कपाल्यां ग्रीवाभङ्गेऽपतन्ने चयरुधिरभवे मूत्रकृच्छ्रे च वस्तौ ।" राज.२प. । सर्व्वदा शिरस्तैलदानगुणाः—शिरःशूलखालित्यपालित्यहरं केशदार्ढ्यकरं केशश्यापतनदीर्घतासान्द्रताकरम्, इन्द्रियप्रसादकं वह्निशुद्धिकरञ्चेति । सदाकर्णपूरणगुणाः—मन्याहनुसंग्रहोच्चैःश्रुतिवाधिर्य्यकर्णवातजरोगाजमकञ्च । "सौवर्चलेङ्गुदीपीलुशिंशपासारसम्भवं । सरलागुरुदेवादिपादपैः सम्भवन्तु यत् । तुम्बुरूत्थं करञ्जोत्थं ज्योतिषत्युद्भवं तथा । अर्शः-कुष्ठक्रिमिश्लेष्मशुक्रमेदोऽनिलापहम् । करञ्जारिष्टजौ तिक्तौ नात्युष्णौ च विनिर्दिशेत् । कषायं मधुरं तिक्तं सारणं व्रणशोधनं । अक्षातिमुक्तकाक्षोड़नारिकेरमधूकजम् । त्रपुषैर्वारुकुष्माण्डश्लेष्मान्तकपिलूद्भवं । वातपित्तहृदर्शोघ्नं श्लेष्मलं गुरु शीतलं । पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम् ।" अत्रि. १४अ. ।

**तैलकम्** । क्ली । अल्पपरिमाणतैले ।

**तैलकन्दः** । पुं । स्वनामख्यातमहाकन्दशाके । तैलकन्द इति भाषा । मं कं सूजिमुदिगड्डे । गुणाः—कटुरुष्णः वातापस्मारघ्नः विषघ्नः लौहद्रावी शोफघ्नः रसबन्धकारी च । तल्लक्षणं यथा— "अश्वारिपत्रसङ्काशः तिलबिन्दुसमन्वितः । सक्षि-

धाबख भूमिन्यस्तिलकन्दोऽतिविस्तृत: ॥" रा.नि. व.७। [व.१६।

**तैलकल्कज:** । पुं । तैलकिट्टे । शब्द । रा.नि.

**तैलकिट्टम्** । क्ली । पिण्याके । शब्द । गुणा:— कटुकं गौल्यं कफवातप्रमेहघ्नञ्च । रा.नि.व.१६।

**तैलचो(चौ)रिका** । स्त्री । तैलपायिकायां । श.र.।

**तैलद्रोणी** । स्त्री । तैलमानपात्रे । তেলের দোণা । तैलपूर्णकाष्ठपात्रे । आकण्ठमज्जनार्थं तैलपूर्णकाष्ठादिपात्रे । তেলের ডুনী । तत्र स्थितिगुणा:—वातव्याकुलरोगपङ्गुवाधिर्य्यभिन्नभग्नदधनवज्ञलम्बपृष्ठप्रचलितपवनगात्रकम्पशीवाभङ्गापतन्त्रकक्षयरुधिरजमूत्रकृच्छ्रवस्तिरोगेषु प्रशस्ता । राज.।

**तैलधान्यम्** । क्ली । तिलादिवीजवर्गे । यथा —तिलातसी च तोरी च विविधश्चापि सर्षप: । द्विधा राजी खाखसञ्च वीजं कौसुम्भसम्भवम् । एतानि तैलधान्यानि पठितानि च पूर्व्ववत् ॥ भर्क:।

**तैलनिर्यास:** । पुं । गन्धराजे । रा.नि.व.१२।

**तैलनी** । स्त्री । तिलकिट्टे । वै.निघ.।

**तैलपञ्चकम्** । क्ली । द्रव्यपञ्चकसिद्धतैले । यथा —"तैलं प्रसन्नागोमूत्रमारणालं यवाग्रजः । गुल्मजाठरमानाह्यपीतमेकत्र साधयेत् ॥" च.।

**तैलपर्ण:** (**क:**) । पुं, क्ली । ग्रन्थिपर्णवृक्षे । গেঁটেলা । भा. । चन्दनवृक्षे । वै.निघ.।

**तैलपर्णिकम्** । क्ली । तैलचन्दने । तत्तु शीतलं धवलं तिलपर्णतरुजातञ्च । भ. । हरिचन्दने । श्रम.।

**तैलपर्णी** । स्त्री । लवणखोव्याम्, देवदारुनिर्यासे । प.मु. । रक्तचन्दने । चन्दने । शिलारसे । मे.। [পোকা । रा.नि.व.१९।

**तैलपा** । स्त्री । पेचके । तैलपायिनि । তেলা-

**तैलपाक:** । पुं । तैलसाधने । তৈল পাক করা । See स्नेहपाकविधि: ।

**तैलपातनम्** । क्ली। सर्व्ववीजात्तैलनि:सारणे । यथा —"सुपक्वतालपत्राणां रसमादाय भावयेत् । समस्तवीजचूर्णं यदुक्तानुक्तं पृथक् पृथक् । आतपे मुचते तैलं साध्यासाध्यं न संशय: ॥" र.चि.७स्त।

**तैलपायिका** । स्त्री । तैलपायाम् । তেলা-পোকা, আরশোলা । श्रम.।

**तैलपिञ्ज:** । पुं । श्वेततिलकवृक्षे । वै.निघ.।

**तैलपिपीलिका** । स्त्री । तैलपायिपिपीलिकाभेदे । रा.नि.व.११।

**तैलपोत:** । पुं । तैलपिची । च.द.।

**तैलफल:** । पुं । इङ्गुदीवृक्षे । रा.नि.व.८। विभीतकवृक्षे । रा.नि.व.११ । तिलवृक्षे । वै.निघ.।

**तैलभाविनी** । स्त्री । जातीपुष्पवृक्षे । रा.नि. व.१०। [श.मा.।

**तैलमाली** । स्त्री । वर्त्याम् । শল্‌তে,বাতি ।

**तैलमूर्च्छा** । स्त्री । तैलस्य मूर्च्छनायां । তেল মূর্চ্ছা করা । यथा—"तैलं कृत्वा कटाहे दृढतरविमले मन्दमन्दानलैस्तत् तैलं निष्फेनभावं गतमिह हि यदा शैत्ययुक्तं तदैव । मञ्जिष्ठारात्रिलोध्रैर्जलधरनलिकै: सामलै:साक्षपथ्यै:, सूचीपुष्पाङ्घ्रिनीरैरुपहितमथितैर्गन्धयोगं जहाति ॥ तथा—तैलस्येन्दुकलांशिकी विकसिकाभागस्तु मूर्च्छाविधौ ये चान्ये त्रिफलापयोदरजनीह्रीवेरलोध्रान्विता: । सूचीपुष्पवटावरोहनलिकास्तस्याश्च पादांशिका दुर्गन्धं विनिहन्ति तैलमकृतं सौरभ्यमाकुर्व्वते ॥" भैष. । मूर्च्छाद्रव्यमानं यथा—मञ्जिष्ठा ५ तो. अन्येषाञ्च मात्रा मञ्जिष्ठाचतुर्थांशा इति ।

**तैलवीज:** । पुं । भल्लातकवृक्षे । रा.नि.व.११।

**तैलसाधनम्** । क्ली । कस्तूरिकायां । वै.निघ. । काकोल्यां । কাঁকলা । श्र.च.।

**तैलस्फटिक:** । पुं । तृणमणौ । हे.च.।

**तैलस्यन्दा** । स्त्री। भूमिकुष्माण्डे । काकोल्यां । श्वेतापराजितायाम् । वै.निघ.। [व.१२।

**तैलाग(गु)रु** । क्ली । दाहागुरुणि । रा.नि.

**तैलाङ्ग:** । पुं । वकुलवृक्षे । प.मु. ।

**तैलाटी** । स्त्री । वनषट्पदे । वरटायां । বোল্তা । हे.च.। [শোলা । जटा.।

**तैलाम्बुका** । स्त्री । तैलचोरिकायां । आर-

**तैलिनी** । स्त्री । तैलपायिकायाम् । रा.नि.व. १९। दशावर्त्याम् । श.मा.।

तैलिगाखा । स्त्री । तैलिकगन्धे । पानिघन्र । वै.च. ।

तैलीनम् । क्ली । तिलक्षेत्रे । रा.नि.व.२ ।

तैलु(ल्व)कः । पुं । लोध्रे । च.द.पाण्डु-चि. । चा.चि.६ब. ।

तैलवणपूगम् । क्ली । पूगफलविशेषे । तैलवत् इति भाषा । रा.नि.व.११ । See चक्कोटः ।

तैषः । पुं । पौषमासे । अम. ।

तोकः । पुं । बालके । त्रिका. ।

तोककः । पुं । चातकपक्षिणि । नीलकण्ठे । वै.निघ. । चातकपक्षिणि । अ.म. ।

तोक्मः (क्मः) । पुं । अपक्वयवे । हरितनिः-शूकयवद्रव्ये । जई । "तोक्मस्तदपरिहरितः ततः स्वल्पश्च कीर्त्तितः ।" सोऽतियवात्तीनगुणः । भा.पू.१भ.धा.व. । पल्लवायाङ्कुरे । आगवतम् ।

तोड़िमत्स्यः । पुं । मत्स्यविशेषे । ताड़ुई माछ । वै.निघ. ।

तोदः (नम्) । पुं, क्ली । सूचीव्यधनेनेव शूलेनेव वा व्यथायाम् । र.मा. । भा.म.१भ.आगन्तुव्र. । तीव्रवेदनायाम् । पुं । वायौ । वै.निघ. ।

तोदनः । पुं । फलशाकविशेषे । तत्फलं कषायं रूक्षं वातकफघ्नं । सु.सू.४६अ. । चक्षोर्या लघु संग्राहि स्निग्धं पित्ताग्निकरञ्च । च.सू.२७अ. ।

तोदपर्णी । स्त्री । तोयपर्ण्याम् । पाना । कुधान्यमिदं । सु.सू.४६अ. ।

तोमरधरः । पुं । वह्नौ । वै.निघ. ।

तोमरिका । स्त्री । सौराष्ट्रमृत्तिकायां । श.र. ।

तोयम् । क्ली । जले । रा.नि.व.१४ । बालके । बाला । वै.निघ. ।

तोयकामः । पुं । जलवेतसे । मद.व.५ ।

तोयकुम्भा । शैवाले । वै.निघ. ।

तोयगर्भः । पुं । नारिकेलवृक्षे । वै.निघ. ।

तोयजः । पुं । उशीरे । लामज्जके । वै.निघ. ।

तोयडिम्भः । पुं । घनोपले । धारा. ।

तोयदः । पुं । उशीरे । नागरमुस्तायाम् । वै.निघ. । मेघे । क्ली । घृते । मे. ।

तोयधरः । पुं । मुस्तायां । नागरमुस्तायाम् । सुनिषण्णकशाके । मेघे । मे. ।

तोयधिप्रियम् । क्ली । लवङ्गे । श.च. ।

तोयपर्णी । स्त्री । तृणधान्यविशेषे । गुणाः श्यामाकवत् । च.सू.२७अ. । वारिपर्ण्यां । पाना ।

तोयपाषाणजमलम् । क्ली । खर्परे । थापर । वै.निघ. । [नि.व.४ ।

तोयपिप्पली । स्त्री । कचटे । कँचड़ा । रा.

तोयपुष्पी । स्त्री । पाटलावृक्षे । श.मा. ।

तोयप्रष्ठा । स्त्री । पाटलावृक्षे । वै.निघ. ।

तोयप्रसादन(फल)म् । क्ली । कतकफले । निर्म्माली । र.मा. । [कुड़ । रा.नि.व.७ ।

तोयफला । स्त्री । वालुककर्कटिकायाम् । कँ-

तोयमञ्जरी । स्त्री । जलापामार्गे । वै.निघ. ।

तोयमलम् । क्ली । समुद्रफेने । वै.निघ. ।

तोयवती । स्त्री । अमृतवल्याम् । वै.निघ. ।

तोयवल्लिका (ल्ली) । स्त्री । अमृतस्रवालतायाम् । चित्रकूटे रुदन्तीति ख्यातायाम् । अमृतवल्ली लता । कारवेल्लके । उच्छे । रा.नि.व.३ । महादुग्धायाम् । रा.नि.व.२३ ।

तोयवल्लिः । पुं । जलापामार्गे । वै.निघ. ।

तोयवृक्षः । पुं । शैवाले । वै.निघ. ।

तोयशाला । स्त्री । वारिशालायाम् ।

तोयशुक्तिका । स्त्री । जलशुक्तौ । जल का-टोई । रा.नि.व.१६ ।

तोयशूकः । शैवाले । वै.निघ. ।

तोयसर्पिका । स्त्री । भेक्याम् । वै.निघ. ।

तोयसूचकः । पुं । मण्डूके । शब्दार्थकल्प. ।

तोयस्रावः । पुं । अक्ष्णः नेत्रतो जलस्रावरोगे । "अजलं पश्यतां अच्छ स्वच्छं स्रवति चक्षुषः । तोयस्रावीति तं विद्याद्विकारं मारुतात्मकम् ॥" अ.हृ.१०अ. । जलस्रावे ।

तोयाधिवासिनी । स्त्री । पाटलावृक्षे । प.मु. ।

तोयापामार्गः । पुं । जलापामार्गे । वै.निघ. ।

तोयोद्भवा । स्त्री । जलापामार्गे । वै.निघ.

**श्वासदष्टः** । पुं । कुकुरदष्टरोगभेदे । यथा— "योऽन्यश्वसर्पदष्टोऽपि शब्दसंस्पर्शदर्शनैः । जल-सन्त्रासमायान्तं दष्टं तमपि वर्जयेत् ॥" वा.उ.३८ अ. । [श.मा. ।

**त्रिंशत्पत्रम्** । क्ली । कुमुदपुष्पे । नालि फूल ।

**त्रिकम्** । क्ली । त्रिफलायां । त्रिकटुनि । त्रिम दे । (मुग्धबोधः) । कटिप्रान्तभागे । रा नि.व.१८। "त्रिकस्त्रकयोः पृष्ठवंशास्थ्योर्यः सन्धिस्तत्त्रिकं स-तम् ।" पुं । गोक्षुरके । शृङ्गाटके वै.निघ. ।

**त्रिकग्रहः** । पुं । वातरोगभेदे । त्रिकवेदना। च.सू.२० अ. । [मा.नि. ।

**त्रिकव्याधी** । त्रि । वेदनया त्रिकव्यापिनि ।

**त्रिकटः** । पुं । शृङ्गाटके । गोक्षुरके । श.र. ।

**त्रिकटु** । क्ली । शुण्ठीपिप्पलीमरिचेषु । तें शु-ण्ठि पिप्पलि मिरियालु । गुणाः—दीपनं श्वास-कासघ्नं चर्म्मरोगगुल्मनेहकफस्थौल्यमेदः श्लीपदपीन सादिकं हन्ति । भा. ।

**त्रिकटुगुड़िका** । स्त्री । प्रमेहपिड़कायाम् । त्रिकटु त्रिफला गुग्गुलु प्रत्येकं समभागः । गोक्षु रक्वाथेन मर्द्य ।

**त्रिकट्वादिवर्त्तिः** । स्त्री । नेत्ररोगाधिकारे वर्त्तिः । "त्रीणि कटूनि करञ्जफलानि द्वे रजनी सह सैन्धवञ्च । बिल्वतरोर्वरुणस्य च मूलं वारिचरं दधमं वदन्ति ॥" वारिचरः शङ्खनाभिः । रस.र. ।

**त्रिकण्ट(क)म्** । क्ली । कण्टकारी दुरालभा गोक्षुरकश्चेति त्रुपत्रये । सि यो.सन्निपातज्वरे । ह-स्तीगतिकारीदुरालभासु । रा.नि.व.२२ । गुणाः —"त्रिकण्टकानां क्वाथः स्यात्पित्तज्वरविनाशनः । मेहरोगं वमिञ्चैव मस्तकस्य रुजं तथा ॥" वै. निघ. । पुं । मत्स्यविशेषे । টাংরা মাছ, গাগর মাছ । चिकि. । गुणाः—पित्तघ्नः कफघ्नः वृष्यः लघुः दीपनश्च । राज.श्र. । गोक्षुरके । र.मा. । च.द.श्व.त्रि.यच्च त्रि.नागबलाघृते । शृङ्गाटके । गुड्च्याम् । कण्टकार्याम् । पृश्न्याम् । वै.निघ. । स्नुहीवृक्षे । তেকাঁটা সিজু । श.च. । कणभ-जातीयकीटविशेषे । सु.कल्प.८ अ. ।

**त्रिकण्टका** । स्त्री । त्रिवृतायां । তেউড়ী । श.द्र.१९ अ. ।

**त्रिकण्टकादिघृतम्** । क्ली । मूत्रकृच्छ्राधि-कारे घृतम् । गोक्षुरः एरण्डमूलं कुशमूलं काश-मूलं शरमूलं इक्षुमूलं उलुपमूलं शतमूली कर्क-टिबीजं एषां प्र. स्वरसः ४ श. । स्वरसाभावे गो-क्षुरैरण्डमूलकुशादिपञ्चमूलं प्र. १४ प. ५ तो. २ मा. ७ र. । जलं ४४ श. शे. ११ श. । शतमू-लीरसः कर्कटीरसः इक्षुरसः प्र. १३ प. २ तो. ५ मा. ६ र. घृतं ४ श. । पाके सिद्धे प्रक्षेपः पु-रातनगुड़ः । सा.कौ. । त्रिकण्टकादीनां मिलित्वा ४४ प. वारि ४४ श. शे ११ श. शतावर्य्यादीनां रसः मिलितः ५ श. । रस.र. । भा. । गव्यघृतं ४ श. गोक्षुरादीनां प्र. २ श. क्वाथार्थजलं प्र. १६ श. शे. ४ श. । शतावरीक्षुकुष्माण्डानां स्वरसः प्र. ४ श. । प्रक्षेपः शर्करा २ श. । भैष. । [निघ. ।

**त्रिकण्टाख्यः (कः)** । पुं । शृङ्गाटके । वै.

**त्रिकत्रयम्** । क्ली । समत्रिकटुत्रिफलात्रिमदे ।

**त्रिकत्रयादिलौहम्** । क्ली । पाण्डुरोगे हि-तम् । शोधितमण्डूरं १ प. गव्यघृतं १ प. शर्करा १ प. मधु १ प. कान्तलौहं १ तो. त्रिकटु त्रिफ-ला मुस्तं चित्रकमूलं विड़ङ्गं एषां प्र. १ तो. एषां क्वाथेन लौहपात्रे ताम्रपात्रे वा सप्त भावयित्वा ततः घृतेन च सप्त भावयित्वा रौद्रे शिशिरे च स्थाप्यम् । सा.कौ. ।

**त्रिकर्ष(र्षिक)म्** । क्ली । नागरातिविषामु-स्तासु । শুঁট, আতইচ, মুতা । "नागरातिवि-षामुस्ता त्रयमेतत्त्रिकर्षिकम् ।" रा.नि.व.२२ ।

**त्रिकशूलम्** । क्ली । वातव्याधिभेदे । कटि-प्রान्ते शूल । लक्षणं—"त्रिकस्त्रकयोः पृष्ठवंशा-स्थ्योर्यः सन्धिस्तत्त्रिकं स्मृतं । तत्र वातेन या पीड़ा त्रिकशूलं तदुच्यते ॥ कारयेद्वालुकास्वेदं त्रिकशू-ली प्रयत्नतः । खट्वाधस्तात्करीषाग्निं धारयेत्सततं नरः ॥" भा.म.२भ. ।

**त्रिकसन्धिः** । पुं । त्रिकस्त्रकयोः पृष्ठवंशास्थ्नोः सन्धिस्थाने । च.शा.७अ. । [७अ. ।

**त्रिकसन्ध्यस्थि** । क्ली । त्रिकास्थनि । च.शा.

**त्रिकूट(लवण)म्** । क्ली । सामुद्रलवणे । क-र्कच लवण । प सु । र.मा. । द्रोणीलवणे । रा. नि.व.६ ।

**त्रिकूटाञ्जनम्** । क्ली । काचलवणे । वै.निघ.।

**त्रिकूर्चकम्** । क्ली । व्रणविस्रावणार्थम् षडङ्गुलशस्त्रविशेषे । सु.सू.८अ. । "षडङ्गुलानि तथाष्टैव शस्त्राङ्गार्थे त्रिकूर्चकं । फलैरग्रमुखाकारैरङ्गुलैरन्वितं त्रिभिः । एकैकस्य फलस्यैषामन्तरं व्रीहिसम्मितं । वृत्तं पञ्चाङ्गुलायामङ्गार्थे रुचकभूषितं ॥" सु.टी.ड. । [त्रिधारहरी । वै.निघ. ।

**त्रिकोणम्** । क्ली । योनौ । शृङ्गाटके । पुं ।

**त्रिकोणकः** । पुं । गुग्गुलौ । रा.नि.व.८ ।

**त्रिकोणफलम्** । क्ली । शृङ्गाटके । पाणिफले । भा. पुं । त्रिधारहरे । वै.निघ. ।

**त्रिकोणा** । स्त्री । योनौ । शृङ्गाटकवृक्षे । वै. निघ. । [पुष्पे । शृ.च. ।

**त्रिखम्** । क्ली । कर्कटिकायाम् । वै.निघ. । त्र-

**त्रिगन्ध(क)म्** । क्ली । लवङ्गैलापत्रेषु । वै.निघ. २भ.यह.चि.दाडिमाष्टके । [रिकायां । मे. ।

**त्रिगर्त्ता** । स्त्री । मुक्तायाम् । वै.निघ. । घुर्घु-

**त्रिगुणम्** । क्ली । सत्त्वरजस्तमःसु ।

**त्रिगुणाख्यरसः** । पुं । वातव्याधौ रसः । गन्धकः १ भ. पारदः ८ भ. (मतान्तरे गन्धकः १ भ. पारदः २ भ.) वह्निना पक्वावताप्य सचूर्णं च तेन समभागं हरीतकीचूर्णं मिश्रयेत् । रस. कौ. । अन्यः शूले—टङ्कणं (সোহাগার খই) मृगशृङ्गस्वर्णगन्धकरससिन्दूरं समभागं आर्द्रकरसेन पिष्ट्वा वद्ध्वा गजपुटे पचेत् । मात्रा १ मा. अनु. मधु । र.सा.सं. ।

**त्रिजटा** । स्त्री । बिल्ववृक्षे । तन्त्रम् ।

**त्रिजात(क)म्** । क्ली । मिलिततुल्यलवङ्गैलापत्रेषु । দারুচিনি, এলাচ, তেজপত্র সমভাগ । रा.नि.व.२२ । तें दक्षिणीचक्क, एलक्कलु, आकुपत्रौक । "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥" च.प्र.३ख. । गुणाः—"तद्द्वयं रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् । लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ॥" भा. ।

**त्रिणम्** । क्ली । तृणे । श्र.र. । [रोरी.चि. ।

**त्रितयम्** । क्ली । सन्निपाते । भा.म.४भ.त्रि-

**त्रिदला** । स्त्री । गोधापदीलतायाम् । গোঁয়ালিয়া লতা । क.मु. । रक्तालम्बालुकायाम् । वै.निघ. । यष्टिमधुनि । अ.ह.१२अ. । [च. ।

**त्रिद(द्रा)लिका** । स्त्री । चर्मकषायाम् । शृ.

**त्रिदशगोपः** । पुं । इन्द्रगोपकीटे । वै.निघ. ।

**त्रिदशदारु** । क्ली । देवदारुकाष्ठे । चि.क.क. क्षीरी.चि. । [व.१० ।

**त्रिदशमञ्जरी** । स्त्री । तुलसीवृक्षे । रा.नि.

**त्रिदशवरभोज्यम्** । क्ली । घृते । चि.क. क.केशररसे ।

**त्रिदशसर्षपः** । पुं । देवसर्षपवृक्षे । वै.निघ. ।

**त्रिदशाहारः** । पुं । अमृते । हला. ।

**त्रिदिवा** । स्त्री । एलायां । गङ्गायां । वै.निघ. ।

**त्रिदिवोद्भवा** । स्त्री । स्थूलैलायाम् । বড় এলাচ । रा.नि.व.६ ।

**त्रिदिवोद्भूता** । स्त्री । सूक्ष्मैलायाम् । वै.निघ. ।

**त्रिदीप्यम्** । क्ली । यमानीत्रये, यमानी खोरासानी अजमोदा च । वै.निघ.२भ.अर्शः चि.अभयारिष्टके ।

**त्रिदोषजः** । त्रि । त्रिदोषजनिते ।

**त्रिदोषदावानलकालमेघः** । पुं । सन्निपातज्वरे रसः । हरितालपुटितवङ्गं मनःशिलापुटितशीषं शीषपुटितस्वर्णरौप्यताम्राणि प्रत्येकं पुनः हिङ्गुलपुटितानि कृत्वा प्र. समभागी ग्राह्यः एतत्समष्टितुल्यः पारदः गन्धकः तुल्यकश्च त्रिगुणः (मतान्तरे उक्तद्रव्याणां प्र. एकैको भागः, गन्धकतुल्ययोः द्वौ भागौ) एकत्र निम्बुकरसेन सम्मर्द्य गोलकाश्च कृत्वा यथाविधि पुटेत् । अथ तत्र तुल्यभागं पुनः गन्धकं दत्त्वा चित्रकरसेन मर्दयेत् । तदनु षोडशांशं विषं सम्मिश्र्य पुनः तद्रसत्रिकं कृत्वा पचेत् । अथ रोहितमत्स्यपित्तेन भावयित्वा रक्तिद्वयमिता वटी कार्य्या ।

**त्रिदोषदावानलरसः** । पुं । ज्वराधिकारे रसः । अर्कमूर्च्छितरसः यदि ताम्रपात्रे अर्कक्षीरादिरसैः पुनरपि भावितः स्यात् तदा त्रिदोषदावानलो भवति । भैष. । [त्रिवृद्धि । वै.निघ. ।

**त्रिदोषरोहिणी** । स्त्री । वैद्योविकारकथ-

**त्रिदोषसमम्** । क्ली । समदोषत्रये । रा.नि.व.२२ ।

**त्रिदोषसम्भव:** । पुं । सन्निपाते । वै.निघ. ।

**त्रिदोषहारी (रस:)** । पुं। ज्वराधिकारे रस: । "बलिशिलातालताम्रतुत्थोदधिमलटङ्गनिकुम्भजाम्रताख्यं । दलितं महिषपित्तत्रिधा स्याद्रुधिरगत: शिरसि त्रिदोषहारी ॥" र चि.६ष. ।

**त्रिधातु:** । पुं । गणपतौ । त्रिका. । क्ली । धातुत्रये ।

**त्रिधारक:** । पुं । स्नुहीभेदे । তেকাঁটা মনসা । गुणा:—स्नुहीसमो विशेषात् रसस्लिद्धिकर: । गुच्छतृणे । रा.नि.व.८ ।

**त्रिधारकाण्डवल्ली** । स्त्री । त्रिधारकारवेल्लाम् । তেশিরে উচ্ছে । वै.निघ. ।

**त्रिधारस्नुही** । स्त्री । त्रिधारवज्रीवृक्षे । তেকাঁটা সিজু । रा.नि.व.८ ।

**त्रिनेत्ररस:** । पुं। पित्तकासे रस: । ताम्रभस्म अभ्रभस्म तीक्ष्णलौहभस्म समभागम् । कासमर्द्दतालाम्लवेतसरसै: दिनैकं मर्द्दयित्वा द्विगुञ्जा वटी कार्य्या । रस.र. । अपर: परिणामशूले—टङ्गणं (সোহাগার খই) मृगशृङ्गं स्वर्णं रससिन्दूरम् एषां प्र. समभागं दिवा आर्द्रकरसेन पिष्ट्वा गजपुटेन पचेत् । घृतमधुभ्यां सेव्यम् । रस.र. अन्य: शोथे—पारद: गन्धक: भृष्टटङ्गणं ताम्रं लौहम् एषां प्र. समभागं आर्द्रकरसेन मर्दयित्वा लघुपुटे पचेत् । अनुपानं—एरण्डरस: अपामार्गरस: । अन्य: ज्वाधिकारे—पारदगन्धकताम्राणि समभागानि निर्गुण्डीरसै: दिनैकं मर्दयित्वा शुष्कीकृत्य मूषामध्यगतं वालुकायन्त्रे प्रहरत्रयं पचेत् । पर्णखण्डेन सेव्य: । र.चि.६ष. । अपर: सन्निपातज्वरे—पारदगन्धकताम्राणि समभागानि द्रव्यत्रयतुल्यै: गव्यदुग्धै: शिग्रुरसैश्च दिनं सम्मर्द्य गोलकं कृत्वा खरातपे शुष्कीकृत्य च अन्धमूषागतं वालुकायन्त्रे प्रहरत्रयं पचेत् । र.चि.६ष. । अन्यच्च सन्निपातज्वरे—रस: १ भ. गन्धक: १ भ. ताम्रं चतुर्थांश सर्व्वतुल्येन गव्यदुग्धेन निर्गुण्डीरसेन शिग्रुरसेन च खरातपे दिनैकं मर्दयित्वा शोषयेत् । भा. । अपर: ज्वरघ्ने—नारिकेलस्वर्णमाक्षिकं हिङ्गुलं लौहं पारद: वङ्गं गन्धक: ताम्रम् अभ्रं समुद्रफेन: मिरिकलिका स्वर्णं शीसं चित्रकमूलं शिग्रु त्रिकटु त्रिफला शिग्रुबीजम् अजमोदा (রাঁধুনী) यमानी पिप्पलीमूलं भार्गी (বামনহাটী) कुमुनं जीरकद्वयजीरके एषां प्र. समभाग: आर्द्रकरसेन मर्द्य: । रस.र. । अपर: मूत्रकृच्छ्रे रसगन्धकवङ्गानां प्र. समभाग: । दूर्व्वायष्टिमधुगोक्षुरशाल्मलिरसैर्भावयित्वा भूधरयन्त्रे पक्त्वा च पुनर्भावयेत् । मा. २ र. । र.सा.सं. ।

**त्रिनेत्रा (त्री)** । स्त्री । वाराहीनामकन्दशाके । रा.नि.व.७ ।

**त्रिपटु** । क्ली। विड़सैन्धवकाचलवणेषु। वै.निघ.

**त्रिपत्र:** । पुं । कच्चालकन्दभेदे । रा.नि.व.७ । त्रिदलविल्ववृक्षे । रा.नि.व.११ । क्ली । त्रिदलबिल्वपत्रे ।

**त्रिपत्रक:** । पुं । पलाशवृक्षे । हे.च. ।

**त्रिपदा** । स्त्री । हंसपदीलतायाम् । रा.नि.व.५ । रक्तलज्जालुकायाम् । वै.निघ. ।

**त्रिपदी** । स्त्री । हंसपदीलतायाम् । ছোট গোয়ালিয়া লতা । प.मु. । रा.नि.व.५ ।

**त्रिपर्ण:** । पुं । पलाशवृक्षे । रा.नि.व.१० ।

**त्रिपर्णा** । स्त्री । वनकार्पास्याम् । বন কাপাস । पृश्निपर्ण्यां । চাকুলিয়া । र.मा. । वनगङ्गायाम् । वै.निघ. । तिलपर्णिकाकन्दे । रा.नि.व.७ । शालपर्ण्याम् । भा.म.ख.१भ. ।

**त्रिपर्णिका** । स्त्री । यासवृक्षे । দুরালভা । रा.नि.व.४ । स्वनामख्यातकन्दशाकविशेषे । तिलपर्णी सूरेङ्गल इति कोङ्कणदेशे अनूपदेशे च प्रसिद्धा । তিলকন্দ । तल्लक्षणं यथा—"अश्मारिपत्रसङ्काश: तिलविन्दुसमन्वित: । सस्निग्धाधस्थभूमिस्थ: तिलकन्दोऽतिविस्तृत: ॥" गुणा:—मधुरा शीता श्वासकासघ्नी पित्तशमनी विषघ्नी व्रणघ्नी च । रा.नि.व.७ । तच्छाकगुणा:—शार्कं गुरु च रुक्षञ्च प्रायो विष्टभ्य जीर्य्यति । मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम् ॥ च.सू २७अ. ।

**त्रिपर्णी** । स्त्री । शालपर्ण्याम् । भा. । वनकार्पास्याम् । प.मु. । "त्रिपर्णी कासघ्नीविल्ले: ।" मूर्व्वायाम् । रा.नि.व.३ । माषपर्णिकायाम् । वै.

निघ. । विपर्णीकन्दे । तिलकन्द । रा.नि.व.७ ।

**त्रिपत्रा** । स्त्री । त्रिफलायाम् । भ.वि. ।

**त्रिपात्** । पुं । ज्वरे । वैद्यकम् ।

**त्रिपाद:** । पुं । ग्रन्थिपर्णमूले । वै.निघ. ।

**त्रिपादिका** । स्त्री । हंसपादीलतायाम् । रा.नि.व.५ ।

**त्रिपादी** । स्त्री । हंसपादीलतायां, कीटमारिकायाम् । वा.सू.१५अ.विदार्यादि: । "हे पयस्ये गोपसुता त्रिपादी ।" रक्तलज्जालुकायां । वै निघ. ।

**त्रिपिबा** (न्) । पुं । लम्बकर्णे छागे । वै.निघ. ।

**त्रिपुट:** (**क:**) । पुं । तालके । श.र. । गोक्षुरक्षुपे । प.मु. । मटर इति ख्यातद्विदलक्षुपे । र.मा. । शिम्बीधान्यभेदे । (खेसारि-कलाइ । हिं खेसारि । गुणा: —"त्रिपुटी मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहक: शीतलस्तथा । किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपन: ॥" भ.पू.१भ.धा.व । "रूक्षो विशोषी मधुर: प्रदिष्ट: खादुं करोत्यखिगतं बलिष्ठं । विबन्धशूलभ्रमशोककर्ता दाहार्शसङ्ग्रोगविकारकारी ॥" च. चि.१५च. । तत्सूपगुणा: —"त्रिपुटानां कलायानां सूप: स्वादुश्च वातल: । आध्मानशूलजनक: पित्तास्रकफनाशन: ॥" द्रव्यगुण: ।

**त्रिपुटकी** । स्त्री । श्वेतत्रिवृति । वै.निघ. ।

**त्रिपुटा** । स्त्री । अरुणत्रिवृति । रा.नि.व.६ । कर्णस्फोटालतायाम् । रा.नि.व.३ । त्रिसन्धायै । लघुचणके । प.मु. । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा.नि.व.६।२३ । वार्षिकमल्लिकायाम् । मल्लिकाविशेष । रा.नि.व.१०।२३ । जातीद्वये । गोक्षुरके । कुलत्थिकायाम् । वै.निघ. ।

**त्रिपुटी** (इन्) । पुं । एरण्डे । श.मा. । स्त्री । त्रिवृति । তেউড়ি । च.टी.भ. ।

**त्रिपुटीफल:** । पुं । एरण्डद्वये । हारा. ।

**त्रिपुरभैरविका** । स्त्री । रुद्रजटायाम् । भाँट इति भाषा । सैव पार्थिवभक्तवल्ल्याम् ।

**त्रिपुरभैरवरस:** । पुं । ज्वरे रस: । शुद्धविषं १ भ. टङ्कणक्षार: (সোহাগার খই) २ भ. गन्धक: २ भ. हिङ्गुल (मतान्तरे ताम्र) ४ भ. दन्तीबीजं ५ भ. । दन्तीक्वाथेन मर्दयेत् । मात्रा १ र. । अनु. आर्द्रकरस: । रस.र. । रस.को. । अन्य: यथा—विषं १ भ. पिप्पली ३ भ. मरिचं ४ भ. ताम्रं ५ भ. हिङ्गुलं ६ भ. आर्द्रकरसेन मर्दयेत् । मात्रा ॥० र. । भै.म.ज्व.चि. ।

**त्रिपुरमल्लिका** (**मालिका**) । स्त्री । वार्षिकमल्लिकायाम् । रा.नि व.१० । त्रिका. ।

**त्रिपुषा** । स्त्री । त्रपुसायाम् । कृष्णत्रिवृति । श. च. । क्ली । त्रपुसफले । त्रपुसीबीजे । कुष्माण्डे ।

**त्रिपुष्पा** । स्त्री । पतिवल्लायाम् । वै.निघ. ।

**त्रिफला** (**ली**) । स्त्री । Three myrobalans. फलत्रये । ত্রিফলা । सा चतुर्धा महती ह्रस्वा सुगन्धा मधुरा च । तयोर्महती आमलकादीनां प्रत्येकसमभागा: । तदुक्तं —"पथ्या विभीतकं धात्री त्रिफला महती स्मृता ।" सि.यो.पानीयकल्याणघृते । आमलकहरीतकीविभीतकेषु । रा.नि. व.२२ । द्वितीया —काश्मर्यमृद्वीकापरूषकफलेषु । গাম্ভার ফল, কিস্মিস্, পরুষ ফল । "ह्रस्वा काश्मर्यमृद्वीकापरूषकफलानि च ।" श्रीकण्ठ: । त्रिफलायां द्रव्यत्रयं समभागं देयम् । एषा योगेषु प्रधाना । गुणा:—दीपनी पित्तकफघ्नी दृष्टिवर्द्धनी रुच्या मलशोधनी मेहकुष्ठविषमज्वरनाशिनी च । भा.पू.१भ. । महाकुष्ठविषमज्वरपित्तघ्नी च । राजव: । सुगन्धत्रिफला यथा—जातीफललवङ्गपूगे षु । मधुरत्रिफला यथा —द्राक्षादाडिमखर्जूरे षु ।

**त्रिफलाघृतम्** । क्ली । पाण्डुरोगे । गव्यघृतं ४ श. । पाकार्थं गोमूत्रं १६ श. । कल्कार्थं त्रिफला दन्तीत्रिवृतमूलवचाकम्पिल्ल (কম্লাগুঁড়ি) मिलित शराव: । रस.र. । इदं स्वल्पम् ।

**त्रिफलाद्यघृतम्** । क्ली । नेत्ररोगाधिकारे घृतम् । गव्यघृतं ४ श. । क्वाथार्थं—त्रिफलारस: १२ श. स्वरसाभावे त्रिफला २ श. जलं ४८ श. शे. १२ श. । दुग्धं ४ श. । कल्कार्थं—त्रिफला त्रिकटु यष्टिमधु कटुकी पुण्डरीकं सूक्ष्मैला विडङ्गं नागेश्वरं नीलोत्पलम् अनन्तमूलं श्यामालता रक्तचन्दनं हरिद्रा दारुहरिद्रा एषां प्र. १तो. । शा.को. । भा. । इदं मध्यमम् । अपरं—गव्यघृतं ४ श. । क्वाथार्थं—त्रिफला २ श. वारि १६ श. शे. ४श. । भृङ्गराजरस: ४ श. वासारस: ४ श. । छागदुग्धे

चामामूलं २ श. वारि १६ श. शे. ४ श. शतमूलीरसः ४ श. छागदुग्धं ४ श. गुडूचीरसः ४ श. अभावे क्वाथः आमलकीरसः ४ श.। कल्कार्थं — पिप्पली शर्करा द्राक्षा हरीतकी आमलकी बिभीतकं नीलोत्पलं यष्टिमधु काकोली गाम्भारीत्वक् कण्टकारी एषां मिलित्वा शरावः (১ সের)। शेष.। रस.र.। इदं हृत्। स्वल्पं यथा — घृतं ४ श.। क्वाथार्थं—त्रिफला ८ श. वारि ६४ श. शे. १६ श.। गव्यदुग्धं ४ श.। सम्यायां तिमिरनाशार्थं पेयम्। अन्यत् — घृतं ४ श. शतावरीक्वाथः १६ श.। कल्कार्थं — त्रिफला यष्टिमधु १ श.। पाकशेषे मधु प्रक्षेपः १ श.। अन्यत् योनिरोगे — घृतं ४ श.। कल्कार्थं — त्रिफला क्षिप्रशीघ्रं गुडूची पुनर्नवा श्योनाकः हरिद्रा दार्वी रास्ना अश्वगन्धा शतावरी एषां मिलितशरावः (১ সের)। गव्यदुग्धं १६ श.। भा.। [वृ.। भूरिप्र.।

**त्रिवलिः** । स्त्री। जठरावयवविशेषे। পেটের

**त्रिवलीकम्** । क्ली। गुदद्वारि, पायौ। हे.च.।

**त्रिभङ्गी (ण्टी) (ण्डी)** । स्त्री। त्रिवृतायां। তেউড়ী। प.मु.। "सशर्करा कामलिनां त्रिभण्डी हिता।" सि.यो.कास-चि.। अ.द.कास-चि.। सु.सू.४४अ.। चि.१७अ.।

**त्रिभण्ड(द्र)म्** । क्ली। मैथुने, सुरते। त्रिका.।

**त्रिमण्डला** । स्त्री। लूतासाध्यलूताविशेषे।

**त्रिमदः** । पुं। विडङ्गमुस्तचित्रकेषु। "विडङ्गमुस्तचित्रैश्च त्रिमदः।" प.प्र.३ख.त्रिफलवलौहे।

**त्रिमदहितयम्** । क्ली। त्रिमदस्त्रिफला चेति त्रये। प्रयोगा.यक्ष्म-चि.क्याादिलौहे।

**त्रिमधु** । क्ली। मधुरत्रये, मधुघृतशर्करासु। रा.नि.व.२२। गुणाः—"मधुरत्रितयञ्चाग्निदीपनं कान्तिदायकं। त्रिदोषं रक्तपित्तं तृष्णाञ्चैव विनाशयेत्॥" वै.निघ.।

**त्रिमल्लभद्रः** । पुं। योगतरङ्गिण्युक्ते। [मु.।

**त्रियष्टिः** । स्त्री। पर्पटके। ক্ষেৎপাবড়া। प.

**त्रियामा** । स्त्री। हरिद्रायाम्। रा.नि.व.६। नील्यां। कृष्णत्रिवृति। उज्ज्वा.।

**त्रिलवणम्** । क्ली। सौवर्चलसैन्धवविडानीति लवणत्रये। चि.यो.सान्निपातिकज्वरे। "मातुलुङ्गद्रवरसं त्रैःपिलवणान्वितम्।" अ.द.ज्व.चि. नस्ये। रा.नि.व.२२।

**त्रिलिङ्गगतिः** । स्त्री। त्रिदोषजनाड्यां। भा. म.४भ.सु.रो.चि.। "त्रिलिङ्गगतिसौत्रिरी।"

**त्रिलौहकम्** । क्ली। स्वर्णरजतताम्रेषु। सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलौहकं। रा.नि.व.२२। गुणाः — त्रिलौहस्य गुणाः प्रोक्ताः पञ्चलौहसमा गुणैः। वै.निघ.। [च। सु.चि.२अ.।

**त्रिवर्गः** । पुं। त्रिकटुनि, त्रिफलायां, त्रिमदे

**त्रिवर्गहितयम्** । क्ली। त्रिफलात्रिमदे। त्रिफला ও ত্রিমদ। रस.र.कषायलौहे।

**त्रिवर्णकम्** । क्ली। गोक्षुरके। त्रिफलायां। त्रिकटुके ष.। त्रिजातके। सु.सू.४४अ.।

**त्रिवर्णकृत्** । पुं। शरटे। কাঁকলাস। वै.निघ.।

**त्रिवल्ली** । स्त्री। इन्दीवरायां। वै.निघ.।

**त्रिविक्रमरसः** । पुं। अश्मर्य्यधिकारे रसः। ताम्रभस्म तुल्येन छागदुग्धेन पक्वा, छागदुग्धपक्वताम्रभस्म १ तो. पारदः १ तो. गन्धकः १ तो. निर्गुण्डी(নিশিন্দা)रसेन दिनं मर्द्दयित्वा गोलकं कृत्वा वालुकायन्त्रे दिनैकं पचेत्। शीते उद्धृत्य द्विगुञ्जा मात्रा देया। रस.र.।

**त्रिविधायतनम्** । क्ली। इन्द्रियार्थातियोगकर्म्मातियोगकालातियोगरूपेषु रोगाणां त्रिविधकारणेषु। च.सू.११अ.। [नि.व.१६।

**त्रिवीजः** । पुं। श्यामाके। শ্যামা ধান। रा.

**त्रिवृतादिगणः** । पुं। तदाद्यधोभागहरद्रव्यसमूहे। यथा—"त्रिवृता श्यामा दन्ती द्रवन्ती (ইন্দুরকাণী) सप्तला (চামরকষা) शङ्खिनी (শ্বেত বুহ্না) विषाणिका (কর্কটশৃঙ্গী, মেড়াশিঙে) गवाक्षी (গোমুক, রাখালশশা) छगलाङ्घ्री (বিন্নতাড়ক) स्नुक् (মনসা সিজু) सुवर्णक्षीरी (ওষধিবিশেষ বা শিয়ালকাঁটা) चित्रकः किङ्किणी (আপাং) कुशः काशः तिल्वकः कम्पिल्लकः (কমলাগুঁড়ী) पाटला पूगः हरीतक्यामलकं बिभीतकं नीलिनी (নীল) चतुरङ्गुलः (সোঁদাল) एरण्डः पूतिकः (করঞ্জ) महावृक्षः (তেঁকাঁটা সিজু) सप्तच्छदार्कज्योतिष्मत्यश्चेति अधोभागहराणि।" सु.सू.३८अ.।

समयवक्षारसर्जिक्षारटङ्कणक्षारेषु । कामाग्निसन्दी-पनरसे । च.द. । [लेथाड़ा गाछ । र.मा. ।

**त्रिखुर:** । पुं । श्वेतकोकिलाक्षवृक्षे । श्वेत कु-

**त्रिखुरी** । स्त्री । गोक्षुरे । वै.निघ.२भ.र.चि. चि.कुष्माण्डावलेहे ।

**त्रुटि: (टी)** । स्त्री । सूक्ष्मैलायाम् । छोट ए-लाच । रा.नि.व.६। वा.सू.१५ अ.मुस्तादि: । "कुष्ठं त्रुटी हैमवती ।" चि.क्र.क.षड्भौ.चि. । च.द.रा. य.चि.खदिराद्यचूर्णे । "त्रुटिसङ्ख्या ।" कट्फले । वै.निघ. । [मा. ।

**त्रुटिवीज:** । पुं । कच्वीवृक्षे । कचु गाछ । श्र.

**त्रुटीद्वयम्** । क्ली । सूक्ष्मैलायां स्थूलैलायाञ्च । वा.सू.१५ अ. शिरोविरेचने । "त्रुट्यौ पृथ्वीका शोधयन्त्याशु कफमारुतम् ।" [क्लमशूले ।

**त्रैकटु** । क्ली । त्रिकटुके । चि.क्र.क.स्त्री.चि.म-

**त्रैफलम्** । क्ली । त्रिफलायाम् । श्र.चि. ।

**त्रैलोक्यचिन्तामणिरस:** । पुं । ज्वराधिकारे रस: । पारद: हीरकं स्वर्णं रौप्यं ताम्रं लौहम् अभ्रं मुक्ता गन्धक: शङ्खभस्म प्रवालं हरितालं मन:शिला प्र. समभागं चित्रकमूलक्वाथेन ७ दिनानि भावयेत् । अर्कनिर्यासेन (आकन्देर आठा) निर्गुण्डीरसेन भल्लरसेन स्नुहीक्षीरेण (मनसार आठा) च प्र. ३ दिनानि भावयित्वा पीतकपर्द्दकाभ्यन्तरे दत्त्वा अर्कक्षीरेण टङ्कनं सम्मर्द्य तेन कपर्द्दकमुखानि संलिप्य अथ कपर्द्दकानि भाण्डमध्ये संस्थाप्य भाण्डमुखं रुद्ध्वा वालुकायन्त्रेण पचेत् । शीते सचूर्णं चूर्णतुल्यं रससिन्दूरं तच्चतुर्थांशं वैक्रान्तञ्च सम्मिश्र्य शिग्रुरसेन ७ चित्रकमूलरसेन च भावनाद्वयं देयम् । मात्रा ४ र. । भैष. ।

**त्रैलोक्यडम्बररस:** । पुं । नवज्वरे हित: । पारद: गन्धक: ताम्रं पिप्पली जैपालं कटुकी हरीतकी त्रिवृत् मधुरतिन्दुकफलं, एषां प्र. समभागं स्नुहीक्षीरेण मर्द्दयेत् । मात्रा २ गुञ्जा । अनुपानं मधु । अन्य:—रस: २ भ. गन्धक: ४ भ. अभ्रचित्रकविडङ्गगुडूचीसारशोधकक्कृष्णजीरकत्रिकटुसैन्धवयवक्षाराणां प्र. १भ. निर्गुण्डीवीजपूररसेन मर्दयेत् । मात्रा १ र. । घृतेन देय: । अन्य: वातव्याधौ—हीरकभस्म स्वर्णं विषं वङ्गभस्म काकलीरं

एषां प्र. १ तो. अभ्रभस्म ४ तो. रससिन्दूरं ७ तो. कुमारीरसेन मर्द्य: । र.सा.सं. ।

**त्रैलोक्यविजया** । स्त्री । भङ्गाख्यवृक्षे । सिद्धि गाछ । श्र.च. ।

**त्रैलोक्यविजयापत्रम्** । क्ली । विजयापत्रे । सिद्धि । (मदनमोदके, लक्ष्मीविलासरसे) ।

**त्रैलोक्यसुन्दररस:** । पुं । उदररोगे रस: । पारद: १ तो. गन्धक: २ तो. अभ्रं सैन्धवं विषं कृष्णजीरकं विडङ्गं गुड़ूचीसार: वचा यवक्षार: प्रत्येकं ॥० तो. निर्गुण्डीरसेन वीजपूररसेन च दिनं मर्दयित्वा शोषयेत् । मात्रा २ गुञ्जा । घृतेन सेव्य: । रस.चि.८अ. । अन्य:—रस: १ मा. गन्धक: २ मा. कज्जलीकृत्य कुटजतालमूलीधुस्तूरकेशराज (केशुते)हस्तिघोषक(धुन्दुल)जयन्तीमण्डूकपर्णीणां (थुलकुड़ि) प्र. शाणमितपत्ररसेन खल्लयेत् । र.सा.सं. । [See सोम: ।

**त्रैष्टुभ:** । पुं । सोमलताभेदे । सु.चि.२९अ. ।

**त्रोटक:** । पुं । श्लेष्मप्रकृतिकीटविशेषे । See कीट: । सु.कल्प.८अ. ।

**त्रोटि: (टी)** । स्त्री । पक्षिचञ्च्वां । कट्फले । पचिपि । मत्स्यभेदे । मे. । [रा.नि.व.२२ ।

**त्राञ्जनम्** । क्ली । अञ्जनत्रितये । सूर्मात्रय ।

**त्र्यम्बकम्** । क्ली । ताम्रे । तामा । रा.नि.व. १३ । [व.११ ।

**त्र्यम्बकफल:** । पुं । नारिकेलवृक्षे । रा.नि.

**त्र्यष्टकम्** । क्ली । प्रसाधनार्थं जलरक्षणाधारविशेषे । सु.सू.४५अ. । पुं । राजिकायाम् । श्वेत सरिषा । रस.र.सू.चि. ।

**त्र्यस्र:** । पुं । त्रिपुटरूपे । मटर गाछ । र.मा. । व्याघ्रनखे । नखीविशेष । रा.नि.व.१२ । स्त्री । शुक्लत्रिवृति । वै.निघ. । वार्षिकमल्लिकायाम् । मल्लिका । रा.नि.व.१० ।

**त्र्यस्रफला** । स्त्री । शल्लकीवृक्षे । वै.निघ. ।

**त्र्याहिक:** । पुं । ज्वरविशेषे । यो ज्वर: तृतीये दिने भवति । "तृतीयेऽह्नि तृतीयक:" इति । मा. नि. । [वै.निघ. ।

**त्र्यूषफल: (ला)** । पुं स्त्री । [illegible]

**त्र्यूषर:** । पुं । नागवीटे । त्रिका. ।

**त्र्यु(त्र्यू)ष(ण)म्** । क्ली । त्रिकटुनि । शुँठ पिपुल मरिच । रा.नि.व.२१ । "पिप्पली शृङ्गवेरञ्च मरिचं त्र्यूषणं विदुः ।" प.प्र.१ख. ।

**त्र्यूषणाद्यघृतम्** । क्ली । यक्ष्मणि घृतम् । गव्यघृतं ८ प. । कल्कार्थं—त्रिकटु-त्रिफला-मिलितं पलं गुड़पलं जलं ३२ प. । "त्र्यूषणत्रिफलाकल्कं बिल्वमात्रे गुड़ात् पलं । सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानिलः पिबेत् ॥" च.चि.१८अ. । अन्यच्चापि—"त्र्यूषणं त्रिफलां द्राक्षां काश्मर्य्याणि च पक्वकम् । द्वे पाठे सरलं व्याघ्रीं स्वगुप्तां चित्रकं शटीं । ब्राह्मीं तामलकीं मेदां काकनासां शतावरीं । त्रिकण्टकां विदारीञ्च पिष्ट्वा कर्षसमं घृताम् । प्रस्थं चतुर्गुणक्षीरं सिद्धं कासहरं पिबेत् ॥" कल्कार्थं--त्रिकट्वादीनां प्र.२ तो.दुग्धं १६श.घृतं ४ श. । च.चि.२२अ. ।

**त्र्यूषणाद्यमण्डुरम्** । क्ली । पाण्डुरोगे । त्रिकटु त्रिफला मुस्ता विड़ङ्गं चवी (चई) चित्रकमूलं दारुहरिद्रा गुड़त्वक् स्वर्णमाक्षी पिप्पलीमूलं देवदारु, एषां प्र.चूर्णं २ प. चूर्णसमष्टिद्विगुणं शुद्धमण्डुरं गोमूत्रं मण्डुरात् ८ गुणम् । गोमूत्रे मण्डुरं पक्त्वा घनीभूते चूर्णप्रक्षेपो देयः । भैष. ।

**त्र्यूषणाद्यलौहम्** । क्ली । स्थौल्याधिकारे । त्रिकटु त्रिफला चव्यं काचलवणं (करकच) सैन्धवलवणं विटलवणं सौवर्च्चललवणम् (सचल) अभ्रं सोमराजी लौहभस्म, एषां प्र.समभागः । रस.र. ।

**त्र्यूषणम्** । क्ली । त्र्यूषणे । वै.निघ. ।

**त्वक्** । स्त्री । वल्कले । छाल । मे. । इन्द्रियविशेषे । स्पर्शेन्द्रिय । गुड़त्वचि । दारुचिनि । रा.नि.व.६ । तालीशपत्रे । वै.निघ. । चर्म्मणि । चामड़ा । यथा—"क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत् । पच्यमानस्य शुक्रस्य रजसस्तथा त्वचः । पूर्व्वावभासिनी तासां सिध्मस्थानञ्च सा स्मृता ॥ शरीरे षट् त्वचः—तद्यथा—उदकधरा असृग्धरा सिध्मकिलाससम्भवाधिष्ठाना कुष्ठसम्भवाधिष्ठाना अलजीविद्रधिसम्भवाधिष्ठाना यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठाय अरूंषि जायन्ते पर्व्वसन्धिषु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीति षट् त्वचः एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ।" च.शा.७अ. । सुश्रुतस्तु सप्त त्वच आह । १मवभासिनी २ लोहिता ३ श्वेता ४ ताम्रा ५ वेदिनी ६ रोहिणी ७ मांसधरा चेति । तत्र १मा सर्व्ववर्णानवभासयति, व्रीहेः अष्टादशभागप्रमाणा सिध्मपद्मकाधिष्ठाना । २या व्रीहेः षोड़शभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना । ३या द्वादशभागप्रमाणा चर्म्मदलाधिष्ठाना । ४र्थी अष्टभागप्रमाणा किलासकुष्ठाद्यधिष्ठाना । ५मी पञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना । ६ष्ठी व्रीहिप्रमाणा ग्रन्थ्याद्यधिष्ठाना । ७मी व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यधिष्ठाना च । सु.शा.४अ. ।

**त्वक्खण्डुर:** । पुं । व्रणे । हारा. । [मद.चि. ।

**त्वक्कन्द:** । पुं । वनशूरणे । बुनो ओल । भैष.

**त्वक्छद:** । पुं । चोरीशङ्खचे । क्षीरकञ्चुकी । र.मा. । [चर्म्मकीले । वै.निघ. ।

**त्वक्तरङ्ग: (क:)** । पुं । वल्याम् । रा.नि.व.१८ ।

**त्वक्पञ्चकम्** । क्ली । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलेषु । रा.नि.व.२२ ।

**त्वक्पत्रम्** । क्ली । दारुचिनीविशेषे । कलमि दारुचिनि । तेजपत्रे । मे. । पुं । हिङ्गुवृक्षे । वै.निघ. ।

**त्वक्पत्री** । स्त्री । हिङ्गुपत्र्याम् । हिङ्गुवृक्षे । तमालपत्रे । वै.निघ. । कारव्याम् । कृष्णजीरा । मे. ।

**त्वक्पाक:** । पुं । शूकरोगे । तल्लक्षणं यथा— "पित्तरक्तकृतो ज्ञेयः त्वक्पाको ज्वरदाहवान् ।" सु.नि.१४अ. । [सि । छूली । हे.च. ।

**त्वक्पुष्पम्** । क्ली । रोमाञ्चे । त्रिका. । किला-

**त्वक्पुष्पिका** । स्त्री । श्वित्र्याम् । श्वित्र । श्वित्रकुष्ठे । किलासे । धवल, छूली । त्रिका. ।

**त्वक्पुष्पी** । स्त्री । श्वित्ररोगे । किलासे । धवल, छूली । जटा. ।

**त्वक्शून्यता** । स्त्री । स्पर्शाज्ञतायाम् । "स्पृश्यमाना त्वचा या तु शीतोष्णं मृदु कर्कशं । न जानाति बुधैस्तस्या शून्येति परिकीर्त्यते ॥" निदा. ।

**त्वक्सार:** । पुं । वंशवृक्षे । भगगाछ । रा.नि.

व.४ । रक्तवंशे । रा.नि.व.७ । वंशलोचनायाम् । বংশলোচন । गुड़त्वचि । सु.सू.४४अ. । वंशे । अम. ।

**त्वक्सारनिर्यासविषम्** । क्ली । स्थावरविषभेदे । यस्य त्वक्सारः निर्यासश्च विषम् । तानि सप्त यथा—अन्त्रपाचककर्त्तरीयसौरीयककरघाटकरम्भनन्दनवराटकानीति । "त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि । आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥" सु.कल्प.२अ. । [नि.व.४ ।

**त्वक्सारभेदिनी** । स्त्री । क्षुद्रचुञ्चुक्षुपे । रा.

**त्वक्सारा** । स्त्री । वंशरोचनायाम् । रा.नि.व.६ । [লেবুর গাছ । भा. ।

**त्वक्सुगन्धः** । पुं । नागरङ्गवृक्षे । নারাঙ্গা

**त्वक्सुगन्धा (न्धिका)** । स्त्री । सूक्ष्मैलायाम् । एलवालुके । वै.निघ. । जटा. । [निघ. ।

**त्वक्स्वाद्वी** । स्त्री । त्वक्सारे । দারুচিনি । वै.

**त्वक्स्वापः** । पुं । स्पर्शज्ञतायाम् । निदा. ।

**त्वक्क्षीरम्** । क्ली । तवक्षीरे, वंशलोचनायां । वै.निघ.२भ.कास-चि. । [याम् । रा.नि.व.६ ।

**त्वक्क्षीरी** । स्त्री । क्षीरशुक्लायां, वंशरोचना-

**त्वगङ्कुरः** । पुं । रोमाञ्चे । चिका. ।

**त्वगाक्षीरा (री)** । स्त्री । वंशलोचनायाम् । जटा. । अम. । [रा.नि.व.१८ ।

**त्वगूर्म्मिः** । स्त्री । वल्याम्, मांसलोलतायाम् ।

**त्वग्गन्धः** । पुं । नागरङ्गवृक्षे । নারেঙ্গা । रा. नि.व.११ । [क्लि । रा.नि.व.१८ ।

**त्वग्जम्** । क्ली । रक्तधातौ । रक्त । केशे, रो-

**त्वग्दोषः** । पुं । चर्म्मरोगे, शीतपित्तोदर्दकुष्ठकोठादौ । চর্ম্ম রোগ, কোঠাদি । निदा. ।

**त्वग्दोषापहा** । स्त्री । सोमराज्याम् । रा.नि. व.४ ।

**त्वग्दोषारिः** । पुं । हस्तिकन्दे । रा.नि.व.७ ।

**त्वग्भी** । स्त्री । चर्म्मचटके । চামচিকি । वै.निघ. ।

**त्वग्भेदः** । पुं । व्रणे । वै.निघ. ।

**त्वचम्** । क्ली । गुड़त्वचि । দারুচিনি । गुणाः —गुरु शीतं कफकासघ्नं शुक्रामशमनं कण्ठशोषघ्न । रा.नि.व.६ । सि.यो.र.पि.चि.खण्डखाद्यलौहे ।

**त्वचा** । स्त्री । मिष्टवल्कले । দারুচিনি । श.र. ।

**त्वचाङ्गः** । पुं । नागरङ्गवृक्षे । रा.नि.व.११ ।

**त्वचापत्रः** । पुं । हिङ्गुवृक्षे । क्ली । त्वचायाम् । দারুচিনি । श.र. ।

**त्वचिसारः** । पुं । वंशे । मद.व.७ ।

**त्वचिसुगन्धा** । स्त्री । क्षुद्रैलायाम् । हारा. ।

**त्वच्यगणः** । पुं । त्वक्प्रसाधनवर्गे तैलादौ । यथा—"तैलन्तु नवधा प्रोक्तं वाकुची चक्रमर्दकं । स्योणेयं पर्पटी सूक्ष्मा त्वच्योऽयं गण उच्यते ॥" अर्क. ।

**त्वरारोहः** । पुं । पारावते । वै.निघ. ।

**त्वरितका** । स्त्री, पुं (कः) । शीघ्रपाकिशालिधान्यभेदे । सु.सू.४६अ. ।

**त्वष्ट(ष्ट्र)म्** । क्ली । ताम्रे । वै.निघ. ।

**त्वष्टा (ष्ट्री)** । स्त्री । ब्राह्मीशाके । वै.निघ. ।

**त्वाचम्** । क्ली । त्वक्तैले । দারুচিনির তেল । गुणाः—"वह्निमद्यानिलहरमाध्मानारोचनाशनम् । वान्त्यास्रक्लेशप्रशमनं संग्राहि दशनार्त्तिभित् । त्वाचं तैलं रजःस्रावि तोये क्षिप्तं निमज्जति ।" अचि. ।

## थ

**थः** । पुं । पर्व्वते । मी. । रोगविशेषे । भक्षणे । श.र. ।

**थुत्कारः** । पुं । निष्ठीवनत्यागानुकरणशब्दे ।

**थुथुकृत्** । पुं । पक्षिविशेषे । ধুকুলি পাখী । वै.निघ. ।

**थोड़नम्** । क्ली । आच्छादने । वै.निघ. ।

**थौनेयकः** । पुं । ग्रन्थिपर्णे । গাঁটিয়ালা । च. चि.३अ.अगुरुतैले । च.द.विष.चि. ।

द

**दंशः** । पुं । दन्ते । इ.च. । मक्षिकाविशेषे । ডাঁশ । अम. । शीभाञ्जनवृक्षे । महिषे । सर्पक्षते । मर्माणि । विश्व. । त्रिका. । वै.निघ. । दंशने । मे. ।

**दंशकः** । पुं । कर्कटे । कुक्कुरे । वै.निघ. । मक्षिकायाम् । ডাঁশ । हारा. ।

**दंशनम्** । क्ली । दन्तेन कर्त्तने । কামড়ান । इ.च. ।

**दंशनाशिनी** । स्त्री । तैलकीटे । वै.निघ. ।

**दंशभीरु: (रुक:)** । पुं, स्त्री । मत्कुणे । महिषे । त्रिका. । [रा नि.व.७ ।

**दंशमूलः** । पुं । शिग्रुवृक्षे । সজিনা গাছ ।

**दंशवदनः** । पुं । कङ्कपक्षिणि । वै.निघ. ।

**दंशिका** । स्त्री । वनमक्षिकाविशेषे । ডাঁশ মাছী, রোঁয়ানী । वै.निघ. ।

**दंशी** (इन्) । पुं, स्त्री । कुक्कुरे । वै.निघ. । वनमक्षिकायाम् । क्षुद्रदंशे । রোঁয়ানী । अम. ।

**दंष्टः** । पुं । शूकरे । प.मु. ।

**दंष्टकम्** । क्ली । सर्पदंशविशेषे ।

**दंष्ट्रा** । स्त्री । दृढदन्ते । দাড়া । इ.च. । विषदन्ते । वै.निघ. । [निघ. ।

**दंष्ट्रायुधः (ष्ट्रास्त्रः)** । पुं । वनशूकरे । वै.

**दंष्ट्रिका** । स्त्री । दाढ़िकायाम् । इ.च. ।

**दंष्ट्री** (इन्) । पुं, स्त्री । वन्यशूकरे । अम. । सर्पे । श.र. ।

**दकम्** । क्ली । जले । त्रिका. । वा.चि.१अ. ।

**दकलावणिकः** । पुं । यूषविशेषे । "मातिमांसास्तनुवसा दकलावणिकाः स्मृताः" । अन्यच "अल्पमांसपटुस्नेहा दकलावणिकाः स्मृताः ।" वा. टी.१अ.अरुण: ।

**दकोदरम्** । क्ली । उदररोगभेदे । जलोदरी । "यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्व्ववदभ्युपैति । स्निग्धं महत् सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥" सु.नि.७अ. ।

**दग्धकः** । पुं । महाशतावर्य्याम् । रा.नि.व.४ ।

**दग्धकाकः** । पुं । डोमकाके । ডোম কাক । इ.च. ।

**दग्धभूमिजशालिः** । पुं । दग्धक्षेत्रजशाली । गुणाः—"दग्धायामवनौ जाताः शालयो लघुपाकिनः । किञ्चित्सतिक्ता मधुराः पाचना बलवर्द्धनाः ॥" रा.नि.व.१६ । "दग्धग्रामाचले जाताः शालयो लघुपाकिनः । सुपथ्या बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षिणः ॥" अत्रि.१५अ. ।

**दग्धमत्स्यः** । पुं । अग्निदग्धमीने । পোড়া মাছ । तस्य विवरणम् । "पलाशैर्वेष्टितो मत्स्यः कर्द्दमेन च लेपितः । दग्धोऽङ्गारे सलवणो दग्धमत्स्यः प्रकीर्त्तितः ॥" वैद्यकम् । गुणाः—"दग्धमत्स्यो गुरुर्वृष्यो बृंहणः प्राणवर्द्धनः । क्षीणशुक्राश्च ये केचित् भग्नजर्ज्जरिताश्च ये । नित्यं स्त्रीसेविनो ये च क्षीणतेजस एव च । दग्धमत्स्यो हितस्तेषां सतैललवणान्वितः । तस्माद्धीनगुणः किञ्चिद्भ्रष्टमत्स्य उदाहृतः ॥" राज. । [रा.नि.व.१० ।

**दग्धरुहः** । पुं । तिलकवृक्षे । তিল গাছ ।

**दग्धरुहा** । स्त्री । दग्धावृक्षे । हिं कुकरौंधा । रा.नि.व.६ । [वै.निघ. ।

**दग्धवर्णकः** । पुं । रौहिषतृणे । রামকর্পূর ।

**दग्धक्षीरम्** । क्ली । वैक्रान्तमणौ । भैष.ज्व.पानीयभक्तवट्याम् ।

**दग्धा** । स्त्री । कुकरौंधा इति कौङ्कणे प्रसिद्धे वृक्षविशेषे । गुणाः—कषाया उष्णा वातकफघ्नी अग्निदीपनी पित्तकोपनी च । रा.नि.व.६ ।

**दग्धास्यः (स्याङ्गः)** । पुं । कुमारिवृक्षे । লঙ্কামরিচ গাছ । प.मु. ।

**दग्धाङ्गः** । पुं । तिलकपुष्पवृक्षे । वै.निघ. ।

**दग्धिका** । स्त्री । दग्धायाम् । कुकरौंधीति कौङ्के । रा.नि.व.६ । दग्धान्ने । ধরা বা আঁকাড়া চাঁচীতি केचित् । भ. ।

**दग्धेष्टका** । स्त्री । अग्निदग्धेष्टकायाम् । पाका इँट, झामा । इत्यमरः ।

**दण्डः** । पुं । ४ हस्तमाने । अश्वे । यष्टिकायाम् । लाठी, छड़ि ।

**दण्डकः** । पुं । वातव्याधिविशेषे । तल्लक्षणं — "पाणिपादशिरःपृष्ठश्रोणिस्तम्भातिमारुतः । दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥" भा. । शरे । सु.कल्प.७अ. । वा.उ.५.अ. ।

**दण्डकन्दः (कः)** । पुं । धरणीकन्दे । रा.नि. व.७ । [काक । हे.च. ।

**दण्डकाकः** । पुं । स्वनामख्यातकाके । दाँड़-

**दण्डधारणम्** । क्ली । यष्टिधारणे । गुणाः — "श्वनः सरीसृपव्यालविषाणिभ्यो भयापहं । श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते । सत्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनं । अवष्टम्भकरश्चापि भयघ्नम् ॥" सु.चि.२४अ. । स्खलतः सम्प्रतिष्ठानम् अवष्टम्भनं शत्रुवारणं भयघ्नमायुष्यञ्च । राज. ।

**दण्डपातः (ती)** (इन्) । पुं । सन्निपातज्वरविशेषे । लक्षणं —"नक्तं दिवा न निद्रामुपैति प्रलपति मूढ़धीर्नभसः । उत्थाय दण्डपाती भ्रमातुरः सर्व्वतो भ्रमति ॥" भा.म.१भ. ।

**दण्डपालः** । पुं । अर्द्धशफरमत्स्यविशेषे । डानकोणा माछ । इत्यमरः ।

**दण्डपालकः** । पुं । दण्डमत्स्ये । डानकोणा माछ । शकुलमत्स्ये । शउल माछ । इत्यमरः ।

**दण्डपाली** । स्त्री । तृणधान्ये । दाँड़िपाला । च.सू.१५अ. ।

**दण्डबालाधः** । पुं । हस्तिनि । श.र. ।

**दण्डमत्स्यः** । पुं । स्वनामख्यातमत्स्ये । दाँड़िका माछ । हिं दण्डारी । गुणाः —"दण्डमत्स्यो रसे तिक्तः पित्तरक्तकफं हरेत् । वातसाधारणः शीतः शुक्रलो बलवर्द्धनः ॥" भा. । कफवायुपित्तघ्नः तिक्तः लघुश्च । राज.१ष. । [वै.निघ. ।

**दण्डमातङ्गः** । पुं । तगरे, पिण्डीतगरे ।

**दण्डयामः** । पुं । दिवसे । वै.निघ. ।

**दण्डवृक्षः (कः)** । पुं । स्नुहीवृक्षे । सिजू गाछ । रा.नि.व.८ ।

**दण्डहस्तः (स्ती)** (इन्) । पुं । तगरपुष्पे । टगर फूल । रा.नि.व.१०।२१ । पिण्डीतगरे । तगरपादिका । वै.निघ. ।

**दण्डा** । स्त्री । नागबलायाम् । वै.निघ. ।

**दण्डापतानकः** । पुं । वातव्याधिभेदे । लक्षणम् —"कफान्वितो यदा वायुर्धमनीष्वेव तिष्ठति । स दण्डवत्स्तम्भयति कृच्छ्रो दण्डापतानकः ॥" सु.नि.१अ. ।

**दण्डालुः** । पुं । स्वनामख्यातालुविशेषे । श्याम आलु । प.मु. । "ताम्बूलपाचा दण्डालु"रिति । द्रव्याभिधानम् । [क्लिते तस्मि । रा.नि.व.१५ ।

**दण्डाहतम्** । क्ली । पादजलेन त्रिभागदधि-

**दण्डिकः** । पुं । दण्डमत्स्ये । डानकोणा माछ ।

**दण्डिका** । स्त्री । श्रोणाकवृक्षे । वै.निघ. ।

**दण्डी** (इन्) । पुं । दमनकक्षुपे । दना । रा. नि.व.१० ।

**दण्डोत्पलम्** । क्ली । वृक्षविशेषे । दण्डकलस, डानकुनि, डानपोला । हिं डानिकुसुहे । सहदेवी । तच्च पीतश्वेतरक्तपुष्पभेदेन त्रिधा भवति । र.मा. । गुणाः—श्वासकासक्षयघ्नम् अग्निदीप्तिकरञ्च । राज. ।

**दण्डोत्पला** । स्त्री । पीतपुष्पदण्डोत्पले । डानपाला, डानकुनी । र.मा. । भैष.अ.पि.चि.बृहत् सुवर्तीगुग्ग्याम् । "दण्डोत्पलाया मूलानि ।" सा. कौ.दूर्व्वाद्यतैले । वै.निघ.अजी.चि.भल्लातकलेहे ।

**दत्** । पुं । दन्ते । श.च. ।

**दद्रुः (कः)** । पुं । क्षुद्रकुष्ठभेदे । दाद । लक्षणं यथा—"सकण्डूरागपिड़कं दद्रुमण्डलमुद्गतम् ।" मा.नि. । (कः) कच्छपे । श.र. ।

**दद्रु(द्रू)घ्नः** । पुं । चक्रमर्द्दक्षुपे । चाकन्दा गाछ । रा.नि.व.४ । भा.कुष्ठ.चि. ।

**दद्रुघ्नपत्रम्** । क्ली । दद्रुमर्द्दपत्रे । श.चि. ।

**दद्रु(द्रू)णः** । त्रि । दद्रुरोगिणि । अम. । भ. टी.र. । [नी । तैलिनीकीटे । रा.नि.व.१९ ।

**दद्रुनाशिनी** । स्त्री । वृक्षविशेषे । प्रपुन्नाड़-

**दद्रुमर्द्दी** (इन्) । पुं । (Cassia alata.)

दद्रुरोगविशेषे। दादमर्द्दनी ओषधिविशेष। हिं दादमर्दन। तें श्रिमश्रविशि। उत्. आदुमारि। ता. शिमइचगति। "अगदो दद्रुमर्दी स्यात् कौ-ढारियाकुसुन्दरः।" इति शिखिसम्मम्।

**दद्रुरोगी** (इन्)। त्रि। दद्रुरोगयुक्ते।

**दद्रू:**। पुं। दद्रुरोगे। च.टी.भ.।

**दधि**। क्ली। श्रीवासे। सरल निर्यास। वसने। श.र.। कपित्थे। वै.निघ.। दुग्धविकारे। दहे। हिं दही। मं दहिं। कं मोसरु। तद्भेदाः—मन्दकदधि मधुरदधि मधुराम्लदधि अम्लदधि अत्यम्लदधि चेति। "आदौ मन्दं ततः स्वादु स्वा-द्वम्लञ्च ततः परं। अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा॥" तत्स्वरूपगुणाः—"मन्दं दुग्धं यदव्य-क्तरसं किञ्चिद्घनं भवेत्। मन्दं स्यात्सृष्टविण्मूत्रं दोषत्रयविदाहकृत्। यत्सम्यक् घनतां यातं व्यक्त-स्वादुरसं भवेत्। अव्यक्ताम्लरसं तत्तु स्वादु विज्ञे-यदाहृतम्। स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःक-फापहं। वातघ्नं मधुरं पाके रक्तपित्तप्रसादनं। स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत्। स्वाद्व-म्लस्य गुणा ज्ञेयाः सामान्यदधिवर्जनैः। यत्तिरोहि-तमाधुर्य्यं व्यक्ताम्लत्वं तदम्लकम्। अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनं। तदत्यम्लं दन्तरोमहर्षक-ण्ठादिदाहकृत्। अत्यम्लं दीपनं रक्तवातपित्तकरं परम्॥" इति। निःसारदुग्धदधिगुणाः—"असा-रं दधि संग्राहि शीतलं वातलं गुरु। विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम्। दधि पक्वं दुग्ध-भवं रुच्यं स्निग्धं गुणोत्तमं। पित्तानिलापहं सर्व्व-धात्वग्निबलवर्द्धनम्। सशर्करं दधि श्रेष्ठं तृष्णा-पित्तास्रदाहजित्। सगुडं वातनुद्वृष्यं बृंहणं तर्पणं गुरु॥" भा.पू.२भ.द.व.। भा.। "न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करं (अघृतशर्करम्)। नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना।" इति। रात्रिदधिसेवननिषेधविधौ। भा. पू.२भ.। चर.। सु.। "पीनसे चातिसारे च शीतके विष-मज्वरे। अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते। रक्तपित्तविकारेषु कफोत्थेषु न तद्धितं। ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयान् क्रमात्। प्रा-प्नुयात् कामलाञ्चापि विधिं हित्वा दधिप्रियः॥" राज.३प.। दधिविशेषगुणाः—स्वस्वपर्य्यायेषु म-न्तव्याः। सुश्रुतात्वम्लमन्दजातभेदेन त्रिधेति त्रिप-दासक्तभेदाः। सा. गुणाः—अम्लविपाकं संग्राहि गुरु उष्णगुणं वातघ्नं शुक्रमेदोबलश्लेष्मपित्तरक्ताग्नि-वर्द्धकं मुखरोचकं शोथकरम् अरुचिघ्नं विषमज्वर-मूत्रकृच्छ्रपीनसघ्नञ्च। मन्दकम् अनभिव्यक्ताम्लं दधि, मलमूत्रनिःसारकं विदग्धपाकं त्रिदोषवर्द्ध-कञ्च। मधुरदधि कफकरं बलकरं मेदोवर्द्धकञ्च। तृतीयं दधिसामान्यगुणम्। चतुर्थमाग्नेयं पित्तरक्त-कफवर्द्धकञ्च। पञ्चमं दन्तहर्षरोमाञ्चकण्ठदाहक-रञ्च। वा.सू.५अ.। शारददधिगुणाः—"शारदं दधि गुर्व्वम्लं रक्तपित्तविवर्द्धनं। शोफतृष्णाज्वरा-र्त्तानां करोति विषमज्वरम्।" हैमन्तदधिगुणाः—"गुरु स्निग्धं सुमधुरं कफकृद्बलवर्द्धनं। वृष्यं शैथ्यञ्च हैमन्तं पुष्टिदं तुष्टिवृद्धिदम्॥" वसन्तदधि-गुणाः—"वातलं मधुरं स्निग्धं किञ्चिदम्लं कफा-त्मकं। बलकृद्वीर्य्यकृत्प्रोक्तं वसन्ते न प्रशस्यते॥" ग्रीष्मदधिगुणाः—"लघु चाम्लं भवेद्ग्रीष्मे चात्युष्णं रक्तपित्तकृत्। शोषभ्रमपिपासाकृत् दधि प्रोक्तं न ग्रैष्मिके॥" तथा—"दध्यम्लं गुरुवातदोषशमनं संग्राहि मूत्रावहं बल्यं शोफकरञ्च रुच्यशमनं वक्त्रेश्च शान्तिप्रदं। कासे श्वास अपीनसेषु विषमे शीतज्वरे स्याद्धितं रक्तोद्रेककरं करोति सततं शु-क्रस्य वृद्धिं पराम्॥" रा.नि.व.१५। स्वादु हृद्यं रोचनं माङ्गल्यञ्च। राज.। दधिसरः। दध्नेर माथा। "दध्नस्तूपरि यो भागो घनः स्नेहसमन्वि-तः। स लोके सर इत्युक्तः……। सरः स्वादु-गुरुर्वृष्यो वातवह्निप्रणाशनः। साम्लो वस्तिप्रशमन पित्तश्लेष्मविवर्द्धनः॥" भा.। दधि नवधा नव्या-दिभेदेन—अग्निमान्द्यकरं कासश्वासशीतज्वरेषु हितञ्च। लवणमरिचघृतशर्करामुद्गामलकपुष्परस-हीनं न नित्यमश्नीयात्। तथा शरदि वसन्ते ग्रीष्मे रात्रौ कफविकारे पित्तदोषे च नाद्यात्। इति दधिवर्ज्यस्थानम्। त्रिकटुयुतं सर्षपचूर्णमिश्रं दधि कफघ्नं वातघ्नमग्निदीपनञ्च। तुहिनशिशि-रकाले चातिपथ्यं देहदार्ढ्यं कान्तिञ्च करोति। इति संयोगदधिसेवनकालः। "दधि मधुरमीष-दम्लं मधुराम्लं वा हितं न चात्यम्लं। यावद्याव-न्मधुरं दोषहरं तावदुक्तमिदम्।" रा.नि.व.१५।

**दधिकः**। पुं। श्रीवेष्टकवृक्षे। सरल,शालाई। हिं शालाइ। ज.द.१२अ.।

**दधिकूर्चिका**। स्त्री। दध्ना सह पक्वे पयसि।

छाना। र.मा.। "दध्ना सह पयः पक्वं या भवेद्-धिकूर्चिका।" प.प्र.२ख.। अत्र दधि दुग्धं समानं भाव्यम्। गुणाः—"वातघ्नी ग्राहिणी रुच्या दुर्जरा दधिकूर्चिका।" राज.।

**दधिचारः** । पुं। दधिमन्थनदण्डे। हारा.।

**दधिजम्** । क्ली। दधनि। नवनीते। रा.नि.व.१५। [रा.नि.व.१५।

**दधिजलम्** । क्ली। मस्तुनि। দয়ের মাৎ।

**दधित्थः** । पुं। कपित्थवृक्षे। र.मा.। च.सू.१अ.। क्ली। कपित्थफले। ज.द.१२अ.। सि.यो.मूत्रदाह-चि.। च.द.विदार्य्यादिलिपे। "दधित्थं बीजपूरकम्।"

**दधित्थाख्यः (ह्वः)** । पुं। धूपविशेषे, सरलद्रवे। लोवान् इति लोके। र.मा.।

**दधिनाम (कम्)** । क्ली। कपित्थफले। কয়েৎ বেল। सि.यो.हिक्काश्वास-चि.। "काश्मीर्यं दधिनाम च।" पुं (मा)। कपित्थवृक्षे। च.द.।

**दधिपुष्पिका (ष्पी)** । स्त्री। कटभीवृक्षे। कट्वाम्। रा.नि.व.२३। श्वेतापराजितायाम्। रा.नि.व.३। शूकशिम्ब्याम्। আলাকুশী। वै.निघ.। तन्नामकफलशाकविशेषे। চিচিঙা, চেঁপা। हिं कुन्दुरी। मं गोडीकुन्दुली। कं काकचौला, कुगरी। गुणाः—कटुः मधुरा शीतला सन्तापपित्तघ्नी वातकरी गुरुः अरोचकघ्नी च। रा.नि.व.७। बीजगुणाः—गुरु हृद्यं रुच्यं मलस्तम्भकं कफाग्निमान्द्यकरणं वातपित्तहरञ्च। वै.निघ.।

**दधिपूपः (कः)** । पुं। दधिवटके। দয়ে বড়া। वै.निघ.।

**दधिफलः** । पुं। कपित्थवृक्षे। रा.नि.व.११।

**दधिभवम्** । क्ली। नवनीते। ननि। वै.निघ.।

**दधिमण्डः (स्तु)** । पुं, क्ली। दधिजले। দধির মাৎ। र.मा.। गुणाः—"मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहं। अवृष्यमीषन् शीघ्रभिन्मस्तु मलसञ्चयम्॥" भा.। "धन्वाञ्च दधिपक्वेदं क्लमहरं बल्यं कषायं सरं भुक्तिच्छेदकरं दयोदरगदप्लीहा-र्शसां नाशनं। शीतःशुद्धिकरं कफानिलहरं विष्ट-म्भशूलापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु॥" रा.नि.व.१५।

**दधिमण्डातकम्** । क्ली। दधिमस्तुनि। च.चि.१८अ.पञ्चकोलसृते। [वै.निघ.।

**दधिमण्डोद्भवम्** । क्ली। नवनीते। ननि।

**दधिलेहः** । पुं। दधिसरे। দয়ের সর, মাথা। र.मा.।

**दधिवटी** । स्त्री। ঔষধ। ইটের গুঁড়া, হরিদ্রার গুঁড়া, ও ঝুলে পারা, ভীমরাজরসে গন্ধক, শোধন করিবে। পারা ১ তো. গন্ধক ১ তো. ইহার কজ্জলি, হরিতাল, বিষ, তুঁতে, এলবালুক, অভ্র, খাপর, স্বর্ণমাক্ষী, কান্তলৌহ প্রত্যেকে ॥০ তো. নিসিন্দা, লতাফট্কী, অপরাজিতা, জয়ন্তী ও চিতার মূল, ইহাদের রসে ভাবনা। বটী ১ সরিষা। भैष.। कज्जलिः २तो. हरितालं, विषं तुल्यम् एलबालुकम्, अभ्रकम्, खर्परं स्वर्णमाक्षिकं लौहं एषां प्रति ॥० तो.। निर्गुण्डीजयन्तीज्योतिष्मतीचित्रकरसेन क्वाथेन वा भावयेत्।

**दधिवास्तुका** । स्त्री। गोदन्तहरिताले। दुरालभाभेदे। वै.निघ.।

**दधिशोणः** । पुं। शुक्लवानरे। दर्व्वीकरसर्पविशेषे। सु.कल्प.४अ.। See सर्पः। गोलाङ्गूलवानरे। মুখ পোড়া। त्रिका.।

**दधिसक्तवः** । पुं (बहु)। दध्युपसिक्तसक्तुषु। দইমাথা ছাতু বা রসালা। अम.।

**दधिसक्तुः** । पुं। रसालायाम्। प.मु.।

**दधिसरः** । पुं। दध्यग्रभागे। দধির সর। वै.निघ.। See दधि।

**दधिसारम्** । क्ली। नवनीते। हे.च.।

**दधिस्नेहः** । पुं। दध्नः स्नेहभागे, दधिसरे। त्रिका.। [See तैलपर्णी।

**दधिस्वादा** । स्त्री। लवणस्त्वोद्याम्। श.चि.।

**दधिस्वेदः** । पुं। तक्रे। ঘোল। जटा.।

**दधीचा(च्य)स्थि** । क्ली। हीरके। त्रिका.।

**दध्यग्रम्** । क्ली। दधिसरे। वै.निघ.।

**दध्यङ्कः** । पुं। सरकदवे। त्रिका.।

**दध्यामी** । स्त्री । कटुक्यां । কট্‌কী। वै.निघ.।

**दध्याली** । स्त्री। सुदर्शनालतायाम् । দয়েথয়ে, উরতিপুরতি । हिं मदनमस्तु । र.मा. ।

**दध्याह्वः** । पुं । कपित्थवृत्ते । वै.निघ. ।

**दध्युत्तर(क)म्** । क्ली । दधिसारे । र.मा. । सु.सू.४१ऋ. ।

**दन्तः** । पुं । तरुप्रकाण्डे । रा.नि.व.२ । चर्व्वण-साधनास्थनि, दशने । দাঁত । स च शिशो: षष्ठे मासि जायते । मुग्धबोध: ।

**दन्तकड़मड़ि:** । पुं । तन्नामकबालरोगे । यत्र बालक: निद्रितोऽपि दन्तशब्दं करोति । रस.र. बाल.चि. ।

**दन्तकरालः** । पुं । दन्तरोगभेदे । "कराल: सुकुमाराणां दशनानां समुद्भव: ।" वा.उ २१अ.।

**दन्तकर्षणः** । पुं । निम्बूवृत्ते । লেবুগাছ । श्र.र. ।

**दन्तकाष्ठः** । पुं । अर्कवृत्ते । खदिरवृत्ते । अर्ज्जुनवृत्ते । करञ्जवृत्ते । वै.निघ. । विकङ्कतवृत्ते । বঁইচী গাছ । रा.नि.व.९ । क्ली । दन्तधावनकाष्ठे । দাঁতন কাটি । तच्च द्वादशाङ्गुल कनिष्ठाङ्गुलिस्थूलम् ऋजु अग्रन्थि कीटाद्यचतं ग्राह्यम् । तदुक्तं —"द्वादशाङ्गुलमायतम् । कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणम् । निम्बखदिरयष्टिमधुकरञ्जभवम् ऋतुवीर्य्यरसदोषविशेषेषु प्रशस्तम् । अवेत्य-र्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत् ।" सु.चि.२४ अ. । "कषायं मधुरं तिक्तं कटुकम्प्रातरुत्थित: । निम्बश्च तिक्तके श्रेष्ठ: कषाये खादिरस्तथा । मधुको मधुरे श्रेष्ठ: करञ्ज: कटुके तथा ।" च.सू.५ अ. । "केऽप्यत्र करवीराम्रकरञ्जवकुलासनान् । दन्तकाष्ठार्थमन्ये तु सर्व्वान् कण्टकिनोऽभ्यधु: । गुवाकतालहिन्तालखर्ज्जूरै: केतकीयुतै: । नारिकेलेन ताड्या च न कुर्य्याद्दन्तधावनम् । अर्द्दिती कर्णशूली च दन्तरोगी नवज्वरी । शोथी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्ज्जयेत् ।" राज.१प. ।

**दन्तकाष्ठकम्** । क्ली । आहुल्यचुपे । रा.नि. व.४ । दन्तधावनकाष्ठे । वै.निघ. ।

**दन्तकेतुः** । पुं । वड़निम्बूवृत्ते । লেবুর গাছ ।

**दन्तघर्षणम्** । क्ली । दन्तमार्ज्जने । দাঁতমাজা ।

**दन्तघातः** । पुं । निम्बूवृत्ते । शिशोर्दन्तकड़मड़िरोगे । वै.निघ. ।

**दन्तचालः (नः)** । पुं । दन्तरोगविशेषे । দাঁত নড়া । "चालश्चलद्भिर्दशनै: भक्षणादधिकव्यथै: ।" वा.उ.२१अ. ।

**दन्तच्छदः** । पुं । ओष्ठे । हला. ।

**दन्तच्छदा** । स्त्री । मधुरविम्ब्यां । विम्बराम् । কুন্দুরু । তেলাকুচা । वै.निघ. ।

**दन्तच्छदोपमा** । स्त्री । कुन्दुरी । विम्बराम् । रा.नि.व.७ ।

**दन्तध(धा,प)वनम्** । क्ली । दन्तमार्ज्जने । দাঁত মাজা বা দাঁতন করা । दन्तधावनकाष्ठे । দাঁতন কাঠি । दन्तधावनविधि:—"प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् । भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् । केऽप्यत्र करवीराम्रकरञ्जवकुलासनान् । दन्तकाष्ठार्थमन्ये तु सर्व्वान् कण्टकिनोऽभ्यधु: । निषिद्धं यथा—गुवाकतालहिन्तालखर्ज्जूरै: केतकीयुतै: । नारिकेलेन ताड्या च न कुर्य्याद्दन्तधावनम् ॥ इति । दन्तधावने दिक्—"मृत्यु: स्याद्दक्षिणास्येन पश्चिमास्येन चामय: । पूर्व्वास्येनोत्तरास्येन सम्पदो दन्तधावनात् ॥" इति । दन्तकाष्ठव्यवहारे निषिद्धजना: यथा—"अर्द्दिती कर्णशूली च दन्तरोगी नवज्वरी । शोथी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्ज्जयेत् ॥" इति। राज.१प.।

**दन्तधावनः** । पुं । खदिरवृत्ते । अ.ह.१२अ.। रा.नि.व.८ । गुच्छकरञ्जे । रा.नि.व.९ । बकुलवृत्ते । श्र.च. ।

**दन्तनाड़ी** । स्त्री। दन्तमूलगतनाडीनामरोगे। দন্তনালী । सा पञ्चविधा वातपित्तकफसन्निपातागन्तुजनिमित्ता । "दन्तमूलगता नाड्य: पञ्च ज्ञेया यथेरिता: ।" भा.म.४भ.मु.रो.चि. ।

**दन्तपत्रकम्** । क्ली । कुन्दपुष्पे । श्र.च. ।

**दन्तपातनयन्त्रम्** । क्ली । दन्तोत्पाटनयन्त्रे । দাঁততোলা শাঁড়াশি । "शरपुङ्खमुखं यन्त्रं दन्तपातनमुच्यते ।" भचि. ।

**दन्तपाली** । स्त्री। शिशोर्दन्तरोगे । मा.च.श्न.

**दन्तपीठकम्** । क्ली । दन्तवेष्टे । দাঁতের মাড়ি । ज.द.२अ. ।

**दन्तपुप्पुटः (कः)** । पुं । दन्तरोगविशेषे । দাঁতের মাড়ি ফোলা বা দাঁতের গোড়া ফোলা । "दन्तयोस्त्रिषु वाप्यत्र श्वयथुर्जायते महान् । दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ।" भा.म.४भ.मु.रो.चि. । "दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान् । दन्तपुप्पुटको ज्ञेयः कफमारुतपित्तजः ।" सु. । "दन्तयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः । कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः ॥" वा.उ.२१अ. ।

**दन्तपुष्पः** । पुं । अश्वत्थवृत्ते । वै.निघ. । क्ली । कतकफले । श.च. ।

**दन्त(न्ता)फलः** । पुं । पिप्पल्याम् । "दन्तफलस्तु पिप्पल्याम् ।" रा.नि.व.२३ । क्ली । कतकफले । निर्म्मालা ফল । श.च. ।

**दन्त(न्ता)फला** । स्त्री । पिप्पल्याम् । रा.नि.व.६ । अश्वत्थिकावृत्ते । वै.निघ. ।

**दन्तभागः** । पुं । हस्त्यग्रभागे । अम. ।

**दन्तभेदः** । पुं । दन्तरोगविशेषे । लक्षणम्— "दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ।" वा.उ.२अ. । [লা বা পাথুরি । হারা. ।

**दन्तमलम्** । क्ली । दशनमले । দাঁতের ময়

**दन्तमूलम्** । क्ली । दन्तार्बुदरोगे । रा.नि.व. २० ।

**दन्तमूलिका** । स्त्री । दन्तीवृत्ते । श.र. ।

**दन्तरञ्जनम्** । क्ली । काशीषे । হিরেকস্ । र.सा.सं. ।

**दन्तरोगः** । पुं । दन्तगतमुखरोगे । स अष्टविधः । यथा—दालनः क्रिमिदन्तः भञ्जनकः दन्तहर्षः दन्तविद्रधिः दन्तशर्करा कपालिका श्यावदन्तकश्चेति । भा. । दन्तविद्रधिमगणय्य हनुमोचमाह सु.नि.१६अ. । अयस्य दन्तगतरोगे । ज. द.२८अ. । See मुखरोगः ।

**दन्तरोगी (इन्)** । त्रि । दन्तरोगयुक्ते ।

**दन्तलेखनम्** । क्ली । अस्त्रविशेषे । দাঁতের পাথুরি ছোলা । यथा—"एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः । दन्तलेखनकं तेन शोधयेद्दन्तशर्करान् ॥" अचि. ।

**दन्तवलः** । पुं । हस्तिनि । वै.निघ. ।

**दन्तवस्त्रम् (वासः)** । क्ली, पुं । ओष्ठे । रा. नि.व.१८ ।

**दन्तविद्रधिः** । पुं । दन्तवेष्टगतरोगविशेषे । দাঁতের গোড়া ফোলা, দাঁৎকড়া । यत्र दन्तवेष्टगतदोषेण सरक्तेन हेतुना बाह्यतो दाहरुजायुक्तः महान् श्वयथुः भिन्नः पूयं स्रवेत् स दन्तविद्रधिः । "दन्तमांसमलैः सास्रैः बाह्यतः श्वयथुर्महान् । सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥" भा.म.४भ.मु.रो.चि. ।

**दन्तवीजः (कः) (जा)** । पुं, स्त्री । दाडिम्बवृत्ते । भा. । रा.नि.व.११ । (जा) अलाव्वाम् । वै.निघ. ।

**दन्तवेष्टः** । पुं । दन्तवेष्टनमांसे, दन्तमाड़िकायाम् । দাঁতের মাড়ি । दुष्टशोणितजे तन्नामकदन्तवेष्टजरोगे । यदि पूयरुधिरं स्रवेत् दन्ताश्च चला भवन्ति तदा दन्तवेष्ट इत्यभिधीयते । "स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च । दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥" भा.म.४भ.मु. रो.चि. ।

**दन्तवेष्टजरोगः** । पुं । दन्तवेष्टनमांसगतमुखरोगे । स षोड़शविधः (দাঁতের মাড়ির ১৬ রোগ) यथा—दन्तवेष्टः सौषिरः महासौषिरः परिदरोपकुशौ वैदर्भः खलि(ल्ली)वर्द्धनः (আক্কেল দন্ত) अधिमांसकः करालकः, पञ्चदन्तनाड्यः वातादिभेदेन, शीतादः दन्तपुप्पुट इति । "शीतादो गदितः पूर्व्वं दन्तपुप्पुटकस्तथा । स्रुरष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा । दन्तवेष्टः सौषिरश्च महासौषिर एव च । ततः परिदरः प्रोक्तस्ततस्तूपकुशः स्मृतः । वैदर्भश्च ततः प्रोक्तः खलि(ल्ली)वर्द्धन एव च । अधिमांसकनामा च दन्तनाड्यश्च पञ्च च । दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोड़श ॥" भा.म.४भ.मु.रो.चि. । मा.नि.। करालस्थाने दन्तविद्रधिमाह भावमिश्रः । सुश्रुतस्तु करालकं न गणयति । एषां लक्षणानि तत्तत्पर्य्याये द्रष्टव्यानि ।

**दन्तवैदर्भः** । पुं। दन्तमूलगतमुखरोगे । See वैदर्भः ।

**दन्तशङ्कुः** । पुं । तीक्ष्णाग्रटङ्कप्रथमयवपत्रमुखे दन्ताहरणार्थं शस्त्रभेदे । "शङ्कुवत्र मुखं तस्य कार्यमर्द्धाङ्गुलायतम् । चतुरस्रं समश्चैव तीक्ष्णधारं समाहितम् । दन्तार्थं तस्य कर्त्तव्यं शस्त्रं व्रीहिमुखाकृति । कपालिकां शर्कराञ्च दन्तानां तेन शोधयेत् ॥" सु.सू.८अ. । सु.टी.ड. ।

**दन्तशठः** । पुं । दन्तशठे । च.टी.म. ।

**दन्तशठः** । पुं । कपित्थवृक्षे । जम्बीरवृक्षे । रा.नि.व.११।२३ । चाङ्गेर्याम् । आम्रातकवृक्षे । कर्म्मरङ्गवृक्षे । मे. । तिन्तिड़ीवृक्षे । वै.निघ. ।

**दन्तशठा (ठी)** । स्त्री । चाङ्गेर्याम् । आम्‌रुल । रा.नि.व.५ । तिन्तिड्याम् । भा. ।

**दन्तशब्दः** । पुं । वहुलशब्दात्मकदन्तपीड़नरोगे । दाँत कड़मड़ रोग । लक्षणम्—"ऊर्द्धं निरीक्षते दन्तान् खादेत्कूजति जृम्भते ।" मा.नि. ।

**दन्तशर्करा** । स्त्री । दन्तगतमुखरोगे । दाँतेर पाथुरि । लक्षणं यथा—"मलो दन्तगतो यस्तु पित्तमारुतशोषितः । शर्करेव खरस्पर्शो सा ज्ञेया दन्तशर्करा ॥" मा.नि. ।

**दन्तशाणम्** । क्ली । दन्तघर्षणे, दन्तनिशुक्लताद्रव्ये । माजन, मिषि । चिका. । [श.र. ।

**दन्तशिरा** । स्त्री । दन्तवेष्टे । दाँतेर माड़ि ।

**दन्तशूलम्** । क्ली । दन्ततोदे । दन्तार्व्वुदे । दाँतेर शूलुनि । रा.नि.व.२० ।

**दन्तशैथिल्यम्** । क्ली । वातजदन्तरोगविशेषे । दाँत आल्‌गा । च.सू.२०अ. ।

**दन्तशोफः** । पुं । दन्तार्व्वुदरोगे । रा.नि.व.२० ।

**दन्तहर्षः** । पुं । दन्तगतमुखरोगे । दाँत शिहरा, टका । लक्षणं—"शीतरुक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः स नामतः ॥" मा.नि. । "दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षन्तु व्याधिं विद्यात्समीरणात् ॥" सु. । "शीतरुक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । तत्र सुर्मारुतपित्ताभ्यां दन्तहर्षः स कीर्त्तितः ॥" भा. । [का. । जटा. ।

**दन्तहर्षकः (णः)** । पुं । जम्बीरवृक्षे । चि-

**दन्ताघातः** । पुं । निम्बूकवृक्षे । गोँड़ा लेबुर गाछ । रा.नि.व.११ ।

**दन्तायुधः** । पुं । वनशूकरे । चिका. ।

**दन्तार्व्वुदः** । पुं,क्ली । दन्तरोगविशेषे । दाँतेर गोड़ार आब् । रा.नि.व.२० ।

**दन्तावलः** । पुं । करिणि । अम. । [श.र. ।

**दन्तिका (जा)** । स्त्री । दन्तीवृक्षे । अम. ।

**दन्तिनी** । स्त्री । दन्तीक्षुपे । रा.नि.व.६ । वै.निघ.२भ.कृमि-चि.चित्रकादितैले ।

**दन्तिनीवीजम्** । क्ली । जैपालवीजे । जयपाल । रा.नि.व.६ । [सु.सू.२७अ. ।

**दन्तिला** । स्त्री । नागदन्त्यां । हातिशुँड़े ।

**दन्ती** । स्त्री । (Baliospermum montanum. Syn. Croton polyandrum.) स्वनामख्यातक्षुद्रक्षुपे । दन्ती गाछ । हिं द्रवन्ती । मं दान्ति । कं दन्ति । तें दन्तिचेट्टु, कौस्तुभमदुम् । वम्. जामालगोटा । क्षुद्रदीर्घभेदेन दन्ती द्विधा । तयोर्ह्रस्वा उदुम्बरदलाकारा, अन्या एरण्डदला । सा. गुणाः—कटूष्णा शूलघ्नी अर्शोव्रणाश्मरीघ्नी दीपनी च । अन्या कटूष्णा रोचनी कृमिघ्नी शूलकुष्ठामघ्नी गुदामयघ्नी च । रा.नि.व. ६ । "दन्तीद्वयं सरं पाके रसे च कटु दीपनम् । गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत् । तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन् । क्षुद्रदन्तीफलं तु स्यात् मधुरं रसपाकयोः । शीतलं सृष्टविण्मूत्रगरशोथकफापहम् ॥" भा. । वा.सू.१५अ.श्यामादिः । "श्यामा दन्ती द्रवन्ती ।" सु.सू.३९अ. । च.सू.२अ.वमने । जैपालवीजे । वै.निघ.२भ.शीतज्व.चि. । "क्वाथेन दन्तीत्रिवृतोद्भवेन ।" वा.व्या.चि.महानाराचरसे । ४र्थ विषगर्भतैले । पुं (इन्) । हस्तिनि । प.मु. । [वै.निघ. ।

**दन्तीफलम्** । क्ली । पिप्पल्याम् । दन्तीवीजे ।

**दन्तीफलसमाकृतिः** । पुं । पिस्ताक्षवृक्षे । पेस्ता गाछ । वै.निघ. ।

**दन्तीवीजम्** । क्ली । जैपालवीजे । रा.नि.व.६ । वै.निघ.२भ.अर्श.चि.मरीदधिवल्याम् । वा.व्या. मृतसञ्जीवनीरसे, वातगजकेशरीरसे ।

**दन्तीहरीतकीगुड़ः** । पुं । गुडाधिकारे । पाठः—"जलद्रोणे विपक्तव्यं विंशतिः पञ्च चाभयाः । दन्त्याः पलानि तावन्ति चित्रकस्य तथैव

च । तैलाष्टभागशेषेण पचेद्दन्तीसमं गुड़ं । तत्तीक्ष्णं त्रिवृच्चूर्णात्तैलाच्चापि चतुष्पलं । पलमेकं कणाशुण्ठ्योः सिद्धे लीढ़े च शीतले । चौद्रं तैलसमं दद्याच्चातुर्जातपलन्तथा। ततो लेहपलं लिढ्वा जग्ध्वा चैकां हरीतकीम् ॥" पोटलीबद्धहरीतकी २५, दन्तीमूलं २५ प. चित्रकमूलं २५ प. जलं ६४ श. शे. ८ श. । पुरातनगुड़स्य २५ प. क्वाथेन गुड़ं गोलयित्वा पचेत् । पाके सिद्धे अवतार्य्य स्निग्धे सति त्रिवृच्चूर्णं ४ प. कणाशुण्ठ्योः प्र. पलं तिलतैलं ४ प. प्रक्षेप्यम् । शीते मधु ४ प. गुड़त्वक् एलातेजपत्रनागकेसराणां प्र. २ तो. मिश्रणीयम् । मात्रा २ तो. हरीतकी १० श. । रस.र. ।

**दन्तुरः** । त्रि । उच्चदन्ते । नतानते । मे. ।

**दन्तुरच्छदः (त्वक्)** । पुं । मातुलुङ्गवृक्षे । टाबा गाछ । रा.नि.व.११ । [निघ. ।

**दन्तोज्ज्वला** । स्त्री । श्वेतजातीपुष्पवृक्षे । वै.

**दन्तोद्भेदः** । पुं। बालदन्तोद्गमे । दाँत उठा । "दन्तोद्भेदः शिशोः सर्व्वरोगाणां कारणं स्मृतं । विशेषाज्ज्वरविड्भेदकासच्छर्द्दिशिरोरुजाम् । अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥" भा.म.ख.४भ. । [तानि २० । च.शा.७अ. ।

**दन्तोलूखलम्** । क्ली । दन्ताधिष्ठानास्थनि ।

**दन्दशः** । पुं । दन्ते । वै.निघ. ।

**दन्दशूलः** । पुं । सर्पे । वै.निघ. ।

**दमः** । पुं । दमनकक्षुपे । वै.निघ. ।

**दमनम्** । क्ली । दमनपुष्पे । दना फूल । सि.यो.च.द.वा.व्या.चि.महाराजप्र.तैले । पुं । कुन्दपुष्पवृक्षे । कुँदफुलेर गाछ । रा.नि.व.१० । दमनकवृक्षे । त्रिका. । "दमनस्तुवरस्तिक्तो हृद्यो वृष्यः सुगन्धिकः । ग्रहणात् विषकृच्छ्रास्रक्लेदकण्डूत्रिदोषजित् ॥" भा. ।

**दमनकः** । पुं । (Artemisia Scoparia or A. Indica.) दना इति ख्याते पुष्पक्षुपे । दना गाछ । प.मु. । हिं दवणा । मं दौणा । गुणाः—शीतलः तिक्तः कषायः कटुकः द्वन्द्वदोषत्रिदोषघ्नः विषविस्फोटघ्नश्च । अन्यच्च वन्यदमनः वीर्य्यस्तम्भनकारी बलदायी आमदोषहारी च । रा.नि.व.१० ।

**दमनी** । स्त्री । अग्निदमनीनामक्षुपे । শোলা । रा.नि.व.४। नागदमन्याम् । नागदना । वै.निघ.।

**दमयन्ती** । स्त्री । भद्रमल्लिकापुष्पवृक्षे । मल्लिका फुलेर गाछ । रा.नि.व.१० । कर्कटिकायाम् । वै.निघ. ।

**दम्पती** । पुं (द्वि.) । जायापत्योः । वै.निघ. ।

**दम्भः** । पुं । अतीसाररोगे दाहकर्म्मविशेषे । "नाभेर्द्व्यङ्गुलकादधोर्ध्वशशिवदंशास्थिमूले तथा । दाहः प्रज्वलितायसस्य कथितो दम्भो ग्रहण्यातुरे ॥" तन्त्रान्तरम् ।

**दम्भफलः** । पुं । सेववृक्षे । সেও । वै.निघ. ।

**दम्भीरः** । पुं । लावपक्षिणि । (भरू:) महिषे । वै.निघ. ।

**दम्यः** । पुं । वत्से । वृषे । वै.निघ. ।

**दरः** । पुं । शङ्खे । वै.निघ.२भ.मधुरज्व.विस्फा-चिकादिकषाये । विषे । वै.निघ. । [४ ।

**दरकण्टिका** । स्त्री । शतावर्य्याम् । रा.नि.व.

**दरदः** । पुं । वृत्तपत्रशाके । নটে শাক । प.मु. । क्ली । हिङ्गुलधातौ । रा.नि.व.१३ । र.मा. ।

**दर्दराम्रः** । पुं । मीनाख्नीने, वाञ्जनविशेषे । श.मा. ।

**दर्दरीकः** । पुं । भेके । मेघे । उणा. ।

**दर्दुरः** । पुं । पुनर्नवायाम् । इन्द्रगोपकीटे । वर्षाभ्वाम् । रा.नि.व.२३ । कृष्णाभ्रे । नीलाभ्रभेदे । रा.नि.व.१३ । र.चि.३भ. । "बलिदर्दुरपूतिलौहतापम् ।" भेके । मे. । शालिधान्यभेदे । अयं षष्टिकाद्धीनगुणः । च.सू.२७अ. ।

**दर्दुरच्छदा** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**दर्दुरदला** । स्त्री । मण्डूकपर्ण्याम्, सा च ब्राह्मी, ब्रह्मी, वरम्हीति महाराष्ट्रे ख्याता । थूलकुड़िभेद । भा.म.१भ.चित्तभ्रम.ज्व.चि. । "इन्दुशिखरकोऽथ दर्दुरदला ।"

**दर्दुरपर्णी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**दर्दुः (दर्दूः)** । पुं । लकुचवृक्षे । ডেলো গাছ । रा.नि.व.६ । महाकुष्ठभेदे । দাদ । मा.नि. । स्त्री । दद्रुरोगे । उणा. ।

**दर्द्रुघ्नः** । पुं । चक्रमर्दवृक्षे । চাকন্দা গাছ । श.र. ।

**दर्द्रुघ्नपत्रम्** । क्ली । पत्रशाकविशेषे । দাদম-র্দ্দিনী । चक्रमर्दपत्रे । চাকন্দা পাতা । हिं चकवड़ । गुणाः—दोषहरम् अम्लं वातकफघ्नं कण्डूकासकृमिश्वासदद्रुकुष्ठघ्नं लघु च । भा.पू.१भ. शा.व. । See दद्रुघ्नी ।

**दर्द्रु(द्रू)णः** । त्रि । दद्रुरोगिणि । च.टी.भ. ।

**दर्द्रु(द्रू)रोगी** (इन्) । त्रि । दद्रुरोगयुक्ते । च.टी.भ. । [त्रिका.

**दर्पः** । पुं । कस्तूरिकावृक्षे । मे. । उष्मणि ।

**दर्पणम्** । क्ली, पुं । नेत्रे । जटा. । आदर्शे । আর্শি । गुणाः—आयुःश्रीकारित्वं पापप्रशमनत्वञ्च । राज.२प. ।

**दर्पपत्रकः** । पुं । काशतृणे । वै.निघ. ।

**दर्पा** । स्त्री । कस्तूर्याम् । वै.निघ. ।

**दर्भः** । पुं । (Poa cynosuroides. Syn. Eragrostis cynosuroides.) कुशतृणे । কুশ তৃণ । हिं दाभ । तें दुभ । अम. । सु.सू. ३८अ. । (Imperata cylindrica. Syn. Saccharum cylindricum.) उलुके । উলু, থাগড়া । प.मु. । वा.सू.१५अ. वरुणादिः । "बहलपल्लवदर्भरुजाकराः ।" च.सू ४अ. । काशतृणे । श.र. ।

**दर्भकः** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं —"मण्डूका विवरं यस्य दर्भसूक्ष्मकरं भवेत् । तस्य दर्भक इत्युक्तो व्याधिः कष्टचिकित्सितः ॥" ज.द.३९अ. । [कृमिजाति । वै.निघ. ।

**दर्भकुसुमः** । पुं । कृमिजातौ । তদাকার

**दर्भपत्रः** । पुं । काशतृणे । रा.नि.व.८ ।

**दर्भपुष्पः** । पुं । तन्नामकदर्वीकरसर्पविशेषे । राजिमत्सर्पविशेषे । वैकरञ्जजातीयसर्पे । सु.कल्प. ४अ. । See सर्पः । कफजकृमिभेदे । च.वि.७अ. ।

**दर्भमूलम्** । क्ली । कुशमूले । उलुमूले । च. द.चद्रो.चि. ।

**दर्भरः** । पुं । लावपक्षिणि । वै.निघ. ।

**दर्भवटम्** । क्ली । अन्नगर्त्ते । त्रिका. ।

**दर्भाह्वयः** । पुं । मुञ्जतृणे । মুজ । रा.नि.व.८ ।

**दर्विः** (र्वी) (कः) । स्त्री । सर्पफणायाम् । दर्विकायाम् । হাতা । अम. । श.र. ।

**दर्विका** । स्त्री । दव्याम् । হাতা । च.टी.रा. । कज्जलभेदे । কাজল । तत्र सौवीरजाम्बलतुत्थमयूरग्रीवकदर्विकासैवालीलभेदैः षट् भवति । तल्लक्षणम् अञ्जनशब्दे द्रष्टव्यम् । पुराणम् । गोजिह्वायाम् । वै.निघ. ।

**दर्विपत्रिका** । स्त्री । गोजिह्वायां । দাড়িয়া শাক । ज.द.१२अ. ।

**दर्वीकरः** । पुं । सर्पजातिविशेषे । ফণধর সর্প । लक्षणं यथा—"रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः । फणिनः शीघ्रगतयः सर्पा दर्वीकरा मताः ॥" वा.उ.३६अ. । दर्वीकरभेदाः—कृष्णसर्पमहाकृष्णकृष्णोदरश्वेतकपोतवलाहकमहासर्पशङ्खपाललोहिताक्षगवेधुकपरिसर्पखण्डफणककुदपद्ममहापद्मदर्भपुष्पदधिमुखपुण्डरीकभ्रुकुटीमुखविष्किरपुष्पाभिकीर्णगिरिसर्पऋतुसर्पश्वेतोदरमहाशिरालगर्दाशीविषाश्चेति । दर्वीकरस्य प्रथमे विषवेगे श्याववर्णं दुष्टञ्च रक्तं स्यात् । तथा मुखादौ श्यावता स्यात् । द्वितीये ग्रन्थयः, तृतीये शिरोगुरुत्वादयः, चतुर्थे ष्ठीवनादयः, पञ्चमे सन्धिविश्लेषणं तन्द्रा पर्व्वभेदः दाहः हिक्का च, षष्ठे हृत्पीडाद्याः, सप्तमे च शुक्रं प्राप्य स्कन्धादिभङ्गः सर्व्वचेष्टानिवृत्तिश्च स्यात् । वा.टी.अरुणः ।

**दर्शः** । पुं । अवलोकने । मे. ।

**दर्शतः** । पुं । सूर्य्ये । चन्द्रे । उणा. ।

**दर्शनम्** । क्ली । नेत्रे । रा.नि.व१८ । दर्पणे । स्वप्ने । मे. ।

**दर्शनी** । स्त्री । तैलकीटके । वै.निघ. ।

**दर्शनीयः** । पुं । अर्कवृक्षे । श्वेतार्के । वै.निघ. ।

**दर्शनोज्ज्वला** । स्त्री । श्वेतजातीवृक्षे । वै. निघ. ।

**दर्शविपत्** । पुं । चन्द्रे । हारा. ।

**दलम्** । क्ली । तेजपत्रे । रा.नि.व.६ । वा.उ.५ अ. । च.द.सि.गो.समशर्करचूर्णे । "शुण्ठीकृष्णा-

भरिचभागदललगीका।'' पत्रे। পাতা। त्रिका।

**दलकोमलम्** । क्ली। पद्मे। वै.निघ.।

**दलकोष:** । पुं। मल्लिकापुष्पवृक्षे। वै.निघ.। कुन्दपुष्पवृक्षे। श.मा.।

**दलनिर्मोक:** । पुं। भूर्जवृक्षे। श.मा.।

**दलप:** । पुं। सुवर्णे। उणा.।

**दलपुष्पा** । स्त्री। केतकीवृक्षे। কেয়া গাছ। रा.नि.व.१०। श्वेतकेतक्याम्। শ্বেত কেয়া। वै.निघ.।

**दल(अर्द्ध)लाङ्गलक:** । पुं। तदाकारच्छेदविशेषे। य एकस्मिन् पार्श्वे छेदः स दललाङ्गलकाख्यः। वा.उ.२८ग्र.। "इस्वमेकतरं यच्च सोऽर्द्धलाङ्गलकः स्मृतः॥" सु.चि.८ग्र.।

**दलशालिनी** । स्त्री। कच्चुकशाके। কচু শাক। वै.निघ.।

**दलसायसी** । स्त्री। श्वेततुलसीवृक्षे। वै.निघ.।

**दलसारिणी** । स्त्री। केमुकवृक्षे। কেউ গাছ। र.मा.। [कण्टके। কাঁটা। हारा.।

**दलसूचि:** । पुं। कण्टकवृक्षे। কাঁটা গাছ।

**दलस्नसा** । स्त्री। पत्रशिरायाम्। পাতার শিরা। हे.च.। [भा.।

**दलहीनफला** । स्त्री। सुलेमानीखर्जूर्य्याम्।

**दला** । स्त्री। नगवल्लयाम्। নালিতা। प.सु.। अजमोदायाम्। রাঙ্গুনী, বনযমানী। रा.नि.व.६।

**दलाग्रलोहिता** । स्त्री। चिल्लीनामपत्रशाके। रा.नि.व.७। पलाग्रलोहितापि पठ्यते।

**दलाढक:** । पुं। नागकेशरवृक्षे। নাগেশ্বর গাছ। गैरिके। গেরিমাটী। समुद्रफेने। आरण्यतिलकवृक्षे। বন তিল। काके। पृश्निपर्ण्याम्। চাকুলে। चक्रवाके। मे.। करिकर्णे। कुन्दवृक्षे। शिरीषवृक्षे। हे.च.।

**दलाढकी** । स्त्री। फणिज्झकवृक्षे। वै.निघ.। पृश्निपर्ण्याम्। চাকুলে। मे.।

**दलाढ्य: (क:)** । पुं। कुन्दपुष्पवृक्षे। वै.निघ.। पङ्ककर्दमे। দলদলিয়া কাদা। त्रिका.।

**दलामलम्** । क्ली। मूर्व्वायाम्। মুর্গা। मदनकवृक्षे। मरुयां। दमनकवृक्षे। দনা। मे.। मदनवृक्षे। ময়না গাছ। श.र.।

**दलाम्लम्** । क्ली। चुक्रनामपत्रशाके। চুকা শাক। रा.नि.व.७। [वै.नि.

**दलाह्वम्** । क्ली। तमालपत्रे। তেজপত্র। मद.

**दलिकम्** । क्ली। काष्ठे। हे.च.। [त्रिका.।

**दलेगन्ध:** । पुं। सप्तपर्णवृक्षे। ছাতিম্ গাছ।

**दव:** । पुं। अग्नौ। भ.टी.नी.। उपतापे। दवथौ, मुखताल्वोष्ठानां दाहे। वै.निघ.।

**दवदग्धकम्** । क्ली। कत्तृणे। গন্ধতৃণ বা রামকর্পূর। रा.नि.व.८।

**दवथु:** । पुं। दवे, चक्षुरादिभ्यस्तीव्रोष्मप्रवृत्तौ। वा.ज्व.चि.१ग्र.। "उद्रिक्तपित्ते दवथुः।"

**दशजटा** । स्त्री। दशमूले। वै.निघ.२भ.वा. व्या.चि.रास्नादिचूर्णे।

**दशन:** । पुं। दन्ते। भ.टी.भ.।

**दशनवास:** । क्ली। ओष्ठे। अम.।

**दशनवीज:** । पुं। दाडिम्बवृक्षे। वै.निघ.।

**दशनाढ्या** । स्त्री। चाङ्गेर्य्याम्। আমরুল। चुक्रशाके। চুকাপালং। श.च.।

**दशनोच्छिष्ट:** । पुं। निःश्वासे। मे.।

**दशपु(पू)रम्** । क्ली। जलमुस्तायाम्, कैवर्त्तमुस्तके। अम.। भ.टी.भ.।

**दशमूत्रकम्** । क्ली। दशविधमूत्रे। हस्तिमहिषोष्ट्रगवाजमेषाश्वगर्दभनरनारीणां मूत्रे। रा.नि.व.२२।

**दशमूलम्** । क्ली। विल्वादिदशविधवृक्षमूले, पञ्चमूलीद्वये वा। "विल्वश्योणाकगाम्भारीपाटलाग्निमन्थिकारिकाः। शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम्॥" रा.नि.व.१२। वर्गोऽयं वातघ्नः। वा.सू.१५ग्र.भद्रदार्व्वादौ। गुणाः—दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः। तन्द्राशोथज्वरानाहपार्श्वपीड़ारुचीर्हरेत्॥" भा.। सूतिकारोगहरम्। चक्र.।

**दशमूलघृतम्** । क्ली। गुल्मे घृतम्। ग्रन्थघृतं

श.। क्वाथार्थं—दशमूलं ६४ प. वारि ६४ श. शे. १६ श.। कल्कार्थं—शुण्ठी पिप्पली मरिचं यवक्षारः सैन्धवलवणम्, एषां प्र. २ प.। च. चि.५च.।

**दशमूलतैलम्** । क्ली । कर्णरोगे तैलम् । पाठः—"दशमूलीकषायेण तैलप्रस्थं विपाचयेत् । एतत्कल्कं प्रदायैव वाधिर्य्ये परमौषधम् ॥" तिलतैलं ४ श. दशमूलं ४ श. वारि १६ श. शे. ४ श.। क्वाथार्थं—दशमूलं १ श.। च.द.। सा.कौ.। अन्यत् शिरोरोगे—दशमूलं प्र. ६ प. करञ्जनिर्गुण्डी जयन्ती धुस्तूराणां प्र. ६ प. जलं ६४ श. शे. १६ श.। कटुतैलं ४ श.। कल्कार्थं—दशमूलधुस्तूरकरञ्जनिर्गुण्डीजयन्तीनां प्र. ६ तो.। अत्राष्टाङ्गावलेहकल्कमपि ददति वृद्धाः। सा.कौ.।

**दशरथः** । पुं । शरीरे । वै.निघ.।

**दशशतकरदुग्धम्** । क्ली । अर्कक्षीरे । आकन्द आटा। वै.निघ.२भ.कर्णक.ज्व.चि.।

**दशशताङ्घ्रिः** । स्त्री। शतावर्य्याम् । शतमूली। वै.निघ.। [पक्वपिकच्छूपर्पटककुमारीषु ।

**दशशाकः** । पुं । त्वक्पत्रमूलफलदण्डाङ्कुरपु-

**दशसारवटी** । स्त्री । वातव्याधौ वटी । "यष्टि धात्री बला द्राक्षा एला चन्दनवालुकं । मधूकपुष्पं खर्ज्जूरं दाडिमं पेषयेत्समं । सर्व्वतुल्या सिता योज्या पलार्द्धं भक्षयेत्सदा । दशसारवटी ख्याता......।" र.सा.सं.।

**दशा** । स्त्री । बाल्याद्यवस्थायाम्, बाल्ययौवनप्रौढवार्द्धक्येषु । अत्रस्य चैत्रफलदशविधकालपरिमाणे । सा च समादयं सहादशदिनं वर्षत्रयं ज्ञेयम् । "वासराः सप्ततिः द्वौ च वर्षाणाञ्च तथात्रयं । दशाप्रमाणं वाहानां शालिहोत्रेण कीर्त्तितम् ॥" अ.द.५च.।

**दशाङ्गगुग्गुलुः** । पुं । मेदोरोगे । त्रिकटु चित्रकमूलं त्रिफला मुस्ता विडङ्गं एषां प्र. चूर्णं १ तो. गुग्गुलु ८ तो.। भा.।

**दशाङ्गधूपः** । पुं । दशविधद्रव्याक्तधूपविशेषे । यथा—"पञ्चाशद्गन्धपाषाणाणाकाम्याहिषगुग्गुलुः । चतुरंशं चन्दनञ्च जटामांसी च तावती । त्रिभागः सार्ज्जकः सारः तावदेव हि बालकं । उशीरन्तु द्विभागं स्यात्नखस्वल्पं ततः। कर्पूरी लगनाभिश्च एकभागौ प्रकीर्त्तितौ ॥" अन्यः—"वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली । पाठा प्रतिविषा व्योषं दशाङ्गः काश्यपोदितः ॥" अयं धूपः सर्व्वग्रहजित् । वा.उ.३च.। [गाछ । भा.।

**दशाङ्गुलः** । पुं, क्ली । खर्व्वूजाख्याम् । थर्मुज

**दशाङ्घ्रिः** । पुं । दशमूले । वा.व्या.महाराक्षादौ ।

**दशानिकः** । पुं । दन्तीवृक्षे । श.च.।

**दशारुहा** । स्त्री। कैवर्त्तमुस्तायां। रा.नि.व.६।

**दष्टपीडितम्** । क्ली । दंशनविशेषे । "दंष्ट्रापदानि चत्वारि तद्दष्टनिपीडितम् ।" वा.उ.३५ च.। [तुङ्गिने । छगा ।

**दस्रः** । पुं । अश्विनीकुमारे । गर्दभे । मे.। क्ली ।

**दस्रौ** । पुं (द्वि.) । अश्विनीकुमारौ । अम.।

**दहनः** । पुं । चित्रकवृक्षे । रा.नि.व.६।२३। वा.सू.१५च.। भल्लातकवृक्षे । रा.नि.व.११। सि.यो.श्ल.मे.चि.चव्यादिलिहे । "तालीशजीरकतुगादहनैः।" वा.सू.१५च,वरुणादिः। "दहनमीरटविल्वविषाणिकाः।" च.द.च.च.चि.। वृश्चिकाख्याम् । विछाती । रा.नि.व.२१। गुग्गुलौ । पक्षिविशेषे । पायरा। रा.नि.व.१९। क्ली। दाहे । अगुरुणि । काञ्जिकभेदे । वै.निघ.।

**दहनकेतनः** । पुं । धूमे । है.च.। [व.१२।

**दहनाग(गु)रु** । क्ली। दाहागुरुणि । रा.नि.

**दहनारातिः** । पुं । जले । रा.नि.व.१४।

**दहनी** । स्त्री । मूर्व्वायां । मूर्गा । रा.नि.व.१।

**दहनोपलः** । पुं । सूर्य्यकान्तमणौ । है.च.।

**दहरः** । पुं । कुकुटे । बालके । मूषिके । मे.।

**दक्षः** । पुं । कुकुटे । चिका.। त्रि.यो.कास-चि. दशमूलघृते । वृषभेदे । विश्व.।

**दक्षाण्डत्वक्** । स्त्री । कुकुटाण्डत्वचि । कुक्ड़ार डिमेर खोला । भैष.नेत्र.चि.। भा.म.४भ. कर्णरो.चि.। "दक्षाण्डत्वक् च वा॥"

**दक्षाख्यः** । पुं । वृषे । वै.निघ.।

**दक्षिणदेशजा** । स्त्री । लताकस्तूर्य्याम् । लताकस्तूरी । श.चि.।

**दक्षिणवायुः** । पुं । मलयमारुते । दक्षिणदिग्वायु । गुणाः—"मधुरश्चाविदाही च कषायानुरसो लघुः । दक्षिणो मारुतः श्रेष्ठः चक्षुष्यो बलवर्द्धनः । रक्तपित्तप्रशमनो न च वातप्रकोपनः ॥" सु.सू. ।

**दक्षिणायनम्** । क्ली । रवेर्दक्षिणतो गतौ । यदा रविः कर्कटराश्यवस्थितो भवति तदा तदारभते । तच्च श्रावणादिमासषट्के भवति । "कर्कटावस्थिते भानौ दक्षिणायनमुच्यते ।" सु.सू. ।

**दक्षिणावर्त्तकी** । स्त्री । वृश्चिकाल्यां । विछाति गाछ । रा.नि.व.६ । मेषशृङ्ग्यां । वै.निघ. ।

**दक्षिणावर्त्तफला** । स्त्री । वृद्धौषधे । वै. निघ. ।

**दक्षिणावर्त्ता** । स्त्री । मेषशृङ्ग्यां । रा.नि.व.६ ।

**दक्षेयः** । पुं । गृध्रे । वै.निघ. ।

**दाड़कः** । पुं । दन्ते । शब्दार्थकल्पतरुः ।

**दाड़िमः** । पुं । एलायाम् । मे. । (Punica Granatum.) The Pomegranate. स्वनामख्यातफलवृक्षे । दाड़िम गाछ । हिं आनार । मं दाड़िम । कं दाड़िम्ब । तें डानिम्मचेट्टु । उत्. दालिम्ब । ता. मादलइचेडि । गुर्ज. डाडम । फलगुणाः—मधुराम्लकषायं कासवातकफपित्तघ्नं ग्राहि दीपनं लघूष्णं शीतलं श्रमघ्नं रुचिकरम् । दाड़िमम् अम्लमधुरभेदेन द्विविधं, तयोः प्रथमं वातकफहारि, द्वितीयं तापहारि लघु पथ्यञ्च । रा.नि.व.११ । स्वादुस्वाद्वम्लकेवलाम्लभेदेन त्रिभेदमिच्छन्ति भावप्रकाशः—स्वादु त्रिदोषघ्नं तृष्णादाहज्वरघ्नं हृत्कण्ठमुखदुर्गन्धघ्नं तर्पणं शुक्रलं लघु कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् । स्वाद्वम्लं—दीपनं रुच्यं लघु किञ्चित्पित्तकरञ्च । अम्लन्तु —पित्तजनकं वातकफघ्नञ्च । तन्मूलञ्च क्रिमिहरम् । भा. । श्रेष्ठम् अम्लं श्वासरुचिहृद्यहरं कण्ठशोधनं पित्तकफविशोधकम् । राज. । "श्रेष्ठं वातादिकव्यहरं दाड़िमनामयघ्नम् ।" चक्रि.१७अ. । क्ली । दाड़िमपर्णे । सि.यो.हत्कृदाहज्व.चि. ।

**दाड़िमत्वक्** । स्त्री । दाड़िमफलवल्कली । दाड़िमेर खोला । सि.यो.ब.सा.चि.उत्पलादिः ।

**दाड़िमवच(पुष्प:)कः** । पुं । रोहितकवृक्षे । रोहा, रक्तना वाह । रा.नि.व.८ ।

**दाड़िमप्रियः** । पुं । कीरे । शुक पक्षी । श.र. ।

**दाड़िमभक्षणः** । पुं । शुकपक्षिणि । श.च. ।

**दाड़िमाष्टकम्** । क्ली । चूर्णविशेषम् । "कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् । यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकं । पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतम् ॥" च.द. ।

**दाड़िमी** । स्त्री । दाड़िमवृक्षे । वै.निघ. ।

**दाड़िमीरसः** । पुं । दाड़िमाम्बुनि । च.द. ।

**दाड़िमीविषम्** । क्ली । दारुमीचनामकविषभेदे । दार्मुज । प.मु. । [११ ।

**दाड़िमीसारः** । पुं । दाड़िमवृक्षे । रा.नि.व.

**दाड़ि(ड़ी)म्बः** । पुं । दाड़िमवृक्षे । प.मु. ।

**दाढ़ा** । स्त्री । दंष्ट्राभेदे । दाड़ा । हे.च. ।

**दाढ़िका** । स्त्री । दाड़ी इति ख्याते मुखावयवे । हे.च. ।

**दात्यूहः** । पुं । शुकपक्षिणि । प.मु. । जलककपक्षिणि । डाक पाखी । गुणाः—वातघ्नः वृष्यः बलदः शुक्रदः श्रमघ्नश्च । अत्रि.२१अ. । चातकपक्षिणि । चिका. ।

**दात्यौहः** । पुं । जलकाके, दातूहे । श.र. ।

**दात्रम्** । क्ली । अस्त्रविशेषे । दा ।

**दाधिकः** । त्रि । दधिसम्बन्धिनि । क्ली । दधिसंस्कृतभक्ते । भा.म.३भ.अग्नद्र.मू.चि. ।

**दानम्** । क्ली । कुङ्कुमे । च.द.वा.व्या.चि.१म्नश्रती.प्रसारणीतैले । गजमदे । मे. । नवकीटरजमधुनि । कुटुरे मधु । गुणाः—रुच्यं दीपनं कफच्छर्दिमेहघ्नञ्च । राज. । [निघ. ।

**दानवप्रिया** । स्त्री । नागवल्लीलतायाम् । वै.

**दान्तः** । पुं । दमनकक्षुपे । दना गाछ । रा. नि.व.१० ।

**दामनः** । पुं । दमनकवृक्षे । वै.निघ. ।

**दामबन्धः (नः)** । क्ली । व्रणबन्धनविशेषे । लक्षणं—"दामाकृतिश्चतुष्कोणो बन्धः स्याद्दामसंज्ञितः ।" इति । सु.सू.१८अ. । दाम अनेकगोबन्धनरज्जुः । दौंका । तदाकारः चतुष्पादयुक्तः दामबन्धः । च.द. ।

दामाञ्चलम् । क्ली। अश्वादेः पादबन्धनरज्जौ। हे.च. ।

दामोदर: । पुं । व्याघ्रगर्भाख्यवैद्यकग्रन्थप्रणेतरि । [नि.व.१८ ।

दाम्भिक: । त्रि । वाचाले । पुं । वके । रा.

दायक: । पुं । बालके । मे. । पुत्रे । हे.च. ।

दारक: । पुं । ग्राम्यशूकरे । रा.नि.व.१८ । त्रि। विदारके । वै.निघ. । हरिद्वर्णस्थावरविषभेदे । चरि.श्स्थान ५६अ. ।

दारकर्म्म । क्ली । विवाहे । त्रिका. ।

दारणम् । क्ली । कतकफले । निर्म्मल्यां । अ. प्र. । व्रणविदारणद्रव्ये । ফোড়া গলান দ্রব্য । यथा—"चिरविल्वोऽग्निको दन्ती चित्रको हयमारक: । कपोतगृध्रकङ्कानां पुरीषाणि च दारणम् । क्षारद्रव्याणि यानीह क्षारो वा दारणम्परम् ॥" सु. । पुं । कतकवृक्षे । वै.निघ. ।

दारद: । पुं । हिङ्गुले । त्रिका. । पारदे । मे. । दरददेशीयविषे । विषमात्रे । अम. । [१८ ।

दारबलिभुक् । पुं । वकपक्षिणि । रा.नि.व.

दारी । स्त्री । पाददारिनामक्षुद्ररोगे । "परिक्रमणशीलस्य वायुरत्यर्थरूक्षयो: । पादयो: कुरुते दारीं सरुजां तलसंश्रिताम् ॥" सु.नि.१३अ. ।

दारु । पुं,क्ली । काष्ठे । अम. । क्ली । दार्व्याम् । দারুহরিদ্রা । र.सा.सं.मेहमुद्गररसे । च.द.पाण्डु.चि. । वै.निघ.२भ.अ.सा.चि.पाठादिकषाये । वा.व्या.स्वल्पनारायणतैले । देवदारुणि । प.मु. । सि.यो.सा.ज्व.चि.अष्टादशाङ्गे । "भूनिम्बदारुदशमूल… ।" च.द.ज्व.चि.अपराजिताधूपे । वा.ज्व. रास्नादि: । "रास्नावत्सादनीदारु ।" दारुमूषे। দারুমুজ । र.सा.सं. । पित्तले । मे. ।

दारुकम् । क्ली । देवदारुणि । रा.नि.व.१२ । वा.व्या.चि. । तैलदेवदारुणि । भीमपित्तले । वै. निघ. । [कला । रा.नि.व.११ ।

दारुकदली । स्त्री । काष्ठकदल्याम् । वन

दारुगन्धा । स्त्री । चीड़ानामकदेवदारुभेदे । रा.नि.व.१२ । [दारुणकरोगे ।

दारुण: । पुं । चित्रकवृक्षे । रा.नि.व.६।२३ ।

दारुणक: । पुं । क्षुद्ररोगभेदे । वक्षवृक्षे । वै. निघ.२भ.मूर्च्छा-चि. । क्ली । तन्नामकक्षुद्ररोगे । रूसी খুসকী । लक्षणं यथा—"दारुणा कण्डुरा रूक्षा केशभूमि: प्रपाट्यते । कफमारुतकोपेन विद्याद्दारुणकन्तु तम् ॥" सु.नि.१३अ. । [सु. ।

दारुणकर्म्म । क्ली । मृदुव्रणानां कठिनीकरणे ।

दारुनिशा । स्त्री । दारुहरिद्रायाम् । দারুহরিদ্রা । रा.नि.व.६ । वै.निघ.२भ.मध्यमलाक्षातैले । च.द.वा.र.चि.,मेह.चि. । "वत्सादनीदारुनिशा ।"

दारुपत्री । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

दारुपीता । स्त्री। दारुहरिद्रायां । रा.नि.व.६।

दारुफलम् । क्ली । पेस्ता इति ख्याते फले । वै.निघ. । [চোগাপ । रा.नि.व.१८ ।

दारुमत्स्या (त्स्याह्वा,ह्वा) । स्त्री। गोधायाम् ।

दारुमूषा । स्त्री । दार्मुज इति प्रसिद्धे स्थावरविषभेदे । দার্মুজ । भा.म.१भ.ज्व.चि. ।

दारुमोच: । पुं । स्वनामख्यातविषभेदे । দার্মুজ । प.मु. ।

दारुविषम् । क्ली । दारुमोचविषे । "भवेदाखुविषं दारुविषं पाषाणसंज्ञकम् । तद्भेदा: भृङ्गगोदन्तदाड़िमीस्फटिकादय:॥" प.मु. ।

दारुसिता । स्त्री । (Cinnamomum zeylanicum.) दारुचिनीतिख्यातायां मधुरत्वचि । দারুচিনি । हिं डालचिनि । तें लवलिंगु । ता. करुवा । गुणा:—"उक्ता दारुसिता स्वादी तिक्ता चानिलपित्तहृत् । सुरभि: शुक्रला वर्ण्या मुखशोषतृषापहा ॥" भा.उ.वाजी.चि. ।

दारुहरिद्रा । स्त्री। (Coscinium fenestratum. [Berberideae] Berberis Asiatica and other species.) स्वनामख्यातपीतकाष्ठविशेषे । দারুহরিদ্রা । हिं दारुहलदि, झारकेहलदि । कं मरमरिसिन । तें मनिपसुपु । ता. मरमञ्जल । गुणा:—तिक्ता कटूष्णा व्रणघ्नी मेहघ्नी कण्डूविसर्पत्वग्दोषकर्णाक्षिरोगघ्नी च । रा.नि.व.६ । "दार्व्वीनिशागुणा: किन्तु नेत्रकर्णास्यरोगनुत् ।" भा. । वातपित्तश्लेष्म विशेषेण कामलिनप्रदहरी च । दारु. ।

**दारुहस्तकः ।** पुं । दर्व्वी । काठेर हाता । सु.सू.७अ । [अबे । शब्दार्थकल्पतरुः ।

**दार्दुरः ।** पुं । दक्षिणमुखशङ्खे । खाचायाम् ।

**दार्व्वंशः ।** पुं । मयूरे । वै.निघ. ।

**दार्व्वाघाटः (तः)** । पुं । काष्ठकुट्टपक्षिणि । काठ्ठोकरा पाखी । अम. । श.र. ।

**दार्व्विका ।** स्त्री । खर्परधातौ । खापर । प. मु. । गोजिह्वाक्षुपे । रा.नि.व.४ । रसाञ्जने । वै. निघ. । [श्रिया शाक । र.मा. ।

**दार्व्विपत्रिका ।** स्त्री । दार्व्वीशाके । गो-

**दार्व्वी ।** स्त्री । दारुहरिद्रायाम् । प.मु. ।

**दार्व्वीक्वाथसमुद्भवम् ।** क्ली । कृत्रिमरसाञ्जने । रा.नि.व.१३ ।

**दार्व्वीक्वाथोद्भवम् ।** क्ली । कृत्रिमाञ्जने । रसोत् इति पारस्यभाषा । प.मु. ।

**दार्व्वीत्वक् ।** स्त्री । दारुहरिद्रात्वचि । सि.यो. काम.चि.मधुरवटके । "दार्व्वीत्वक्त्रिफलाव्योष ।" त्वच एव ग्राह्यत्वम् । अभावे काष्ठम् । श्रीकण्ठः ।

**दार्व्व्यम् ।** क्ली । रसाञ्जने । वै.निघ. ।

**दार्व्व्यादिः ।** पुं । कषायविशेषे । "दार्व्वीरसाञ्जनकिरातवृषाब्दबिल्वसक्षौद्रचन्दनदिनेशभवप्रसूनैः । क्वाथः कृतो मधुयुतो विधिना विपीतः रक्तं सितञ्च सरुजं प्रदरं निहन्ति ।" भा. । "दार्व्वी रसाञ्जनवृषाब्दकिरातबिल्वभल्लातकैरवकृतो मधुना कषायः ।" च.द. ।

**दालम् ।** क्ली । षट्विधमध्वन्तर्गतमधुविशेषे । कुटुरे मधू । एतदापीतवर्णैः सूक्ष्ममक्षिकाभिः इन्द्रनीलवर्णाभिः तरुकोटरादौ उत्पाद्यते । "इन्द्रनीलदलाकाराः सूक्ष्माश्चिन्वन्ति मक्षिकाः । यद्वृक्षकोटरान्तःस्थं मधु दालमिदं स्मृतम् ॥" गुणाः— कटु कषायमम्लं मधुरं पित्तकरञ्च । रा.नि.व.१४ । पुं । कोद्रवे । है.च. ।

**दालकशर्करा ।** स्त्री । दालकमधुजातशर्करायाम् । दालमधुर चिनि । सा तन्मधुतुल्यगुणा । रा.नि.व.१४ ।

**दालनः ।** पुं । वायुजन्यदन्तगतमुखरोगे । "दौर्य्यमाणेष्विव रुजा यस्य दन्तेषु जायते । दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥" मा. नि. । तथा "दाल्यन्ते बहुधा दन्ता यस्मिन् तीव्ररुगन्विताः । दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥" सु.सू.४५अ. ।

**दालवः ।** पुं । स्थावरविषभेदे । है.च. ।

**दाला ।** स्त्री । आरिखदिरे । रा.नि.व.८ । इन्द्रवारुण्याम् । वै.निघ. । महाकाले । माकाल । भा. ।

**दालिः ।** स्त्री । द्विदले । दाल । "स्फोटस्तु चणकादीनां दालिस्तु परिकीर्त्तिता ।" रा.नि.व.१६ ।

**दालिका ।** स्त्री । दाल्याम् । डाल । महाकाले । माकाल । भा. ।

**दालिमः ।** पुं । दाडिम्बवृक्षे । अ.टी.भ. ।

**दाली ।** स्त्री । देवदालीलतायाम् । पीत घोषालता । हिं घघरबेल । रा.नि.व.३ । See कगरी । द्विदले । दाल । "दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे ।" तत्पाकविधिः—"दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः । संयुक्ता सूपनाम्नी स्यात्कथ्यन्ते तद्गुणा अथ । सूपो विष्टम्भको रुक्षः शीतस्तु स विशेषतः । निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत् ॥" भा. । विट्खदिरवृक्षे । गुयेबाबला । रा.नि.व.८ ।

**दासः ।** पुं । नीलझिण्ट्याम् । उष्ट्रे । वै.निघ. ।

**दासपु(पू)रम् ।** क्ली । जलमुस्तके, परिपेलवृक्षे । नागरमुता । श.र. । रा.नि.व.८ ।

**दासिका ।** स्त्री । दासीकुरुण्टके । नीलपुष्प झाँटी । श.चि. ।

**दासी ।** स्त्री । पीतपुष्पझिण्टीक्षुपे । पीतझाँटी । नीलझिण्ट्यां । कुलझुटी, नीलझाँटी । रा.नि.व. १० । काकजङ्घायाम् । केउयाका । रा.नि.व.४ । See नीलाम्लानः ।

**दासीकुरुण्टकः ।** पुं । नीलपुष्पझिण्टीक्षुपे । नीलझाँटी । सु.सू.३८अ. । See नीलाम्लानः । "नीलपुष्पः स एव दासीकुरुण्टकः ।" डल्हणः ।

**दासेरः (कः)** । पुं । उष्ट्रे । मे. ।

**दास्यादिः ।** पुं । विषमज्वरे कषायभेदे । "दासीदारुकलिङ्गलोहितलताश्यामाकपाठाशठीप-

खसूशीरकिरातकुष्ठरकणात्रायन्तिकापद्मकैः । व
चीधान्यकनागराब्दसरलैः शिग्रुम्बुसिंहीशिवाव्याघ्री
मर्पटदर्भमूलकटुकाभल्लामृतापुष्करैः । वातुंस्यं वि-
षमं त्रिदोषजनितं...... ।" भैष. ।

**दाहः** । पुं । भस्मीकरणे । "सर्व्वाङ्गीणस्तीव्र उ-
ष्मा दाहः ।" चरक: । वा.ज्व.चि.१अ. । तन्नामक-
पित्तजरोगे । জ্বলুনি রোগ । "त्वचं प्राप्य समा-
नोष्मा पित्तरक्ताभिमूर्च्छितः । दाहं प्रकुरुते घोरं
पित्तवत्तत्र भेषजम् ॥" दाहः तृष्णारोधजरक्तपूर्ण-
कोष्टजधातुक्षयजपित्तजक्षतजरक्तजभेदेन षड्विधः,
मर्म्माभिघातजश्चैक इति सप्तविधः । [नि.व.६ ।

**दाहकः** । पुं । चित्रके । रक्तचित्रकवृक्षे । रा.

**दाहकर्षितः** । त्रि । दाहपीड़िते ।

**दाहकाष्ठम्** । क्ली । दाहागुरुणि । वै.निघ. ।

**दाहग(गु)रु** । क्ली । अगुरुविशेषे गुर्जरदेश-
प्रसिद्धे । অগুরুবিশেষ । गुणाः – दाहागुरु क-
टूष्णं केशवर्द्धनं वर्णकरं केशदोषघ्नं सौगन्ध्यप्रद-
ञ्च । रा.नि.व.१२ ।

**दाहज्वरः** । पुं । दाहपूर्व्वके ज्वरे । দাহপূর্ব্ব-
ক জ্বর । "करोत्यादौ तथा पित्तं त्वक्स्थं दाह-
मतीव च । तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीत-
मन्ततः ॥" मा.नि. ।

**दाहदा** । स्त्री । नागवल्लीलतायाम् । वै.निघ. ।

**दाहनिःश्वासः** । पुं । सुगन्धार्जकवृक्षे । वै.
निघ. ।

**दाहसरः** । क्ली । श्मशाने । त्रिका. ।

**दाहहरणम्** । क्ली । उशीरे । श.च. ।

**दाक्षायणम्** । क्ली । स्वर्णे । वै.निघ. ।

**दाक्षाय(या)णी** । स्त्री । दन्तीक्षुपे । र.मा. ।

**दाक्षिणात्यः** । पुं । नारिकेलवृक्षे । रा.नि.व.
११ ।

**दिक्** । स्त्री । रीतौ । পিতল । सु.सू.४३अ. ।

**दिक्कः** । पुं । करिशावके । श.र. ।

**दिक्पालसङ्ख्या** । स्त्री । अष्टसंख्यायाम् ।
আট । भा.ज्व.कल्पतरौ । [विष.चि. ।

**दिग्धविद्धः** । त्रि । विषाक्तबाणविद्धे । च.द.

**दिङ्कः** । पुं । लिक्षायां । ४ वा ८ त्रसरेणु ।
शब्दार्थकल्पतरु: ।

**दितः** । त्रि । छिन्ने । अम. ।

**दिनम्** । क्ली । दिवसे । रा.नि.व.२१ ।

**दिनकरः** । पुं । सूर्य्ये । हे.च. ।

**दिनकेशान्तकः** । पुं । वटपत्रपाषाणभेदे ।
বড় পাথরকুচা । वै.निघ. ।

**दिनचर्य्या** । स्त्री । दिवसे योविधिः स्वास्थ्य-
कारस्तथाचरणे । तत्र ब्राह्ममुहूर्त्तोत्थानाभीष्टदेव-
तास्मरणम्, दध्याज्यादर्शबिल्वगोरोचनादिदर्शन-
स्पर्शनादि, घृते स्वमुखदर्शनम्, उषसि मलादि-
विसर्ज्जनम्, दन्तधावनजिह्वानिर्लेखनमुखप्रक्षाल-
नतैलाभ्यङ्गस्नानभोजनादि च । भा.च.द. ।

**दिनदुःखितः** । पुं । चक्रवाके । स्त्री । तत्-
पत्न्याम् । श.र. ।

**दिनमणिः** । पुं । सूर्य्ये । त्रिका. ।

**दिनादिः** । पुं । प्रभाते । रा.नि.व.२१ ।

**दिनान्तः** । पुं । सायंकाले । अम. ।

**दिनान्धः** । पुं । पेचके । वै.निघ. ।

**दिनेशः** । पुं । सूर्य्ये । अर्कवृक्षे । वै.निघ.२भ.
वा.व्या.चि.शतपुष्पालेपे ।

**दिनेशपुष्पम्** । क्ली । कैरवपुष्पे । নীলশুন্দী
পুষ্প । चि.क्र.क.प्रदरचि. ।

**दिलीरम्** । क्ली । शिलीन्ध्रे । কোঁড়ক ছাতা ।
हारा. ।

**दिवसः** । पुं, क्ली । दिने ।

**दिवसमुखम्** । क्ली । प्रभाते । हला. ।

**दिवा** । व्य, पुं (न्) । दिवसे । अम. ।

**दिवाकरः** । पुं । काके । सूर्य्यपक्षे । श.च. ।
अर्कवृक्षे । अम. ।

**दिवाकीर्त्तिः** । पुं । पेचके । नापिते । हे.च. ।

**दिवाटनः** । पुं । काके । शब्दार्थकल्प. ।

**दिवान्धः** । पुं । पेचके । रा.नि.व.२१ । त्रि ।
दृष्टिरोगयुक्ते । দিনকাণা । लक्षणं—"प्राप्ते तृ-
तीयं पटलञ्च दोषे दिवा न पश्येत् निशि वीक्षते

सः। रात्रौ च शीतानुष्णीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् ॥" मा.नि. । (न्धा) स्त्री । वल्गुलापक्षिणि । रा.नि.व.१८ ।

**दिवान्धकी (न्धिका)** । स्त्री । कुकुन्दर्य्यां । छुँचो । वै.निघ. ।

**दिवाभीतः (तिः)** । पुं । पेचके । त्रिका । श.र. । क्ली । श्वेतपद्मे । वै.निघ. ।

**दिवामध्यम्** । क्ली । मध्याह्ने । हे.च. ।

**दिवास्वापः** । पुं । दिवानिद्रायाम् । दिने घुमान । तस्य विधिः—"सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धः अन्यत्र ग्रीष्मात् ।" सु.शा.४अ. । "दिवा सात्मीकृतं यैस्तु रात्रौ वा यदि वा दिवा । न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥" "दिवास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः । ग्रीष्मवर्षासु कालेषु दिवास्वप्नो निषिध्यति ॥" भा. ।

**दिवास्वापा** । स्त्री । पक्षिविशेषे, वल्गुला इति लोके । रा.नि.व.१८ ।

**दिविः** । पुं । चाषपक्षिणि । श.मा. ।

**दिविजम्** । क्ली । कुङ्कुमागुरुचन्दने । वै.निघ. ।

**दिवी** । स्त्री । उपजिह्विकाकीटे । हारा. ।

**दिवोकाः** । पुं । चातके । मे. । हरिणे । वै.निघ. ।

**दिवोदासः** । पुं । काशीराजधन्वन्तरौ । यः चन्द्रवंशीयभीमरथनरपतेः पुत्र आसीत् । त्रिका. ।

**दिवोद्भवा** । स्त्री । एलायां । शब्दार्थकल्पतरुः ।

**दिव्यः** । गुग्गुलौ । रा.नि.व.१२ । यवे । रा.नि.व.१६ । अर्ज्जुनवृक्षे । वै.निघ. । क्ली । कान्तलौहे । प.मु. । लवङ्गे । रा.नि.व.१२ । चन्दने । वै.निघ. । बालके । वाला । ज.द.१२अ. । [४अ. ।

**दिव्यकः** । पुं । निर्विषसर्पविशेषे । सु.कल्प.

**दिव्यगन्धः** । पुं । गन्धके । रा.नि.व.१३ । क्ली । लवङ्गे । रा.नि.व.१२ ।

**दिव्यगन्धा** । स्त्री । स्थूलैलायाम् । बड़ एलाइच । रा.नि.व.६ । महाचुञ्चुक्षुपे । रा.नि.व.४ । लवङ्गलतायाम् । श.चि. । [वै.निघ. ।

**दिव्यचन्दनम्** । क्ली । हरिचन्दने । लवङ्गे ।

**दिव्यचक्षुः** । पुं । वानरे । श.मा. । उपचक्षुषि । चशमा । सुगन्धभेदे । मे. ।

**दिव्यतुम्बी** । स्त्री । अलाबूभेदे । वै.निघ. ।

**दिव्यतेजाः** । स्त्री । ब्राह्मीनाममहाक्षुपे । रा.नि.व.५ ।

**दिव्यपञ्चामृतम्** । क्ली । समभागगव्यघृतदधिदुग्धमधुशर्करासु । "गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितम् ।" रा.नि.व.२२ । [व.१० ।

**दिव्यपुष्पः** । पुं । श्वेतकरवीरवृक्षे । रा.नि.

**दिव्यपुष्पा (ष्पी)** । स्त्री । देवद्रोण्याम् । बड़ घलघसा । रा.नि.व.५ ।

**दिव्यपुष्पिका** । स्त्री । देवद्रोणक्षुपे, महाद्रोण्याम् । बड़ घलघसा । वै.निघ. । रक्तार्कवृक्षे । र.मा. ।

**दिव्यरसः** । पुं । पारदे । रा.नि.व.१३ ।

**दिव्यलता** । स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**दिव्यसारः** । पुं । सर्ज्जवृक्षे । शाल वा धुनार गाछ । रा.नि.व.६ ।

**दिव्या** । स्त्री । महामेदायाम् । ब्राह्म्याम् । विंशी शाक । बन्ध्याकर्कोटक्यां । शतावर्य्यां । स्थूलजीरके । बड़ जीरा । रा.नि.व.५ । श्वेतदूर्व्वायां । रा.नि.व.८ । आमलक्यां । मे. । हरीतक्याम् । रा.नि.व.११ ।

**दिव्यान्नम्** । क्ली । उत्तमान्ने । वै.निघ. ।

**दिव्येलकः** । पुं । राजिलवृश्चिकरजसर्पविशेषे । सु.कल्प.४अ. ।

**दिव्यौषधिः (धी)** । स्त्री । मनःशिलायां । च.द. । मृतलौहे । भा. । च.द.सि.यो.र.पि.चि. खण्डखाद्यलौहे । "दिव्यौषधिहतस्यापि ।" शर्म्मोमूले ।

**दिष्टम्** । क्ली । दारुहरिद्रायाम् । श.मा. ।

**दिष्टान्तः** । पुं । मृत्यौ । अम. ।

**दिष्टिः** । स्त्री । परिमाणे । मे. ।

**दीघिका** । स्त्री । त्रिशतधनुःपरिमितजलाशये । दिघि । "पल्वलं दीघिका वापी यष्टिका मीनगोधिका ।" त्रिका. ।

**दीदिविः** । क्ली । अन्ने । प.मु. ।

**दीनम्** । क्ली । तगरपादिके । रा.नि.व.१० ।

**दीना** । स्त्री । कुकुन्दर्य्याम् । वै.निघ. । मूषिकायां । त्रिका. ।

**दीनारः** । पुं । माषचतुष्टयमाने । ४ माषा अम. । स्वर्णमुद्रायां । মোহর । स्वर्णकर्षद्वये । अ.टी.सा. ।

**दीपकः** । पुं । कासमर्द्दक्षुपे । চাকন্দা । रा.नि.व.४ । चित्रकवृक्षे । वै.निघ,२भ.वा.व्या. । यमान्यां । र.मा. । अजमोदायाम् । जीरके । वै.निघ. । श्येनपक्षिणि । বাজ পাখী । वै.च. । क्ली । कुङ्कुमे । अर. ।

**दीपकर्पूरजः** । पुं । कर्पूरे । वै.निघ. ।

**दीपकिट्टम्** । क्ली । दीपकज्जले । श.मा. ।

**दीपकूपी (खोरी)** । स्त्री । दीपवर्त्त्याम् । সলতে । श.मा. । [रा.नि.व.१२ ।

**दीपतरुः** । पुं । सरलतरौ, सरलदेवदारौ ।

**दीपध्वजः** । पुं । कज्जले । जटा. ।

**दीपनम्** । क्ली । रसस्य संस्कारविशेषे । तन्नामकरससाधनकार्य्यविशेषे । तद्यथा—"कासीसं पञ्चलवणं राजिका मरिचानि च । भूशिग्रुवीजमेकच टङ्कणेन समन्वितं । आलोड्य काञ्जिके दीलायन्त्रे पाकाद्दिनैस्त्रिभिः । दीपनं जायते सम्यक् सूतराजस्य जारणे ॥" अथवा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत् । र.सा.सं । मत्स्योदके । त्रिका. । See पारदः । कुङ्कुमे । त्रिका. । तगरमूले । र.मा. । पुं । पलाण्डौ । रा.नि.व.१७ । शालिञ्चशाके । সাঞ্চে শাক । श.च. । षष्ठाशावशिष्टकषाये । "दीपनस्तु षडंशस्त ।" रा.नि.व.२० । चक्रमर्द्दवृक्षे । कासमर्द्दवृक्षे । रा.नि.व.४ । अग्निगुणभूयिष्ठे द्रव्यमात्रे । "पचेन्नामं वह्निकृद्दीपनं तद्यथा मिसिः ।" भा. । त्रि । पाचके । अग्निगुणभूयिष्ठे । सु.सू.४१अ. ।

**दीपनी** । स्त्री । मेथिकायां । মেতি । पाठायां । আকনাদি । यमान्याम् । रा.नि.व.६ । कर्कटिकायाम् । কাঁকড়ী । वै.निघ. ।

**दीपनीयः** । पुं । यमान्याम् । रा.नि.व.६ । हरितपलाण्डौ । वै.निघ. । त्रि । अग्निदीप्तिकरे ।

**दीपनीयवर्गः** । पुं । तन्नामकलपेयमकाषायवर्गे । यथा—"पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि भवन्ति ।" পিপুল, পিপুলমূল, চই, চিতা, শুঁট, অম্লবেতস বা থৈকল, মরিচ, যমানী, ভেলার মুটি, হিঙ্গু । च.सू.४अ. । "हिविचस्त्रिचकौधान्यमजमोदा च जीरकम् । चतुर्णां स्तुषा द्वेधा गणोऽर्य दीपनः स्मृतः ॥" अर्क.चि. ।

**दीपनीया** । स्त्री । यमान्याम् । मद.व.२ ।

**दीपनीयौषधम्** । क्ली । आग्नेयौषधे, पञ्चकोलादौ । सि यो.मदा.चि । च.द. ।

**दीपपुष्पः** । पुं । चम्पकवृक्षे । रा.नि.व.१० ।

**दीपवृक्षः (कः)** । पुं । सरलदेवदारुवृक्षे । वै.निघ. ।

**दीपशिखा** । स्त्री । कज्जले । शब्दार्थकल्प. ।

**दीपसंज्ञः** । पुं । चित्रकवृक्षे । वै.निघ. ।

**दीपास्यभस्म** । क्ली । दग्धदीपशिखायाम् । প্রদীপের পোড়া শীষ । रस.र.समरी.चि. ।

**दीपिका** । स्त्री । वचायाम् । वै.निघ. ।

**दीप्त(क)म्** । क्ली । हिङ्गुनि । হিং । रा.नि.व.६ । कांस्यधातौ । কাঁসা । सुवर्णे । रा.नि.व.१३ । जम्बीरे । वै.निघ. । पुं । सिंहे । रा.नि.व.१९ । नासारोगविशेषे । নাকজ্বালা । लक्षणं यथा—"घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः । नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति ॥" सु. । निम्बूकवृक्षे । रा.नि.व.११ । [কাঁসা । रा.नि.व.१३ ।

**दीप्तकंसम्** । क्ली । शुद्धकांस्यधातौ । খাঁটী

**दीप्तजिह्वा** । स्त्री । उल्कामुखीग्रमाख्यां । त्रिका. ।

**दीप्तपिङ्गलः** । पुं । सिंहे । रा.नि.व.१९ ।

**दीप्तपुष्पा** । स्त्री । लाङ्गलीवृक्षे । विषलाङ्गलियां । वै.निघ. ।

**दीप्तरसः** । पुं । किञ्चुलुके । কেঁচো । श.च. ।

**दीप्तलोचनः** । पुं । विडाले । रा.नि.व.१९ ।

**दीप्तलोहम्** । क्ली । कांस्यधातौ । प.मु. ।

**दीप्ता (प्ति:)** । स्त्री । लाङ्गलिकावृक्षे । विष-लाङ्गलिया । रा.नि.व.४। ज्योतिष्मतीलतायाम् । लताफटकी । रा.नि.व.३ । लाक्षायाम् । रा.नि. व.६ । मन:शिलायाम् । वै.निघ. । कांस्यधातौ । रा.नि.व.१३ । दीप्तनामनासारोगभेदे । वा.उ. १८च. । See दीप्त: ।

**दीप्ताग्नि:** । त्रि । दीप्तजठराग्नौ । मा.नि. ।

**दीप्ताङ्ग: (ङ्ग:)** । पुं । मयूरे । श.र. । बिड़ाले । श.र. ।

**दीप्तानलम्** । क्ली । सुवर्णे । रा.नि.व.१३ ।

**दीप्ताक्ष:** । पुं । बिड़ाले । त्रिका. । मयूरे । वै.निघ. । [निघ. ।

**दीप्तिक:** । पुं । दुग्धपाषाणे । फुल खड़ि । वै.

**दीप्तोपल:** । पुं । सूर्य्यकान्तमणौ । प.मु. ।

**दीप्य: (क:)** । पुं,क्ली । मयूरशिखायां । रुद्र-जटायाम् । अम. । रक्तचित्रके । कुङ्कुमे । तगरे । निम्बूकवृक्षे । श्येनपक्षिणि । भ. । । जीरके । रा. नि.व.६ । रस.र.सूतिका.चि.पञ्चजीरकगुड़े । भैष. कुष्ठ.चि. । च.द.पञ्चतिक्तघृतगुग्गुलौ । उन्मा.चि. लशुनाद्यघृते । अजमोदायाम् । राक्नुनि । भा.पू. २भ. । यमान्यां । च.द.सि.यो.कास.चि.दशमूल षट्पलकघृते । "तालीशवङ्गिदीप्यकम् ।"

**दीप्यका** । स्त्री । यमान्याम् । अजमोदायाम् । राक्नुनि । भा.पू.१भ. ।

**दीप्यवल्ली** । स्त्री । अजमोदायाम् । वै.निघ. ।

**दीप्या** । स्त्री । कृष्णजीरकभेदे । মোটা কৃষ্ণ জীরে । रा.नि.व.६ । यमान्याम् । भा. ।

**दीर्घ:** । पुं । रामशरे । रा.नि.व.८। लताशाले । र.मा. । कोङ्कणदेशप्रसिद्धे माड़वृक्षे । रा.नि.व. ८ । रक्तकशालौ । रा.नि.व.१६। इत्कटे । र.मा.। उष्ट्रे । रा.नि.व.१९ । त्रि । आयते ।

**दीर्घकम्** । क्ली, पुं । कृष्णजीरके । मद.व.२ । भरवृक्षे । शैलजीरके । उशीरे । उष्ट्रे । शाकवृक्षे । শেগুন গাছ । वै.निघ. ।

**दीर्घकणा** । स्त्री । श्वेतजीरके । শাদা জীরা । रा.नि.व.६ ।

**दीर्घकण्ट: (क:)** । पुं । वर्बूरवृक्षे । বাবলা গাছ । रा.नि.व.८ ।

**दीर्घकण्ठ: (क:)** । पुं। वकपक्षिणि । श.च.।

**दीर्घकन्द: (क:)** । पुं । मालाकन्दे । वै. निघ. । मुखालौ । মৌ আলু । (कम्) क्ली । मूलके । মূলা । रा.नि.व.७ ।

**दीर्घकन्दिका** । स्त्री । तालमूल्याम् । रा.नि. व.७ । कृष्णतालमूल्याम् । वै.निघ. ।

**दीर्घकन्धर:** । पुं । वकपक्षिणि । रा.नि.व. १९ । स्त्री । वकस्त्रियाम् । वै निघ. ।

**दीर्घकाण्ड:** । पुं । गुण्डतृणे । रा.नि.व.८ ।

**दीर्घकाण्डा** । स्त्री । वत्सादनीलतायाम् । পাতাল গরুড়ী । रा.नि.व.३ ।

**दीर्घकील: (क:)** । पुं । अङ्कोलवृक्षे । ধলা আঁকোড় আঁকোড় গাছ । रा नि.व.९ । जटा. । "अङ्कोले दीर्घकीलक: ।" रा.नि.व.२३ ।

**दीर्घकूरकम्** । क्ली । नृपान्ननामकशालिधान्यभेदे । রাজ অন্ন । रा.नि.व.१६ । [नि.व.१६ ।

**दीर्घकृष्णा** । स्त्री । तिलवासिनीशालौ । रा.

**दीर्घकेश: (शी)** । पुं। भल्लूके । रा.नि.व.१९।

**दीर्घकोशा (षा)** । स्त्री। पङ्गशुक्तौ । গুগলি, ঝিণুক । हारा.। गण्डूपद्याम् । কেঁচো। वै.निघ.।

**दीर्घकोशि(षि)का (शी)** । स्त्री । पङ्कशुक्तौ । हारा. । गण्डूपद्यां । वै.निघ. । [प्र.मु. ।

**दीर्घखरच्छद:** । पुं । इत्कटे । হেংকড় ।

**दीर्घगति:** । पुं । उष्ट्रे । रा.नि.व.१९ ।

**दीर्घगोधूम:** । पुं । महागोधूमे । वै.निघ. ।

**दीर्घग्रन्थि:** । पुं । गजपिप्पल्यां । रा.नि.व.६।

**दीर्घग्रीव:** । पुं । उष्ट्रे । हे.च. । नीलक्रौञ्च-पक्षिणि । रा.नि.व.१९ ।

**दीर्घघाटिक:** । पुं । उष्ट्रे । वके । वै.निघ. ।

**दीर्घचञ्चु:** । पुं । पक्षिविशेषे । वम्. वखीड़ा । वै.निघ. । [इत्री । भा. ।

**दीर्घच्छद:** । पुं । शाकवृक्षे । শেগুন গাছ ।

**दीर्घजङ्गल:** । पुं । मत्स्यविशेषे । ভাঙ্গন মাছ । श.मा. ।

**दीर्घजङ्घः** । पुं । उष्ट्रे । जटा. । बकपक्षिणि । त्रिका. ।

**दीर्घजिह्वः** । पुं । सर्पे । है.च. ।

**दीर्घजीरकः** । पुं । स्थूलजीरके । भा.पू.१भ. ।

**दीर्घतन्वी** । स्त्री । आलुकभेदे । वै.निघ. ।

**दीर्घतरुः** । पुं । तालवृक्षे । शब्दार्थकल्प. ।

**दीर्घतिमिषा** । स्त्री । कर्कटिकायाम् । ক্ষুদ্র তেতো কাঁকুড় । শ মা. । ছুঁচো । वै.निघ. ।

**दीर्घतुण्डा (ण्डी)** । स्त्री । छुछुन्दर्य्याम् ।

**दीर्घतृणः** । पुं । पल्लिवाहतृणे । वम्. पीकल तृण । रा.नि.व.८ ।

**दीर्घदण्डः (कः)** । पुं । श्वेतैरण्डे । रा.नि.व. ८ । जटा. । तालवृक्षे । रोहीतकविशेषे । वै.निघ. ।

**दीर्घदण्डी** । स्त्री । गोरक्ष्यां । গোরক্ষ চাকুলে । रा.नि.व.५ । [निघ. ।

**दीर्घदलः** । पुं । मालाकन्दे । श्यामाके । वै.

**दीर्घदर्शी (दृष्टिः)** । पुं । गृध्रे । श.र. । भल्लूके । रा.नि.व.१९ ।

**दीर्घद्रुः** । पुं । तालवृक्षे । श.च. ।

**दीर्घद्रुमः** । पुं । शाल्मलिवृक्षे । শিমুল গাছ । रा.नि.व.८ । [१९ ।

**दीर्घनादः** । पुं । शङ्खे । শাঁক । रा.नि.व.

**दीर्घनालः** । पुं । दीर्घरोहिषे । বড় গন্ধতৃণ । गुण्डतृणे । रा.नि.व.८ । आलुके । शालिधान्यभेदे । वै.निघ. । यावनालनामशिम्बीधान्ये । रा.नि.व.१६ ।

**दीर्घनिस्वनः** । पुं । शङ्खे । वै.निघ. ।

**दीर्घपटोलिका** । स्त्री । पटोलाकारदीर्घफलशाकविशेषे । धुन्दुल । वम्. गोड़परवल । गुणाः—गुरु स्निग्धं विष्टम्भि कटुकं मधुरं शीतलं वातपित्तश्लेष्मारुचिकरञ्च । राज.३प. ।

**दीर्घपत्रः (कः)** । पुं । पुनर्नवायाम् । শ্বেত পুন্না । रा.नि.व.५ । राजपलाण्डौ । विष्णुकन्दे । रा.नि.व.७ । शरपत्रदर्भे । कुन्दुरुतृणे । रा.नि.व. ८ । तालवृक्षे । रा.नि.व.९ । हरितकुशे । रक्तपुनर्नवायाम् । सर्ज्जवृक्षे । निम्नवर्णोर्व्वी । हि वड़ीया । गुणाः—सुकठिनः सक्षारश्च । भा. । वातकरः कफपित्तघ्नः कषायः विदाही च । सु.सू.४५ अ. । कुपीलौ । কুঁচিলা । भा. । मधूकवृक्षे । वै.निघ. । (कः) वेतसवृक्षे । मद.व.५ । रक्तरसोने । লাল রশুন । रा.नि.व.७ । एरण्डवृक्षे । हिज्जलीवृक्षे । रा.नि.व.८ । शुक्लरसोने । শ্বেত রশুন । है.च. । जलमधूके । जटा. । करीरवृक्षे । श.च. ।

**दीर्घपत्रा** । स्त्री । बृहतीक्षुपे । द्रोणपुष्प्याम् । ঘলঘসা । रा.नि.व.४।५ । शालपर्ण्याम् । भा. । क्षुद्रजम्बूवृक्षे । বন জাম গাছ । र.मा. । केतकीवृक्षे । रा.नि.व.१० । घृतकुमार्य्याम् । श्वेतपुनर्नवायाम् । आम्रहरिद्रायां । कदलीवृक्षे । श्योणाकवृक्षे । कुम्भतुम्ब्यां । গোল লাউ । वै.निघ. । चिञ्चायां । চেঁচড়া । भा.पू.१भ.शा.व. ।

**दीर्घपत्रिका** । स्त्री । श्वेतवचायाम् । শ্বেত বচ । रा.नि.व.६ । घृतकुमार्य्याम् । ঘৃতকুমারী । रा.नि.व.५।२३ । शालपर्ण्याम् । শালপাণি । रा.नि.व.४ । भा. । केतक्यां । रा.नि.व.२३ । आटरूषके । বাসক । मातुलुङ्गवृक्षे । ছোলঙ্গ লেবু । कृष्णतालमूल्याम् । कदलीवृक्षे । वै.निघ. ।

**दीर्घपत्री** । स्त्री । पलाशीलतायाम् । হাপরমালী । रा.नि.व.३ । महाचुञ्चुक्षुपे । চুঞ্চু শাক । रा.नि व.४ ।

**दीर्घपर्णः** । पुं । अश्वकर्णनामकशाले । লতাশাল । रा.नि.व.९ । 'तोपचिनी'इतिख्याते द्रव्ये । वै.निघ. ।

**दीर्घपर्णी** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । रा.नि.व.४ । शालपर्ण्याम् । শালপাণি । वै.निघ. ।

**दीर्घपर्व्वा** । पुं । इक्षौ । वै निघ. ।

**दीर्घपलाण्डुः** । पुं । विष्णुकन्दे । राजपलाण्डौ । तालवृक्षे । रा.नि.व.७।९ । हरितकुशतृणे । कुचेलवृक्षे । কুঁচিলা গাছ । भा. । [नि.व.४ ।

**दीर्घपल्लवः** । पुं । शणक्षुपे । শণ গাছ । रा.

**दीर्घपक्षः** । पुं । मत्स्यविशेषे । वै.निघ. ।

**दीर्घपात् (दः)** । पुं । क्रौञ्चबके । কোঁচ বক । कङ्कपक्षिणि । কাঁক পাখী । त्रिका. । है.च. ।

**दीर्घपादपः** । पुं । तालवृक्षे । रा.नि.व.९ । गुवाकवृक्षे । रा.नि.व.११ । See पर्कोटः ।

**दीर्घपुष्पः** । पुं । सुचकुन्दवृक्षे । मूचकुन्द । प. सु. । श्वेतमन्दारार्के । रा.नि.व.१० ।

**दीर्घपृष्ठः** । पुं । सर्पे । अम. ।

**दीर्घफलः (कः)** । पुं । स्थूलारग्वधवृक्षे । बड़ सोणालु । रा.नि.व.९ । पलाशवृक्षे । अर्क वृक्षे । वै.निघ. । (कः) अगस्तिपुष्पवृक्षे । बासना फुलेर गाछ । रा.नि.व.१० ।

**दीर्घफला** । स्त्री । कोषातक्याम् । झिङे प्रभृति । रा.नि.व.७। जन्तुकालतायाम् । रा.नि. व.३ । कपिलद्राक्षायाम् । रा.नि.व.११ । मेषशृङ्ग्याम् । तिक्तालाब्वाम् । वै.निघ. ।

**दीर्घबाला** । स्त्री । चमरीमृगे । वै.निघ. ।

**दीर्घबालुकः** । पुं । वृद्धदारकलतायाम् । बीजताड़क । रा.बि.व.३ ।

**दीर्घमारुतः** । पुं । हस्तिनि । त्रिका. ।

**दीर्घमूलः** । पुं । मोरटलतायाम् । रा.नि. व.३ । यासक्षुपे । दुरालभा । रा.नि.व.४।२३ । बेल्लन्तरवृक्षे । रा.नि.व.८।२३ । बिल्ववृक्षे । लज्जालुकायाम् । लामज्जके । रा.नि.व.१२। २३ । विभीतकवृक्षे । देवसर्षपे । इन्द्रयवे । क्ली । मूलके । वै.निघ. ।

**दीर्घमूलकम्** । क्ली । मूलके । मूला । रा.नि. व.७ । पुं । स्थूलशरे । रा.नि.व.८ ।

**दीर्घमूला (लिका)** । स्त्री । शालपर्णीक्षुपे । वै.निघ. । श्यामालतायाम् । प.सु. । (ला) दुरालभायाम् । सु.सू.३८अ. । शरतृणे । शर गाछ । क्षीरमूर्व्वायां । मेषशृङ्ग्यां । बेल्लन्तरवृक्षे । वै.निघ. ।

**दीर्घमूली** । स्त्री । दुरालभायाम् । श मा. । काकमाच्याम् । काकजङ्घायाम् । वै.निघ. ।

**दीर्घरङ्गा** । स्त्री । हरिद्रायाम् । वै.निघ. ।

**दीर्घरतः (दः)** । पुं । शूकरे । त्रिका. ।

**दीर्घरसनः** । पुं । सर्पे । श.च. ।

**दीर्घरागा** । स्त्री । हरिद्रायां । रा.नि.व.६ ।

**दीर्घरोमा** । पुं । भल्लूके । वै.निघ. ।

**दीर्घरोहिष(क)म्** । क्ली । रोहिषभेदे । बड़ गन्धतृण । गुणाः—तिक्तं कटूष्णं कफवातजित् अश्वतरीप्रवाच । रा नि.व.८ ।

**दीर्घलता** । स्त्री । व्याघ्रघण्टायाम् । शियाकुलता । वै.निघ. । [वै.निघ. ।

**दीर्घलोहितयष्टिका** । स्त्री । रक्तेक्षौ ।

**दीर्घवंशः** । पुं । नले । नल । रा.नि.व.८ ।

**दीर्घवक्त्रः** । पुं । हस्तिनि । श.मा. ।

**दीर्घवच्छिका** । स्त्री । कुम्भीरे । शब्दार्थकल्प. ।

**दीर्घवर्षाभूः** । स्त्री । श्वेतपुनर्नवायां । वै.निघ. ।

**दीर्घवल्ली** । स्त्री । महेन्द्रवारुणीलतायां । बड़ माकाल । वत्सादनीलतायां । पाताल गरुड़ी । पलाशीलतायां । हापरमाली । रा.नि.व.३ । [प.सु. ।

**दीर्घबीजा** । स्त्री । अलाब्वाम् । शिम्बीभेदे ।

**दीर्घवृन्तः (कः)** । पुं । पृथुशिम्बश्योणाकवृक्षे । शोणापाठा । प.सु. । पीतलोध्रे । वै.निघ. ।

**दीर्घवृन्तफला** । स्त्री । दुग्धालाब्वां । वै.निघ. ।

**दीर्घवृन्ता (न्तिका)** । स्त्री । इन्दीवरालतायां । इन्द्रचिर्भटी । रा.नि.व.३ । कपर्दकभेदे । र.सा.सं. । एलापर्ण्यां । श.च. । [वै.निघ. ।

**दीर्घवृक्षः** । पुं । तालवृक्षे । लताशालवृक्षे ।

**दीर्घशरः** । पुं । यावनालनामकशिम्बीधान्ये । जनार गाछ । रा.नि.व १६ ।

**दीर्घशाखः** । पुं । शणवृक्षे । शण गाछ । रा. नि.व.४ । शाकतरौ । शेगुन गाछ । वै.निघ. । शालवृक्षे । श.च. । [लाङ्गलीक्षुपे । रा.नि.व.४।

**दीर्घशाखिका** । स्त्री । कृष्णपीठीजीवृक्षे, नौ-

**दीर्घशिम्बा** । स्त्री । शिम्बीविशेषे । प.सु. ।

**दीर्घशिम्बिकः** । पुं । राजमाषे । बरबटी । रा.नि.व.१६ ।

**दीर्घशूकः (कः)** । पुं,क्ली । शूकाकारशालिधान्यविशेषे । स सारामुखाद्दीनगुणः स्वादुपाकरसत्वादियुक्तः । च.सू.२७अ. । राजान्ने । रा.नि.व. २३ ।

**दीर्घसमुच्छ्रयः** । पुं । नलतृणे । प.सु. ।

**दीर्घसत्त्वः** । पुं । तिन्दुकवृक्षे । टैंद गाछ । वै.निघ. ।

**दीर्घसुरतः** । पुं । कुक्कुरे । शूकरे । त्रिका. ।

**दीर्घस्कन्धः** । पुं । तालवृक्षे । रा.नि.व.८ ।

**दीर्घा** । स्त्री । पृश्निपर्ण्याम् । रा.नि.व.४ ।

**दीर्घाङ्कुरः** । पुं । राजमाषे । राज अन्न । वै.निघ. ।

**दीर्घाङ्गी** । स्त्री । शालपर्ण्याम् । भा.पू.१भ. ।

**दीर्घाङ्घ्रिः** । स्त्री । शालपर्ण्याम् । वै.निघ. ।

**दीर्घाध्वगः** । पुं । उष्ट्रे । त्रिका. ।

**दीर्घायुः** । पुं । शाल्मलिवृक्षे । शिमुल गाछ । रा.नि.व.८ । जीवकौषधौ । काके । मे. । रा.नि.व.५ । त्रिका. ।

**दीर्घायुधः** । पुं । वनशूकरे । श.मा. ।

**दीर्घायुष्यः** । पुं । जीवके । मे. । श्वेतमन्दारार्के । रा.नि.व.१० । [१०]

**दीर्घालर्कः** । पुं । महाश्वेतार्कवृक्षे । रा.नि.व.

**दीर्घिका** । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ । गोजिह्वायाम् । वै.निघ. । त्रिशतधनुःपरिमितजलाशये । तज्जलं गुरु कटु क्षारं पित्तकरं कफवातघ्नञ्च । रा.नि.व.१४ ।

**दीर्घैर्वारुः** । पुं । महाखाव्याम् । दीर्घकर्कटिकायाम् । रा.नि.व.७ ।

**दीविः** । पुं । चाषपक्षिणि । श.मा. । [११]

**दुःकूलः** । पुं । चोरनामकगन्धद्रव्ये । रा.नि.व.

**दुःखम्** । क्ली । रोगे । मानसधर्मभेदे । दुःख । तत्तु सप्तविधे व्याधावुपनिपतति । सु.सू.२४अ. । See व्याधिः ।

**दुःखकोद्रवा** । स्त्री । मसूरिकाभेदे । "किञ्चिदुन्नतिमित्तेन जायते राजिकाकृतिः । एषा भवति बालानां सुखं शाम्यति च स्वयम् ॥" भा. ।

**दुःखत्रयम्** । क्ली । आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति त्रिविधदुःखे । सु.सू.२४अ. ।

**दुःखदग्धनः** । पुं । गृध्रपक्षिणि । शकुनि । वै.निघ. ।

**दुःखदिरः** । पुं । विट्खदिरे । रा.नि.व.८ ।

**दुःखवर्द्धनः** । पुं । कर्णपालीरोगे । तल्लक्षणम् —"वर्द्धमाने यदा कर्णे कण्डूदाहरुजान्वितः । शोफो भवति पाकश्च तत्रसन्नौ दुःखवर्द्धनः ॥" सु.चि.२५अ. ।

**दुःसहा** । स्त्री । नागदमन्याम् । रा.नि.व.४ ।

**दुकू(गू)लम्** । क्ली । क्षौमवस्त्रे । त्रिका. । हे.च. ।

**दुग्धम्** । क्ली । कत्तृणे । रामकर्पूरे । र.मा. । क्षीरे । दुध । रा.नि.व.१५ । तद्रूपादि—"क्षीरं स्निग्धं तथा रक्तं विशेन पाकतां गतं । रक्तं श्वेतत्वमायाति तथा क्षीरं सितं भवेत् । क्षीरनाडी कुमारीणां वन्ध्यानाञ्च कथं भवेत् । अल्पधातुबलं यस्मात् तस्मात् क्षीरं न जायते । वन्ध्यानां क्षीरनाड्यस्तु वातेन परिपूरिताः । क्षीरञ्च न भवेत्तस्मात् आर्त्तवस्याधिकं यतः । प्रसूतासु च नारीषु बलेन सह सूयते । तेन स्रोतोविशुद्धिः स्यात् क्षीरमाशु प्रवर्त्तते । तस्मात् सद्यः प्रसूतायां जायते श्लैष्मिकं पयः । तेन कठिनतां याति तस्मात्तत् परिवर्ज्जयेत् । स्रोतोविशुद्धिकरणं बलकृद्दीपनाशनं । पयस्त्रिदोषशमनं ह्यथवाग्निप्रवर्द्धनम् ॥" तत्र श्वेतादुग्धं श्लेष्मकरं, रक्ताया वातलं, पीताया: पित्तसंशमनं विशिष्टं, कृष्णायाश्च पित्तलम् । अत्रि. ८अ. । दुग्धं बहुविधं गव्यादिभेदात् यथा—गावस्तु दशधा कास्त्री त्रिधाजी त्रिविधा मता । स्यग्य एडास्त्रिधा मेषी त्रिधोष्ट्री दशधा हयी । पञ्चधा करिणी नारी दशधा शूकरी द्विधा । व्याघ्री शुनी श्वदंष्ट्री च रासभी पञ्चधा पृथक् । त्रिधाष्टधा मत्स्यी गवयी खङ्गिनी कृष्टी । दुग्धं तक्रञ्च दधि ताभ्यः प्रजायते ॥ अर्क. । गवादिदुग्धगुणाः स्वस्वपर्य्यायेषु लभ्याः । दुग्धमात्रगुणाः—आमं गुरु कासश्वासप्रकोपकं रोगजनकञ्च । तदभावर्त्तितञ्च तत् पथ्यम् । नारीक्षीरन्तु आममेव रोगघ्नं भवति । धारोष्णं गव्यादिदुग्धम् अमृतोपमं सर्व्वरोगघ्नं । चिरसंस्थं दोषदञ्च । तथा—"केऽप्याविकं पथ्यतमं शतीषां क्षीरं लजानां घृतशीतमाहुः । दोषाल्पशीतं महिषीपयश्च गव्यन्तु धारोष्णमिदं प्रशस्तम् ॥" पूर्व्वाह्णपीतं दुग्धं वृष्यं बृंहणमाग्नेयञ्च, मध्याह्नपीतं बलदं कफघ्नं लघुञ्च । बाल्ये अग्निकरं यौवने बल्यं वीर्य्यदञ्च वार्द्धके भवति । रात्रौ नानादोषशमनं अतः क्षीरं सदा सेव्यम् । मुहूर्त्तत्रयपर्य्युषितमतप्तं न सेवेत । पक्वोषितं दोषकरं तद्रूढञ्च विषोपमं ज्ञेयम् । ज्वरे तद्गुणाः—"जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतो-

गमम्। तदेव तथैव पीतं विषवद्धन्ति मानवम्। चतुर्थभागं सखिलं निधाय यत्नादवदावर्त्तितसुत्तमं तत्। सर्व्वामयघ्नं बलपुष्टिकारि वीर्य्यप्रदं चीरम-तिप्रशस्तम्।" इति दुग्धक्काथः। "गव्यमूर्ध्वाह्नकाले चापराह्ने तु माहिषम्। चीरं सशर्करं पथ्यं सदा सात्म्ये च सर्व्वदा। पित्तघ्नं शतशीतलं कफहरं पक्वं तदुष्णं भवेच्छीतं यत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदं। धारोष्णं लघुनं पयः श्रमहरं निद्राकरं कान्तिदं हृष्यं बृंहणमग्निवर्द्धनमतिस्वादु त्रिदोषापहम्॥" शतशीतादिचीरगुणाः—"चीरं न भुञ्जीत कदाप्यतप्तं तप्तं न चैतल्लवणेन सार्द्धम्। पिष्टान्नमत्स्यामकमाषमुद्गकोशातकीकन्दफलादिकैश्च।" तथाच "मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः। शाकजाम्बवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत्॥" इति चीरवर्ज्जनस्थानम्। "स्निग्धं शीतं गुरु चीरं सर्व्वकालं न सेवयेत्। दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च। नित्यं तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः। पुष्यन्ति धातवः सर्व्वे बलपुष्टिविवर्द्धनम्॥" इति चीरसेवनस्थानम्। "चीरं गवाजकादेर्मधुरं चारं नवप्रसूतानाम्। रूचं न पित्तदाहं करोति रक्तामयं कुरुते॥ मधुरं त्रिदोषशमनं चीरं मध्यप्रसूतानाम्। लवणं मधुरं चीरं विदाहजननं चिरप्रसूतानाम्॥ गुणहीनं निःसारं चीरं प्रथमप्रसूतानां। मध्यस्य वरसायनमुक्तमिदं दुर्ब्बलस्तु हृद्यात्मम्॥ तासां मासत्रयादूर्द्ध्वं गुर्व्विणीनाञ्च यत्पयः। यद्वाहि लवणं चीरं मधुरं पित्तदोषकृत्॥ गवादीनां वर्णभेदाद्गुणा दुग्धादिके पृथक्। केचिदुक्ता विशेषाश्च विशेषो देशभेदतः॥" तथा उक्तञ्च। देशेषु देशेषु च तेषु तेषु तृणाम्बुनी यादृशदोषयुक्ते। तत्सेवनादेव गवादिकानां गुणा हि दुग्धादिषु तादृशत्वम्। शीतं स्निग्धं गुरु गौल्यं हृष्यं पित्तापहं परं। श्रेयश्चैवाभिधीतस्य कोलाटस्तु पयस्कदः॥" रा.नि.व.१५। प्रभातदुग्धं—"निशाशीतांशुसंशीतं निद्रालस्यश्रमापहं। सघनं शीतकफकृत् चीरं प्राभातिकं भवेत्॥" भावि.८व.।

**दुग्धकन्दगणः।** पुं। दुग्धप्रधाने अश्वगन्धादिद्रव्यगणे। यथा—"अश्वगन्धा च मुषली विदारी च शतावरी। चीरवाराहिका चेति दुग्धकन्दगणस्त्रयम्॥" गुणाः—"बालको वर्द्धते वीर्य्यैरिदंसुवर्णलया सह। एतद्रसस्य पानेन कर्त्ता पीडमवार्षिकी॥" अर्क.।

**दुग्धकूपिका।** स्त्री। घृतदुग्धमिश्रिततण्डुलचूर्णकृतपिष्टकविशेषे। तन्निर्माणविधिः यथा—"तण्डुलचूर्णविमिश्रितनष्टचीरेण सान्द्रश्लिष्टेन। दृढकूपिका विदध्यात्ताञ्च पचेत् सर्पिषा सम्यक्। अथ तां कोरितमध्यां घनपयसा पूर्णगर्भाञ्च। सदृकमुद्रितवदनां सर्पिषि सपक्ववदनाञ्च। अथ पाण्डुखण्डपाके स्नापयेत् कर्पूरवासिते कुशलः॥" गुणाः—"अथ दुग्धकूपिका सा बल्या पित्तानिलापहा। हृष्या शीता गुर्व्वी शुक्रकरी बृंहणी रुच्या। विदधाति कायपुष्टिं दूरप्रसारिणीं सुचिरम्॥" भा.।

**दुग्धतालीयम्।** क्ली। दुग्धसारे। हे.च.। दुग्धाग्रे। चीरफेने। मे.।

**दुग्धतुम्बी।** स्त्री। चीरालाब्वाम्। वै.निघ.।

**दुग्धत्रयम्।** क्ली। गोमहिषच्छागदुग्धेषु। र.सा.सं.।

**दुग्धदा।** स्त्री। चणिकातृणे। रा.नि.व.८।

**दुग्धनिका।** स्त्री। रक्तापामार्गे। अर्कवृत्ते। वै.निघ.।

**दुग्धपाचनः।** त्रि। दुग्धपाककरे। क्ली। दुग्धपाकपात्रे। हारा.।

**दुग्धपाषाणः (कः)।** पुं। खटिकाविशेषे। फुलखड़ि, खड़िमाटी। हिं खिरगोला। गुणाः—कटुत्वं ईषदुष्णः ज्वरपित्तहृद्रोगकासशूलाध्मानहरश्च। रा.नि.व.१३। फुलखड़ि। रा.नि.व.३।

**दुग्धपाषाणिका।** स्त्री। दुग्धपाषाणे। फु-

**दुग्धपुच्छी।** स्त्री। वृक्षविशेषे। दुधपेया। श.च.।

**दुग्धफेनः (कः)।** पुं,क्ली। चीरफेने। दुधेर फेना। रा.नि.व.१५। गुणाः—"क्षणगोऽस्यपयःफेनमजानां वेति शस्यते। मन्दाग्नीनाञ्च शूनानाञ्च विशेषादतिसारिणां। उत्साहदीपनम्बल्यं मधुरं वातनाशनं। सद्यो बलकरश्चैव तच्च चीरविलोड़ितं। चीणज्वरातिसारे च सामे च विषमज्वरे। मन्दाग्नौ कफमाश्रित्य पयःफेनम्प्रशस्यते। चीरं गवाज्जीरफेनं तक्रं वा हितमेव च। पक्वामभक्षणादापि यक्ष्मी तस्य नश्यति। ताम्बूलं नैव सेवेत चीरम्पीत्वा तु मानवः। यावत्तत्र द्रवेच्चीरभुक्तान्नाद्यापि प्रशस्यते॥" भवि.।

**दुग्ध[illegible]** । स्त्री । [illegible] । [illegible] दुग्धफेनी, [illegible] । गुणाः—कटुः तिक्ता [illegible] । रा.नि.व.५ । [illegible] । वै.निघ. ।

**दुग्धवटी** । स्त्री । [illegible] वटी । [illegible] [illegible] शर्करां [illegible] सहितां [illegible] वटी कार्य्या । भैष. ।

**दुग्धबीजः (जा)** । पुं,स्त्री । यावनालादिकृतचिपीटके । जनार वा জোয়ারের চিঁড়ে । "ये चान्ये यावनालाद्याश्चिपिटास्मृततण्डुलाः । चणतमतण्डुलास्ते तु दुग्धबीजाः प्रकीर्त्तिताः ॥" गुणाः—"दुग्धबीजा सुमधुरा दुर्ज्जरा वीर्य्यपुष्टिदा । शालियवयावनालाद्याः चिपिटाः पुष्टिवर्द्धनाः ॥" रा.नि.व.१६ ।

**दुग्धसन्तानिका** । स्त्री । दुग्धसरे । वै.निघ. ।

**दुग्धहरणी** । स्त्री । दुग्धवहनाड्याम् । रस.र. स्तनरो.चि. ।

**दुग्धक्षीरिका** । स्त्री । दुग्धतण्डुलघृतशर्कराकृतपायसे । यथा—"दुग्धाष्टमांशभागेन तण्डुलान् घृतसंस्कृतान् । शुद्धेऽर्द्धपक्के दुग्धे तु चिप्ता सिद्धा हि क्षीरिका । पायसं शर्करायुक्तघृतप्रक्षेपणाद्भवेत् ॥" गुणाः—"सा गुरुर्वातकृद्बल्या मलावष्टम्भका तथा । अरुचिं मेदवृद्धिञ्च कफमग्नेश्च मन्दताम् । कृत्वा च रक्तपित्तं हि वातपित्तञ्च नाशयेत् ॥" द्रव्यगुण. ।

**दुग्धा (ग्धी)** । स्त्री । क्षीरिकायां । ক্ষিরাই । र.मा. । भैष.चुद्ररो.चि. । काकोल्याम् । पलाशीलतायाम् । शारिवायाम् । वै.निघ. । दुग्धपाषाणे । फुलथड़ि । रा.नि.व.१३ ।

**दुग्धान्नम्** । क्ली । दुग्धशालीये । আঁবের সঙ্গে দুধ । गुणाः—"दुग्धान्नं शीतलं स्वादु हर्षं वर्णकरं गुरु । वातपित्तापहं रुच्यं हृद्यम्बलवर्द्धनम् ॥" रा.नि.व.१५ ।

**दुग्धाश्मा** । पुं । दुग्धपाषाणे । फुलथड़ि । [रा.नि.व.१३ ।

**दुग्धाच्छः** । पुं । क्षीरस्फटिके । शब्दार्थकल्पतरुः ।

**दुग्धिका** । स्त्री । क्षुद्रक्षीरिकायाम् । ছোট খিরাই । मं दुधि । कं दुधलि । तें पिल्लपालचेट्टु । गुणाः—"दुग्धिकोष्णा गुरु रुक्षा वातला गर्भकारिणी । स्वादुक्षीरा कटुस्तिक्ता सृष्टमूत्रमलापहा । स्वादुर्विष्टम्भिनी हृष्या कफकुष्ठक्रिमिप्रणुत् ॥" भा. चि.श.प.८८८-चि. । रस.र.ज्वराति.चि. । इन्द्रीवराख्याम् । ইন্দ্রচির্ভটী । पूतिकटुकाख्याम् । তিং লাউ । वै.निघ. । वृक्षभेदे । থির্ণী গাছ । र.मा. ।

**दुग्धिनि(नी)का (नी)** । स्त्री । रक्तापामार्गक्षुपे । रा.नि.व.४ । शुक्लदुग्धाख्याम् । वा. सू.१७अ. । [चि । वै.निघ. ।

**दुच्छकः** । पुं । मुरामांस्याम् । मे. । तालीशपदुड़िः (लिः) । स्त्री । कच्छपिकायां । अ.टी. रा. । मे. ।

**दुण्डुभः** । पुं । सर्पभेदे । ঢোঁড়া সাপ । उज्ज्व. ।

**दुण्डुभा** । स्त्री । सर्पपत्रचे । वै.निघ. ।

**दुद्रुमः** । पुं । कन्दविशेषे, हरितपलाण्डौ । अम. ।

**दुन्दुभिः** । पुं । सर्पदष्टेन्दुरादी, दन्दुर इति लोके । सु.कल्प.७अ. । मतुदर्पाचविशेषे । च.सू. १७अ. । विषे । हे.च. ।

**दुन्दुमारः** । पुं । विड़ाले । वै.निघ. ।

**दुम्बकः** । पुं । स्वनामख्यातमेषे । দুম্বা । वै.निघ.

**दुरभिग्रहः** । पुं । अपामार्गक्षुपे । रा.नि.

**दुरभिग्रहा** । स्त्री । दुरालभायां । कपिकच्छ्वां । अपामार्गे । रा.नि.व.२३ । अलाख्यां । वै.निघ. ।

**दुराधर्षः (र्षा)** । पुं, स्त्री । सिद्धार्थे । শ্বেত সরিষা । कुटुम्बिनीक्षुपे । रा.नि.व.५ ।

**दुरारुहः** । पुं । नारिकेलवृक्षे । विल्ववृक्षे । रा.नि.व.११ ।

**दुरारुहा** । स्त्री । खर्ज्जूरीवृक्षे । খেজুর গাছ । नारिकेलवृक्षे । तालवृक्षे । वंशे । रा.नि.व.२३ ।

**दुरारोहः** । पुं । तालवृक्षे । शाल्मलीवृक्षे । खर्ज्जूरीवृक्षे । वै.निघ. । शरटे । रा.नि.व.१८ ।

**दुरारोहा** । स्त्री । श्रीवल्लीवृक्षे । रा.नि.व.८ । शरटे । গিরগিটে । रा.नि.व.२३ । पिण्डीखर्ज्जूर्य्याम् । भा. । शाल्मलीवृक्षे । चिका. ।

**दुरालभा (लम्भा)** । स्त्री । (Alhagi maurorum. Syn. Hedysarum Al-

hagi.) खनामख्यातक्षुपे । झिङ्गुया इति ख्याता। कुलाल(ली)भा । क्लिं वम्. जवासा दुरालभा, धमासा। मं वेलिक्कामूली । क्रं वल्लिदुरबे । तें पिचरेगटि टुलगोंड़ि । सा द्विधा स्थूलसूक्ष्मभेदात् । गुणौ: कटु: तिक्तास्तथा चारात्मिका मधुरा वातपित्तघ्नी ज्वरगुल्मप्रमेहघ्नी च। रा.नि.व.४। "यवासस्य गुणैरुक्ता बुधैस्तुल्या दुरालभा।" भा.। वा.चि.१अ.। सि.यो.कास.चि.। "दुरालभास्त्रवेतसै:।" कार्पासक्षुपे। रक्तिकायां। पिड़िं शाक। श.चि.।

**दुरालभादि:** । पुं । दुरालभामृतामुस्तानागरक्तत: कषाय: वातज्वरे हित: । दुरालभादिरयं पित्तज्वरतृष्णारक्तपित्तदाहघ्न: । वा.चि.१अ.। "दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम्। जलं पिबेत् शर्करयावगाढम् ।" च.द.पि.ज्व.चि.।

**दुरितद(घ्न)मनी** । स्त्री। शमीवृक्षे । रा.नि.व.८ ।

**दुरिष्टकृत्** । पुं । अभिचारकर्त्तरि ।

**दुरूराह:** । पुं । पण्ड्कयकदफुलाहाख्ये । "दफुलाहो दुरूराह: पुण्ड्रकैरेव कीर्त्तित: ।" अ.द. ३अ.।

**दुरोह:** । पुं । नागकेशरवृक्षे । वै.निघ.।

**दुर्ग:** । पुं । गुग्गुलौ । रा.नि.व.१२ ।

**दुर्गकारक:** । पुं । तरुभेदे । श.मा.।

**दुर्गन्धम्** । क्ली । सौवर्च्चललवणे । हे.च.।

**दुर्गन्ध:** । पुं । आम्रवृक्षे । श.च.। पलाण्डौ। भा.। त्रि। पूतिगन्धयुक्ते । [निघ.।

**दुर्गन्धा** । स्त्री । वाकुच्याम्। सोमराज। वै.

**दुर्गन्धास्य:** । पुं । मुखरोगभेदे । मुखे दुर्गन्ध हओया । [चललवणे । वै.निघ.।

**दुर्गन्धि:** । पुं । आम्रवृक्षे । दुर्गन्धे । क्ली। सौव

**दुर्गपुष्पी** (ष्प्) । पुं । वनस्पतिभेदे । केशपुष्टा इति लोके । श.च.।

**दुर्गलङ्घन:** । पुं । उष्ट्रे । हे.च.।

**दुर्गा** । स्त्री । श्यामपक्षिणि । शामापाथि । रा.नि.व.२१ । क्षत्रचटके । क्षणद्यारिकायाम्। श्यामालता । नील्यां । मे.। कोकिलायाम् । वै.निघ.। अपराजितायां । श.च.।

**दुर्गाह्लाद:** । पुं । भूमिजगुग्गुलौ । वै.निघ.।

**दुर्गाह्व:** । पुं । भूमिजगुग्गुलौ । रा.नि.व.१२ ।

**दुर्ग्रह:** । पुं । अपामार्गक्षुपे । रा.नि.व.४।२३।

**दुर्ग्रहा** । स्त्री । मुस्तायाम् । रा.नि.व.२३ । अपामार्गे । भा.पू.१भ.।

**दुर्घटा** । स्त्री । पृश्निपर्ण्यां । वै.निघ.।

**दुर्घोष:** । पुं । भल्लूके । रा.नि.व.१९ ।

**दुर्जर:** । त्रि । दुष्पचे । वै.निघ.।

**दुर्जरफलम्** । क्ली । कर्कटिकायाम्। वै.निघ.।

**दुर्जरा** । स्त्री । ज्योतिष्मतीलतायाम् । लताफट्की । रा.नि.व.३ । घोले । वै.निघ.।

**दुर्जलजेता (रस:)** । पुं । ज्वरे रस: । पाठ:—"विषं भागद्वयं दग्धं कपर्दं पञ्चभागकं। मरिचं नागरञ्चैव चूर्णं वस्त्रेण शोधयेत् । आर्द्रकस्य रसेनास्य कुर्य्यान्मुद्गनिभां वटीं । वारिणा वटिकायुग्मं प्रात: सायञ्च भक्षयेत् ॥" विषं २ भ. वराटकभस्म मरिचचूर्णं शुण्ठीचूर्णं प्र. ५ भ.। भा. म.१भ.।

**दुर्दग्धम्** । क्ली । अग्निदग्धरोगे ।

**दुर्दर्प:** । पुं । भल्लातकवृक्षे । वै.निघ.।

**दुर्द्रिता** । स्त्री । लताभेदे । जटा.।

**दुर्द्रुम:** । पुं । हरित्पलाण्डौ । रा.नि.व.७।

**दुर्द्धर:** । पुं । ऋषभकौषधौ । मे.। भल्लातकवृक्षे । अनडुहि । रा.नि.व.२३ । पारदे । वै.निघ.।

**दुर्द्धर्षा** । स्त्री । नागदमन्याम् । नागदना । रा.नि.व.५। कन्थारीवृक्षे । फणिमनसा। रा.नि.व.८।

**दुर्नाम(क)म् (मा)** । क्ली,स्त्री । अर्शोरोगे । रा.नि.व.२०। स्त्री । पड्क्तिशुक्तौ । झिनुक । दारा.। गण्डूपदे । वै.निघ.।

**दुर्नामारि:** । पुं। शूरणे । ओल । रा.नि.व.७।

**दुर्नाम्नी** । स्त्री । अर्शोरोगे । श.र.।

**दुर्न्यास:** । पुं । असम्यकस्थापने । भा.म.३भ.।

**दुर्व्वला** । स्त्री । अम्लशिम्बे । भा.।

**दुर्भरा** । स्त्री । ज्योतिष्मतीलतायाम् । वै.निघ.।

**दुर्भिक्षा** । स्त्री । वाकवहायाम् । वै.निघ. ।

**दुर्ममा:** । स्त्री । ब्रतावर्ण्या । रा.नि.व.४ ।

**दुर्मर:** । पुं । पिप्पलवृक्षे । अश्वत्थ गाछ । वै. निघ. ।

**दुर्मरा** । स्त्री । श्वेतदूर्वायाम् । रा.नि.व.४ । श्वेतदुर्वायां । रा.नि.व.८ । दूर्वायां । जटा. ।

**दुर्मोषा** । स्त्री । शुक्लगुञ्जायाम् । मद.व.२ ।

**दुर्मुख:** । पुं । वानरे । घोटके । सर्पे । विका.।

**दुर्मुखा** । स्त्री । शुक्लगुञ्जायाम् । वै.निघ. ।

**दुर्मोका** । स्त्री । श्वेतगुञ्जायाम् । वै.निघ. ।

**दुर्मोहा** । स्त्री । काकादनीलतायाम् । श्वेत कूँच । रा.नि.व.३ । रक्तगुञ्जायाम् । वै.निघ. ।

**दुर्लभ:** । पुं । कर्चूरे । शठी । बम्. कर्चोरा । रा.नि.व.६। वै.निघ. । श्वास.रां.चि.श्वासकालेश्वरे । दुरालभायाम् । रा.नि.व.४। अर्ज्जुनवृक्षे । वै.निघ.।

**दुर्लभा** । स्त्री । जीवन्त्याम् । प.मु. । श्वेतकण्टकार्य्याम् । रा.नि.व.४ । रक्तदुरालभायाम् । वै. निघ.२भ.मधुरज्व.चि.मधुकादि: । शट्याम् ।

**दुर्वर्ण(क)म्** । क्ली । रौप्ये । प.मु. । एलवालुके । रा.नि.व.४ । [दा । वै.निघ. ।

**दुर्विधेया** । स्त्री । कर्पूरशट्याम् । आम आ-

**दुश्चक्रम:** । पुं । गोक्षुरके । रा.नि.व.४ ।

**दुश्च(ष्क)र:** । पुं । भल्लूके । रा.नि.व.१९ । शल्यूके । छारा. ।

**दुश्चर्मा** । पुं । त्वग्दोषरोगे । त्वक्दोष । ते च शीतपित्तोदर्दकोठरोगा: । रा.नि.व.२० ।

**दुष्कुल: (लीन:)** । पुं। चोरकनामगन्धद्रव्ये । रा.नि.व.१२ । श.र. ।

**दुष्खदिर:** । पुं । अरिमेदे । बिट्‌खदिर । गुणा:—कटुतिक्तोष्ण: रक्तव्रणकण्डूविषवीसर्पज्वरकुष्ठोन्मादभूतघ्नश्च । रा.नि.व.८ ।

**दुष्टम्** । क्ली । कुष्ठौषधौ । कूड़ । श.च. ।

**दुष्टपीनस:** । पुं । पीनसरोगे । वै.निघ. ।

**दुष्टप्रतिश्याय:** । पुं। नासारोगविशेषे । "प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति । पुनरानह्यते चापि पुनर्विव्रियते तथा । निश्वासो वापि दुर्गन्धो नरो गन्धं न वेत्ति च । एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्रसाधनम् ।" मा.नि. । [चि चि. ।

**दुष्टान्नम्** । क्ली । विषादिदुष्टे अन्ने । भा.च.

**दुष्टाम्बु** । क्ली । दुष्टजले । मै. ।

**दुष्पत्र:** । पुं । चोरकनामगन्धद्रव्ये । चौरा इति पार्व्वता: । रा.नि.व.१२।२१ । चण्डालकन्दे । ग्रामणीभेदे । वै.निघ. ।

**दुष्प्रधर्ष(र्षि)णी** । स्त्री । कण्टकार्य्याम् । रा. नि.व.४ । वार्त्ताक्याम् । प.मु. । वृहत्यां । भा. ।

**दुष्प्रधर्षा** । स्त्री । दुरालभायाम् । रा.नि.व.४। खर्जूरीवृक्षे । खेजूर गाछ । रा.नि.व.११ ।

**दुष्प्रवेशा** । स्त्री । कन्थारिवृक्षे । फणिमनसा । रा.नि.व.८ । श्वेतकण्टकार्य्यां । वै.निघ. ।

**दुस्पर्श:** । पुं । दुरालभायाम् । च.टी.भ. । सि. यो.वातकासचिके । च.द.वातकफ.ज्व. । "व्याघ्री दुस्पर्शगोक्षुरै: ।" भा. । लताकरञ्जे । रा.नि.व.८।

**दुस्पर्शा** । स्त्री । कपिकच्छ्वाम् । आलकुशी । रा.नि.व.३ । रक्तदुरालभायाम् । रा.नि.व.४ । पाटलवृक्षे । आकाशवल्लीलतायाम् । आलोकलता । वनबदरे । वै.निघ. । कण्टकार्य्याम् । रा. नि.व.४।२३ ।

**दुस्फोट:** । पुं । दुष्टव्रणे । शस्त्रभेदे । हे.च ।

**दू:** । पुं । रोगे । वै.निघ. ।

**दूत:** । पुं । वैद्यानेतरि । गमनाय प्रश्नाय वा गते पुरुषे । सु.सू.१० अ. । तल्लक्षणम्—"यश्चिकित्सकमानेतुं याति दूत: स कथ्यते । दूता: सजातयोऽव्यङ्गा: पटवो निर्म्मलाम्बरा: । सुखिनोऽश्ववृषारूढा: शुभपुष्पफलैर्युता: । सजातय: सुचेष्टाश्च सजीवदिग्भि सङ्गता: । भिषजं समये प्राप्ता रोगिण: सुखहेतवे ॥" भा. ।

**दूतघ्नी** । स्त्री । कदम्बपुष्प्याम् । श.च. ।

**दूति(ती)का** । स्त्री । सारिकायाम् । शालिक । रा.नि.व.१९ । श्वेतकण्टकार्य्यां । वै.निघ.।

**दूती** । स्त्री । रक्तपाटलायाम् । शारिकापक्षिणि । रा.नि.व.१९ । वै.निघ. ।

**दूरगः (मः)** । पुं । उष्ट्रे । गर्दभे । रा.नि.व. १९ । वै.निघ. ।

**दूरजम्** । क्ली । वैदूर्य्यमणौ । भा. ।

**दूरदर्शी (दृक्)** । पुं । गृध्रे । त्रिका. । पण्डिते । हे.च. । [वै.निघ. ।

**दूरमूला** । स्त्री । मुञ्जे । मुञ्ज । दुरालभायाम् ।

**दूरेरितेक्षणः** । त्रि । केकरे । टेरा, गड्ढा । श.मा. ।

**दूर्य्यम्** । क्ली । विष्ठायाम् । श.र. ।

**दूर्व्वा** । स्त्री । (Cynodon dactylon, Syn. Agrostis cynosurioides, or Panicum dactylon.) स्वनामख्यातघासविशेषे । दूर्ब्बा । हिं उत्. दुब् । तें गरिकेगड्डि, गरिकक्सुव् । ता. अरुगम् पुल् । दूर्व्वा बहुधा श्वेतनीलमालागण्डुमेदेन । तासां विशेषाः स्वस्वपर्य्याये मृग्याः । सा. गुणाः—कषायाः मधुराः शीतपित्ततृष्णारोचकवमिघ्नाः दाहमूर्च्छाग्रहभूतश्रान्तिश्वासप्रशमनीत्यस्य । रा.नि.व.८ । वा.सू.१५ अ. । "दूर्व्वानन्तानिम्बवासाः ।" श्वेतदूर्व्वायां । भा.४भ.बालरो.चि. । "श्वेता दूर्व्वा घृतं मधु ।" शल्याम् । रा.नि.व.६ ।

**दूर्व्वादिवर्गः** । पुं । दूर्व्वानन्तानिम्बवासात्मगुप्तागुन्द्राभीरुशीतपाकीप्रियङ्गवश्चेति वर्गे । गुन्द्रः शरः, अभीरुः शतावरी मुस्तकं वा, शीतपाकी गुञ्जा । अयञ्च वर्गः पित्तघ्नः न्यग्रोधपद्मकादिवत् । वा.सू.१५अ. ।

**दूर्व्वाद्यघृतम्** । क्ली । रक्तपित्ते घृतम् । छागघृतं ४ श. । कल्कार्थे—दूर्व्वामूलं उत्पलमूलं कुङ्कुमं मञ्जिष्ठा एलवालुकम् उशीरं मुस्ता रक्तचन्दनम् एषां प्र. २ तो. । पाकार्थे—आतपतण्डुलजलं १६ श. छागदुग्धं १६ श. । (तण्डुलोदकार्थे तण्डुलं जलं १६ श.) । भैष. । आ. । [च. ।

**दूर्व्वासोमः** । पुं । सोमलताभेदे । सु.चि.२९

**दूलकम्** । क्ली । तूलके । तूला । रस.र.वाज. वि. । [श.र. ।

**दूलि(ली)का** । स्त्री । नील्यां । नील गाछ ।

**दूषकः** । पुं । शालिधान्यभेदे । गुणाः शालिवत् । सु.सू.४६अ. । भा.पू.१भ.धा.व. ।

**दूषिः (षि[षी]का)** । स्त्री । नेत्रमले । चोकेर पिचुटी । रा.नि.व.१८ । अ.टी.भ. । श.र. । मुखदूषिकारोगे । वा.उ.३१अ. । तूलिकायां । मे. ।

**दूषीविषम्** । क्ली । औषधादिकृतावीर्य्यविषे । भोजनादिदोषेण निद्रया वा दूषितं औषविषं धातूनपि काये दूषयत् दूषीविषमित्युच्यते । "दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः । यस्माद्दूषयते धातून् तस्माद्दूषीविषं स्मृतम् ॥" तस्य चि.अजेयघृतादौ । सु.कल्प.२अ. । तत्र विषं प्राणहरम् । यथा—दूषीविषं प्राणहरमिति सङ्क्षेपतो मतम् । लक्षणं—"गात्रं रक्तं सितं रक्तं श्यावं वा पिडकान्वितं । सकण्डूदाहवीसर्पपाकि स्यात् कोथनं तथा ॥" च. । गुणाः—"उदरगुल्मकुष्ठप्रमेहघ्नम् ।" राज. ।

**दूषीविषारिः** । पुं । दूषीविषविषघ्ने अगदविशेषे । "पिप्पल्यो ध्यामकं मांसी रोध्रमेला सुवर्चिका । कुटन्नटं नतं कुष्ठं यष्टीचन्दनगैरिकम् । दूषीविषारिनामायं न चान्यत्रापि वार्य्यते ॥" वा.उ.३५अ. । सु.कल्प.२अ. । [च. । वस्ते । मे. ।

**दूष्यम्** । क्ली । रक्ते । वा.सू.२५अ. । पूये । हे.

**दूष्यजलम्** । क्ली । विण्मूत्रादिदुष्टवारिणि । विष्ठादिदुष्टं जल । यथा—"विण्मूत्रकुणपनीलिकाविषहतं नग्नं घनफेनिलं दन्तग्राह्यमनार्त्तवं सलवणं शैवालकैः संवृतम् । जन्तुव्रातविमिश्रितं गुरुतरं पर्णौघपङ्काविलं चन्द्रार्कांशुतिरोहितं च न पिबेत् नीरं जडं दूषितम् ॥" रा.नि.व.१४ ।

**दूष्युदरम्** । क्ली । त्रिदोषजोदररोगे । निदानलक्षणं यथा—"स्त्रियोऽन्नपानं नखरोममूत्रविडार्त्तवैर्युक्तमसाधुवृत्ताः । यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा । तेनाशु रक्तं कुपिताश्च दोषाः कुर्व्वन्ति घोरं जठरं त्रिलिङ्गम् ।...प्रकीर्त्तितं दूष्युदरन्तु घोरम् ॥" सु.नि.७अ. ।

**दृक्** । स्त्री । नेत्रे । रा.नि.व.१८ ।

**दृकम्** । क्ली । छिद्रे । उणा. ।

**दृककटः** । पुं । दृक्कटे । त्रिका. ।

**दृककर्णः** । पुं । सर्पे । हे.च. ।

**दृक्प्रदम्** । क्ली । सौवीराञ्जने । रा.नि.व.१३ ।

**दृक्प्रसादः** । पुं,स्त्री । कुलत्थायाम् । বনদাঁ-দরা । रा.नि.व.५ । कुलत्थाञ्जने । रा.नि.व.१३ ।

**दृक्श्रुतिः** । पुं । सर्पे । हला. ।

**दृक्क्षेकः** । पुं । चाषशीतले । वै.निघ. ।

**दृग्योनिः** । पुं । दूर्य्यकल्लीवे । त्रिदा. ।

**दृग्विषः** । पुं । सर्पे । है.च. ।

**दृग्व्याधिहृतम्** । क्ली । रक्ताञ्जने । वै.निघ. ।

**दृढ़ः** । पुं,क्ली । एलवालुके । रा.नि.व.४ । श्राअलीवृक्षे । धववृक्षे । लौहे । श.च. । हीरके । वै.निघ. ।

**दृढ़कण्टकः (का)** । पुं, स्त्री । खर्ज्जूरवृक्षे । वै.निघ. । अङ्कोटवृक्षे । ধল আঁকড় গাছ । श.च. ।

**दृढ़काण्डम्** । क्ली । दीर्घरोहिषतृणे । বড় গন্ধ তৃণ । रा.नि.व.८ । पुं । वंशे । বাঁশ । रा.नि.व.७ । [তাল গরুড়ী । रा.नि.व.३ ।

**दृढ़काण्डा** । स्त्री । वत्सादनीलतायाम् । পা-

**दृढ़गर्भम्** । क्ली । हीरके । प.मु. ।

**दृढ़ग्रन्थिः** । पुं । वंशे । বাঁশ । रा.नि.व.७ ।

**दृढ़च्छदः** । पुं,क्ली । तालवृक्षे । रा.नि.व.९ । दीर्घरोहिषे । বড় গন্ধ তৃণ । रा.नि.व.८ ।

**दृढ़तरुः** । पुं । धववृक्षे । ধাওয়া গাছ । रा.नि.व.९ । [ल्वजायां । উলু । रा.नि.व.८ ।

**दृढ़तृणः** । पुं,स्त्री । मुञ्जतृणे । মুজ । (णा) ब-

**दृढ़त्वक्** । पुं । यावनालशरे । रा.नि.व.८ । मुञ्जतृणे । वै.निघ. ।

**दृढ़दंशकः** । पुं । जलचरविशेषे । হাঙ্গর । वै.निघ. । शब्दार्थकल्पतरुः । [नि.व.११ ।

**दृढ़नीरः (लः)** । पुं । नारिकेलवृक्षे । रा.

**दृढ़पत्रः** । पुं । वंशे । বাঁশ গাছ । रा.नि.व.७ । मुञ्जतृणे । वै.निघ. ।

**दृढ़पत्री** । स्त्री । बल्वजायां । উলু । रा.नि.व.८ ।

**दृढ़प(पा)दा (पादी)** । स्त्री । भूम्यामलक्याम् । यवतिक्तायाम् । रा.नि.व.३।५ । [व.५ ।

**दृढ़पदी** । स्त्री । वन्दाके । পরগাছা । रा.नि.

**दृढ़पुष्पा** । स्त्री । गुलुच्छकन्दे । वै.निघ. ।

**दृढ़पृष्ठकः** । पुं । कच्छपे । रा.नि.व.१९ ।

**दृढ़प्ररोहः** । पुं । प्लक्षवृक्षे । পাকুড় গাছ । रा.नि.व.११ ।

**दृढ़फलः** । पुं । नारिकेलवृक्षे । गुवाकवृक्षे । रा.नि.व.११ । कतकवृक्षे । নির্ম্মাল্য । वै.निघ. ।

**दृढ़बन्धिनी** । स्त्री । श्यामालतायाम् । श.च. ।

**दृढ़बालुकम्** । क्ली । एलवालुके । रा.नि.व.४ । वै.निघ. । [See वज्रम् ।

**दृढ़भार्गवकम्** । क्ली । हीरके । रा.नि.व.१३ ।

**दृढ़माला** । स्त्री । भूधात्र्यां । वै.निघ. । भा. ।

**दृढ़मूलः** । पुं । मुञ्जतृणे । মুজ । मन्थानकतृणे । रा.नि.व.८ । नारिकेलवृक्षे । शब्दार्थकल्पतरुः ।

**दृढ़रङ्गदा (ङ्गा)** । स्त्री । स्फटिकारिकायां । भा. । रा.नि.व.१३ ।

**दृढ़रजाः** । स्त्री । प्रौढ़स्त्रियाम् । वै.निघ. ।

**दृढ़लता** । स्त्री । वत्सादनीलतायाम् । পাতাল গরুড়ী । रा.नि.व.३ ।

**दृढ़लोमा (न्)** । पुं, स्त्री । शूकरे । श.च. ।

**दृढ़वल्कः (लः)** । पुं । क्रमुकवृक्षे । रा.नि.व.११ । लकुचवृक्षे । ডহুয়া গাছ । रा.नि.व.९ । (ल्का) स्त्री । अम्बष्ठायां । रा.नि.व.४ ।

**दृढ़वल्लः** । पुं । मुञ्जतृणे । वै.निघ. ।

**दृढ़बीजः** । पुं । वर्व्वूरवृक्षे । चक्रमर्द्दे । रा.नि.व.८ । नारिकेलवृक्षे । बदरवृक्षे । रा.नि.व.११ ।

**दृढ़वृन्तः (न्तः)** । पुं । नारिकेलवृक्षे । वै.निघ. । [ष. ।

**दृढ़सूत्रिका** । स्त्री । मूर्व्वायाम् । মুর্গা । श.

**दृढ़स्कन्धः (न्धा)** । पुं, स्त्री । राजादनवृक्षे । क्षीरिणी । जटा. । रा.नि.व.११ । [११ ।

**दृढ़स्थितिः** । पुं । नारिकेलवृक्षे । रा.नि.व.

**दृढ़(ढ़े)क्षुरा** । स्त्री । बल्वजायां । উলু । रा.नि.व.८ ।

**दृढ़ेक्षुरः** । पुं । मुञ्जतृणे । वै.निघ. ।

**दृढ़ा** । स्त्री । सुपर्व्यां । তালমূলী । प.मु. । भूधात्र्यां । वै.निघ. ।

दृढ़ाङ्गम् । क्ली । हीरके । रा.नि.व.१३ ।

दृढ़ारङ्गा । स्त्री । स्फटिकारिकायां । भा. ।

दृतम् (ता) । क्ली, स्त्री । हीरके । वै.निघ. । श्र.च. । [मत्स्यविशेषे । मे. ।

दृतिः । पुं । भस्त्रायां, चर्म्मपुटके । सु.सू.८५. ।

दृतिधारकः । पुं । तरुभेदे । आकनपाता गाछ । श्र.च. ।

दृतिहरिः । पुं । कुक्कुरे । व्याक. । [हि.च. ।

दृन्भूः (न्फूः) । स्त्री । सर्पे । मे. । वज्रे । सूर्य्ये ।

दृश(ष)त् । स्त्री । प्रस्तरे । भम. । पेषणशिलायां । शिल । मे. ।

दृशा । स्त्री । चक्षुषि । श्र.च. ।

दृशाकाङ्क्षम् । क्ली । पद्मे । श्र.च. ।

दृशिः (शी) । स्त्री । लोचने । श्र.र. ।

दृशोपमम् । क्ली । श्वेतपद्मे । श्र.च. ।

दृश्या । स्त्री । कपिकच्छ्वां । आलाकुशी । वै. निघ. । [शिगुड़ति । रा.नि.व.४ ।

दृषत्पत्री । स्त्री । शिग्र(ग्रु)नाम् । वम्. सेगुड़ी,

दृषत्सारम् । क्ली । मुण्डलौहे । रा.नि.व.१३ ।

दृष(द्वि)दः । पुं । करञ्जोड़िपाषाणभेदे । हाड़-जोड़ा । हिं हाथाजोड़ी । वै.निघ. ।

दृष्टरजाः । स्त्री । प्राप्तवयस्कायां, मध्यमायां स्त्रियां । रा.नि.व.१८ ।

दृष्टान्तः । पुं । दृष्टान्तोनाम "मूर्खविदुषाम्बुद्धिसाम्यं यो वर्ण्यं वर्णयति – यथाग्निरुष्णो द्रवमुदकं स्थिरा पृथिवी आदित्यः प्रकाशक इति । यथावादित्यः प्रकाशकः, तथा साङ्ख्यवचनं प्रकाशकमिति ।" च.वि.८अ. । मरणे । मे. । [शास्त्रे । मे. ।

दृष्टिः । स्त्री । नेत्रे । रा.नि.व.१८ । ज्ञाने । द-

दृष्टिकृत् (तम्) । क्ली । स्थलपद्मे । श्र.च. श्र.र. । [चक्षुपूतनायाम् । वा.उ.३अ. ।

दृष्टिपूतना । स्त्री । बालानां ग्रहविशेषे,

दृष्टिप्रदा (वर्त्तिः) । स्त्री । नेत्ररोगे वर्त्तिः । त्रिफला, कुक्कुटाण्डत्वक् (कुकुड़ार डिमेर खोसा) कासीसं (हिराकस) लौहं नीलोत्पलं विडङ्गं समुद्रफेनं च. समं पेषयित्वा ताम्रपात्रे छागदुग्धेन सप्ताहं भावयेत् । अथ पुनश्छागदुग्धेन संमिश्य वर्त्तिः कार्य्या । भा. ।

दृष्टिबन्धुः । पुं । खद्योते । श्र.र. ।

दृष्टिमण्डलम् । क्ली । दर्शने । वै.निघ. ।

दृष्टियोनि । पुं । दूर्य्यकजीवे । सु. ।

दृष्टिरोगः । पुं । नेत्ररोगे ।

दृष्टिवर्त्म । क्ली । नेत्रवर्त्मनि ।

दृष्टिविषः । पुं । सर्पे । वै.निघ. ।

दृष्टिसन्धिः । पुं । नेत्रकोषे । वै.निघ. । [मे. ।

देवः । पुं । पारदे । रा.नि.व.१३। क्ली। इन्द्रिये ।

देवकर्द्दमः । पुं । पद्मसुगन्धी । समभागश्रीखण्डचन्दनागुरुकर्पूरकुङ्कुमेषु । रा.नि.व.२२ ।

देवकाष्ठम् । क्ली । देवदारुणि । प.मु. । काष्ठदारुणि । सि यो.काम.चि.मस्तुरवटके । गुणाः —तीक्ष्णोष्णं रूक्षं श्लेष्मवातघ्नञ्च । रा.नि.व.१२ ।

देवकुक्कुटकः । पुं । सुनिषण्णकशाकभेदे । शुशुनि शाक । वम्. करडु । गुणाः—शीतो वृष्यः मूत्ररोगहरः अश्मरीनाशकः । वै.निघ. ।

देवकुतुम्बकः । पुं । महाद्रोणपुष्प्याम् । बड़ घलघसिया । वै.निघ. ।

देवकुम्भः (म्भा) (म्भी) । पुं, स्त्री । स्वनामख्यातवृक्षविशेषे । हिं तुम्बा, दणहला । गन्धप्रसारणी कुम्बेति कोङ्कणे । वम्.शेतवड़ । गुणाः—कटुः तिक्तः मेध्यः पारदशोधकः पिशाचबाधाकफघ्नः वाताग्निमान्द्यघ्नः द्रोणपुष्पीगुणाश्च । वै.निघ. ।

देवकुरुम्बा । स्त्री। महाद्रोणपुष्प्याम् । रा.नि. व.५ ।

देवकुसुमम् । क्ली । लवङ्गे । रा.नि.व.११ ।

देवगन्धकम् । क्ली । रोहिषतृणे । गन्धतृण । वै निघ. । [आरामशीतलायाम् । वै.निघ. ।

देवगन्धा । स्त्री । महामेदायाम् । रा.नि.व.५।

देवग्रहः । पुं । भूतग्रहविशेषे । उन्मादभेदे । तल्लक्षणं यथा—"सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्री अवितथसंस्कृतप्रभाषी । तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति नरः स देवजु-

ष्टः । संक्लेदी द्विजगुरुदेवदोषवक्ता जिह्मांचो विजतभयो विमार्गदृष्टिः । सन्तुष्टो न भवति चान्नपानजातैः दुष्टात्मा भवति स देवशत्रुजुष्टः ॥" निदा. ।

**देवचिकित्सकौ** । पुं । अश्विनीकुमारौ । हला. ।

**देवजग्ध(क)म्** । क्ली । रोहिषतृणे, कत्तृणे । সুগন্ধতৃণ । अम. । [हारा. ।

**देवट्टी** । स्त्री । चित्रपक्षिविशेषे । গাংচিল ।

**देवतरणी** । स्त्री । राजतरणीपुष्पवृक्षे । वै. निघ. ।

**देवतरुः** । पुं । अश्वत्थवृक्षे, चैत्यवृक्षे । त्रिका. । विकङ्कतवृक्षे । वै.निघ. । मन्दारवृक्षे । पारिजातवृक्षे । हरिचन्दने । अम. ।

**देवता** । स्त्री । धुस्तूरवृक्षे । वै.निघ. ।

**देवताकुसुमम्** । क्ली । लवङ्गे । देवकुली इति ख्याते गन्धद्रव्ये । च.द. ।

**देवताड़ः (कः)** । पुं । देवदालीवृक्षे । দেয়াতাড়া । घाषालतायाम् । प.मु. । विश्व. ।

**देवताण्डः** । पुं । देवदालीवृक्षे । मद.व.१ ।

**देवतामणिः** । पुं । महामेदे । वै.निघ. ।

**देवदग्धम्** । क्ली । रोहिषतृणे । श.चि. । रोहीतकभेदे । वै.निघ. ।

**देवदण्डा** । स्त्री । नागबलायाम् । रा.नि.व.४ ।

**देवदण्डोत्पला** । स्त्री । नागबलायाम् । वै. निघ. । [শস্তিঘোষা । र.मा. ।

**देवदानी** । स्त्री । देवदाल्यां । पीतघोषायां ।

**देवदारु** । क्ली । (Cedrus deodara, Syn. Pinus deodara.) स्वनामख्यातसुगन्धिकाष्ठविशेषे । দেবদারু । हिं देवदार । तच्च द्विविधं स्निग्धदारुकाष्ठदारुभेदेन । तयोः स्निग्धदारु तिक्तं स्निग्धोष्णं वातश्लेष्मघ्नम् आमदोषविबन्धार्शःप्रमेहज्वरघ्नञ्च । काष्ठदारु तिक्तोष्णं श्लेष्मवातघ्नं भूतदोषघ्नञ्च । रा.नि.व.१२ । "सुगन्धि लघु चक्षुष्य सुरदारु प्रकीर्त्तितम् ।" भैष. ।

**देवदालिका (ली)** । स्त्री । (Andropogon serratus.) मूषिकविषघ्नपीतदेवताड़ाख्यलताविशेषे । अस्याः स्वरूपवत् फलपुष्पवल्ली, फलञ्च कर्कोटकीवत् । পীত ঘোষা, দেয়াতাড়া । हिं घघरबेल सनैया । भा.पु.१भ. । मं देवदाली कं देवडंगरो । तें डामरगंडि, लताविशेषम् । देवलि इति । सु.टी.३९अ.उ. । गुणाः— तिक्तोष्णा कटुका पाण्डुकफघ्नी अर्शःश्वासकासघ्ना मलाभूतघ्नी च । रा.नि.व.३ । तत्फलं मलसञ्चयं स्वस्थानात् ऊर्द्धम् अधो वा बहिर्नयेत् । र.सा.सं. । वा.सू.१५अ. । त्रायमाणायाम् । वै.निघ. ।

**देवदासी** । स्त्री । वनबीजपूरवृक्षे । रा.नि.व.११ ।

**देवदीपः** । पुं । नेत्रे । वै.निघ. ।

**देवदुन्दुभिः** । पुं । रक्ततुलस्याम् । र.मा. । कृष्णतुलस्याम् । वै.निघ. । [नि.व.११ ।

**देवदूता (ती)** । स्त्री । वनबीजपूरवृक्षे । रा.

**देवद्रुमः** । पुं । देवदारुवृक्षे । भा.म.१भ.द्वात्रिंशत्काथे । [व.५ ।

**देवद्रोणी** । स्त्री । महाद्रोणपुष्पीक्षुपे । रा.नि.

**देवधान्यम्** । क्ली । धवलयावनालाख्यशिम्बीधान्ये । দেধান । हिं पोनरी, जुहल । रा.नि.व. १६ । गुणाः—हिमं स्वादु श्लेष्मपित्तघ्नम् अवृष्यं तुवरं रूक्षं क्लेदनं लघु च । भा. । [निघ. ।

**देवधूपः** । पुं । गुग्गुलौ । प.मु. । रालं । वै.

**देवनम्** । क्ली । पद्मे । श.च. । तेजसि । वै. निघ. ।

**देवन(ना)लः** । पुं । महानले । বড় নল গাছ । हिं नर्कट । मं थोरदेवनलु, हिरियदेमाल । गुणाः—अतिमधुरः हृद्य ईषत्कषायः रसकार्य्ये शस्तः नलादधिकगुणश्च । रा.नि.व.८ ।

**देवनिर्म्मिता** । स्त्री । गुडूच्याम् । वै.निघ. ।

**देवपत्नी** । स्त्री । रक्तालौ । मध्वालौ । त्रिका. ।

**देवप(पु)त्रिका (त्री)** । स्त्री । सूक्ष्मायां । वै. निघ. ।

**देवपर्णम्** । क्ली, पुं । सुरपर्णाभिधपुत्रशाके । सूक्ष्मायाम् । পিড়িং শাক । रा.नि.व.१० ।

**देवपुष्पम्** । क्ली । लवङ्गे । वै.निघ.जीर्णज्व.चि. लवङ्गादिकषाये ।

**देवपुष्पी** । स्त्री । द्रव्यविशेषे । देवकुली इति लोके । च.द.वा.व्या.चि. । "देवपुष्पी तोयपथम् ।"

**देवप्रियः** । पुं । पीतभृङ्गराजे । रा.नि.व.४ । See मार्कवः । कार्त्ति । त्रिका. । पीतीझीटे । श्रम-त्लिहवे । (श्रा) स्त्री । नागवल्लीलतायाम् । वै.निघ.।

**देवबला** । स्त्री । महाबलायाम् । नायमाणल-तायाम् । रा.नि.व.४।५ ।

**देवभवनम्** । क्ली । अश्वत्थवृक्षे । श्र.च. ।

**देवमणिः** । पुं । महामेदायाम् । प.मु. । रा.नि.व.५ । मेदायाम् । वै.निघ. । अश्वस्य निगाला-वर्त्ते । हारा. ।

**देवमर्त्त्यी** । स्त्री । महामेदायाम् । वै.निघ. ।

**देवमातृकः** । पुं । वृष्ट्यम्बुपालिते देशे । रा.नि व.२ ।

**देवमानकः** । पुं । कौस्तुभमणौ । श्र.र. ।

**देवमासः (कः)** । पुं । गर्भाष्टमे मासि । त्रिका. ।

**देवमित्रः** । पुं । अर्ज्जुनवृक्षे । वै.निघ. ।

**देवराजाम्रनाख्यः** । पुं । संविदायां । सिद्धि । रस.र. ।

**देवरातः** । पुं । सारसपक्षिभेदे । शब्दार्थकल्प.।

**देवलता** । स्त्री । वटपत्रमल्लिकायां । नवमल्लि-का । श्र.च. ।

**देवलाङ्गुलिका** । स्त्री । वृश्चिकाल्यां । বিছা-তি গাছ । रा.नि.व.८ । क्षुद्रसेवपर्ण्यां । ছোট মেড়াশিঙে । वै.निघ. ।

**देववल्लभः** । पुं । पुन्नागवृक्षे । श्रम. ।

**देववृक्षः** । पुं । गुग्गुलुवृक्षे । मे. । गोपघोण्टा-यां । শেয়াকুল । वै.निघ. । सप्तपर्णवृक्षे । त्रि-का. । मन्दारवृक्षे । মন্দার গাছ । मे. ।

**देवशालिः** । पुं । शालिधान्यविशेषे । वै.निघ.।

**देवशेखरः** । पुं । दमनकक्षुपे । দনা । रा.नि.व.१० ।

**देवश्रेणी** । स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**देवसर्षपः** । पुं । कुक्कुटपाद्यां । সরিষাবিশেষ । सं देवसिरस । कं देवसिरसभेद । गुणाः— कटुत्वः कफघ्नः क्रमिदोषघ्नः रुच्यः मुखरोगघ्नश्च । रा.नि.व.८ । दधके । मातुलुङ्गवृक्षे । विभीतके । कलिङ्गके । देशवव । रा.नि.व.२३ ।

**देवसहा** । स्त्री । सहदेवायाम्, महाबलायां । रा.नि.व.४ । दण्डोत्पलायां । विश्व. । नायमाणा-यां । रा.नि.व.५ ।

**देवसृष्टा** । स्त्री । मदिरायां । है.च. ।

**देवा** । स्त्री । अशनपर्ण्यां । पद्मचारिण्यां । श्र.च.।

**देवात्मा** । पुं । अश्वत्थवृक्षे । श्र.च. ।

**देवाह्वयम्** । क्ली । एका सहदेवा (महाबला) द्वितीया विश्वेदेवा (नागबला) । वा.सू.१५अ.वि-दार्य्यादौ । देवाह्वमिति पाठदर्शनात् । अरुणः ।

**देवानाम्प्रियः** । पुं । छागे । त्रिका. ।

**देवाभीष्टा** । स्त्री । पूगवृक्षे । वै.निघ. । ताम्बू-ल्यां । পান । श्र.च. । [व.१० ।

**देवार्हम्** । क्ली । सुरपर्णनामपत्रशाके । रा.नि.

**देवार्हा** । स्त्री । महाबलायाम् । পীত বেড়েলা । रा.नि.व.४ ।

**देवावासः** । पुं । अश्वत्थवृक्षे । चैत्यवृक्षे । त्रिका.।

**देवाह्वः (यः)** । पुं,क्ली । देवदारुवृक्षे । वा.सू. १५अ.वचादि,विदार्य्यादिः । वै.निघ.२भ.चय-चि. सूर्य्यप्रभागुल्याम् । च.द.उ.स्त.चि. । वा.उ.२अ. ।

**देविता** । पुं । धुस्तूरवृक्षे । भा. ।

**देवी** । स्त्री । लिङ्गिनीलतायां । बन्ध्याकर्कोटक्यां । मूर्व्वायां । रा.नि.व.३ । सौराष्ट्रमृत्तिकायां । प-र्पटी । र.सा.सं. । रस.कौ.ज्वरान्तकरसे । पृक्कायां । পিড়িং শাক । रा.नि.व.१२ । शाल-पर्ण्याम् । पाठायाम् । रा.नि.व.४।६ । श्रादित्यभ-क्तायां । হুড়হুড়িয়া । बलायां । বেলেড়া । म-हाद्रोणायां । বড় দ্রোণপুষ্পী । नागरमुस्तायां । रा.नि.व.२३ । अतसीवृक्षे । हरीतक्यां । पक्षिवि-शेषे । শ্যামা পাখী । रा.नि.व.११।१६।१९ ।

**देवीलता** । स्त्री । अनन्तमूले । च.द.१४अ. ।

**देवीवीजम्** । क्ली । गन्धके । भैष.ज्व.चि.चक्री-रसे ।

**देवेष्टः (ष्टा)** । पुं, स्त्री । गुग्गुलौ । रा.नि.व.१२ । सर्ज्जवृक्षे । वै.निघ. । महामेदायां । रा.नि.व. । वनवीजपूरवृक्षे । रा.नि.व.११ ।

**देवोन्मादः** । पुं । देवकृतोन्मादरोगे । तल्लक्षं —"अमर्त्यवाग्विक्रमवीर्य्यचेष्टो ज्ञानादिविज्ञान-

बलादियुक्तः। प्रकोपकाली नियतश्च यस्य देवादिजन्मा मनसो विकारः॥" भा.।

**देश्या**। स्त्री। सुरामांस्यां। ब्राह्मीरूपे। वै.निघ.।

**देशः**। पुं। स्थाने। स त्रिविधः, आनूपजाङ्गल-मिश्रभेदेन। विशेषाः पर्य्याये द्रष्टव्याः। [निघ.।

**देशसमाख्यबीजम्**। क्ली। इन्द्रयवे। वै.

**देशिनी**। स्त्री। तर्ज्जन्याम्। श.र.।

**देहः (कः)**। पुं.क्ली। लेपने। शरीरे। रा.नि.व.१८। स स्थूलकृशमध्य इति त्रिविधः—"कर्षयेद् बृंहयेच्चापि सदा स्थूलकृशौ नरः। रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक्। यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमप्रधानमधिकरणानाम्। केचित्कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः। तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत्॥" सु.सू.३५अ.।

**देहकोषः (चर्म्म)**। पुं। त्वचि। চাম্‌ড়া, त्वक्। वै.निघ.। पक्षे। পাঁখা। श.च.।

**देहत्वक्**। स्त्री। चर्म्मणि। वै.निघ.।

**देहदः**। पुं। पारदे। रा.नि.व.१३।

**देहदुर्गन्धता**। स्त्री। शरीरदौर्गन्ध्ये। গায়ে দুর্গন্ধ। तन्नाशकौषधं यथा—अर्ज्जुनपुष्पं जम्बूपत्रं लोध्रञ्चेति समभागं लिपेत्। पुराणम्।

**देहधारक(ण)म्**। क्ली। अस्थनि। है.च.। आहारे। वै.निघ.।

**देहधिः**। पुं। पक्षे। পাখা। श.च.।

**देहधृक्**। पुं। वायौ। वै.निघ.।

**देहभृत्**। पुं। जीवे, प्राणिनि। वै.निघ.।

**देहयात्रा**। स्त्री। मृत्यौ। अन्ने। भोजने। त्रिका.।

**देहला**। स्त्री। सुरायाम्। वै.निघ.।

**देहवल्कलम्**। क्ली। वसायाम्। চর্ব্বি। रा.नि.व.१८।

**देहसारः**। पुं। मज्जायाम्। रा.नि.व.१८।

**देहक्षयः**। पुं। रोगे। श.च.।

**देहिका**। स्त्री। उपजिह्विकाकीटे। পেদো পোকা। त्रिका.।

**देही (हन्)**। त्रि। शरीरिणि। त्रिका.।

**दैत्यः**। पुं। जीवे। रस र.अश्वगन्धाकुष्ठे।

**दैत्यग्रहः (त्योन्मादः)**। असुरग्रहे। लक्षणं यथा—"जिह्मदृष्टिं दुरात्मानं गुरुदेवद्विजद्विषं। निर्भयं मानिनं शूरं क्रोधनं व्यवसायिनं। रुद्रः स्कन्दो विशाखोऽहमिन्द्रोऽहमिति वादिनं। सुरामांसरुचिं विद्यात् दैत्यग्रहगृहीतकम्॥" वा.उ.उ.अा.चि.। दैत्यावेशजन्योन्मादरोगे। लक्षणं—"संस्वेदी द्विजगुरुदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः। सन्तुष्टो भवति नचान्नपानजातैः दुष्टात्मा भवति स देवशत्रुजुष्टः॥" भा.।

**दैत्यमेदजः**। पुं। भूमिजगुग्गुलौ। महिषाक्षगुग्गुलौ। रा.नि.व.१२।

**दैत्यरक्तकम्**। क्ली। हिङ्गुले। र.सा.सं.।

**दैत्या**। स्त्री। सुरामांस्याम्। रा.नि.व.१२। मद्ये। त्रिका.। यमानीभेदे। वै.निघ.।

**दैत्येन्द्रः**। पुं। गन्धके। भैष.पञ्चाननरसे।

**दैत्येन्द्ररक्तम्**। क्ली। हिङ्गुले। सा.कौ.त्रिदोषनीहाररसे।

**दैन्यम्**। क्ली। क्लीवचित्ततायाम्। भा.।

**दैर्घरात्रिकः**। त्रि। मारात्मके। च.चि.६अ।

**दैवम्**। क्ली। पूर्व्वकृतकर्म्मणि। "दैवं पुरा यत् कृतमुच्यते तु।" च.शा.२अ.।

**दैवच्छिद्रम्**। क्ली। कर्म्मच्छिद्रे। वा.उ.१४अ.।

**दैवदारु**। क्ली। देवदारुणि। र.मा.।

**दैवदीपः**। पुं। लोचने। त्रिका.।

**दैवबलप्रवृत्तः**। पुं। आधिदैविकरोगेषु। ये देवद्रोहादभिशप्तका अथर्वकृता उपसर्गकृताः। तेऽपि द्विधा, विद्युदशनिकृताः पिशाचादिकृताश्च। सु.सू.२४अ.।

**दैवव्यपाश्रयः**। त्रि। मणिमन्त्रौषधपूजोपहाररूपौषधवाचके। च.वि.८अ.।

**दैवी**। स्त्री। बलिपूजादिरूपे चिकित्साविशेषे। यथा—"आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता।" वैद्यकम्।

**दैवोदासिः**। पुं। दिवोदासापत्ये। श.चि.।

**दोः**। पुं। बाहौ। रा.नि.व.१८।

**दोःशिखरम्** । पुं । स्कन्धे । रा.नि.व.१८ ।

**दोःशिका (खी)** । स्त्री । तरदोलतायाम्. कोषातक्याम् । वै.निघ. ।

**दोध्रः** । पुं । गोवत्से । (छन्दःशास्त्रम्) ।

**दोर्गड़ः** । त्रि । बाहुकुण्ठे । नुलो । त्रिका. ।

**दोर्दण्डः** । पुं । बाहौ । भूरिप्र. ।

**दोर्मध्यम्** । क्ली । बाहुमध्यभागे । हातेर बाजु । शब्दार्थकल्प. ।

**दोर्मूलम्** । क्ली । बाहुमूले । वगल । वै.निघ. ।

**दोला (लिका)** । स्त्री । नीलीवृक्षे । वै.निघ. । क्रीडार्थं काष्ठादिमये हिन्दोलके । ऽहिंदला । तद्गुणगुणाः—वातकोपनत्वम् भ्रमस्थैर्यबलाग्निकारित्वञ्च । राज. ।

**दोलायन्त्रम्** । क्ली । रसस्वेदनार्थं यन्त्रविशेषे । तस्य लक्षणम्—"निबद्धमौषधं गर्ते भूर्जे तन्त्रिगुणे वरे । रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि । सन्धानपूर्णकुम्भान्तः स्वावलम्बनसंस्थितम् । अधस्ताज्ज्वालयेदग्निं तत्तदुक्तक्रमेण हि । दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥" भा. । "द्रवद्रव्येण भाण्डस्य पूरितार्द्धोदरस्य च । मुखे तिर्य्यकृते दण्डे द्रव्यं सूत्रेण लम्बयेत् । स्वेदयेदन्तरगतं दोलायन्त्रमुदीरितम् ॥" चचि. ।

**दोषः (कः)** । पुं । वातपित्तकफरजस्तमोरूपेषु । श.च. । तत्र आद्यास्त्रयः शारीरदोषाः । द्वितीयौ मानसौ तत्र त एव धातुमलपदवाच्याः । "तेषु क्रमादमी दोषाः कफपित्तानिलाः स्थिताः ।" रा.नि. व.२१ । "मानसः पुनरुद्दिष्टो रजश्च तम एव च ।" च.सू.४अ. । तन्निरुक्तिः—"धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः । वातपित्तकफा एते त्रयो दोषा इति स्मृताः । ते धातवोऽपि विद्वद्भिर्गदिता देहधारणात् । मलाश्च ते रसादीनां मलिनीकरणान्मताः ॥" भा. । उक्तञ्च यथा—"दोषधातुमलमूलं हि शरीरम्…" । तत्र प्रस्यन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति । सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करोति । रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा विभक्तम् अग्निकर्म्मणानुग्रहं करोतीति । एषां विलिङ्गम् प्रतिपत्तेः कुर्व्वीत ॥ एषां क्षये मन्दचेष्टता मन्दोष्मता-रूक्षतादिदेहहानिरायाति । तत्र स्वयोनिवर्द्धनद्रव्याख्येव प्रतीकारः । एषां वृद्धौ लक्षणपाकाद्यादिकं भवति । तेषां यथास्वं संशोधनं क्षपणञ्च च-यादविरुद्धैः क्रियाविशेषैः प्रतिकुर्व्वीत ॥" सु.सू. १५अ. । गोवत्से । श. र. । [प.मु. ।

**दोषकरः** । पुं । लकुचवृक्षे । मान्दार गाछ । ।

**दोषघ्नः** । पुं । वैद्ये, चिकित्सके । हे.च । त्रि । दोषवैनरि । [कफेषु । रा.नि.व.२९ ।

**दोषत्र(त्रित)यम्** । क्ली । मिलितवातपित्त-

**दोषपाचनः** । पुं । कपित्थवृक्षे । प.मु. । त्रि । दोषपाचके ।

**दोषप्रकृतिः** । स्त्री । दोषाणां स्वमार्गसञ्चारे । भा.ज्व.चि. । वातादीनां यथाक्रमं वर्षाशरद्वसन्तप्रकोपे वसन्तशरत्कोपे वा । "यथर्त्तुकुपितो दोषो दोषप्रकृतिरुच्यते ।" वि.र. ।

**दोषबलप्रवृत्तः** । पुं । रोगविशेषे । ते च ते रोगा ये आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च । तेऽपि पुनः द्विधा आमाशयोत्थाः पक्वाशयोत्थाश्च । एतएवाध्यात्मिकरोगाः कथ्यन्ते । सु.सू.२४अ. ।

**दोषलः** । त्रि । दोषयुक्ते ।

**दोषशमनवस्तिः** । पुं । निरूहवस्तिभेदे । यथा—"प्रियङ्गु मधुकं मुस्ता तथैव च रसाञ्जनम् । सक्षीरं शस्यते वस्तिः दोषाणां शमनः परम् ॥" भा. ।

**दोषहरवस्तिः** । पुं । तन्नामकनिरूहवस्तौ । "शताह्वा मधुकं बिल्वं कौटजं फलमेव च । सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः ॥" भा. ।

**दोषा** । स्त्री । बाहौ । रा.नि.व.१८ ।

**दोषा(षोत्)क्लेशी** । स्त्री । वनवर्व्वरिकायाम् । वन बावुई । रा.नि.व.१० ।

**दोषातिलकः** । पुं । दीपे । त्रिका. ।

**दोषान्धः** । पुं । दृष्टिरोगभेदे । लक्षणं—"अकेऽस्तमस्तकन्यस्तगभस्तौ सम्भ्रमागताः । स्थगयन्ति दृशं दोषाः दोषान्धः स गदोऽपरः ॥ दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः । विलीनलीना यच्छन्ति व्यक्तमत्राक्षि दर्शनम् ॥" अत्र रोगिणो दिवारूपं पश्यन्ति । वा.उ.१२अ. ।

**दौषिकः** । पुं । रोगी । श.च. । [निघ. ।
**दोहः** । पुं । दोहने । दोहनपात्रे । दुग्धे । वै.
**दोहजम्** । क्ली । दुग्धे । शब्दार्थकल्पतरुः ।
**दोहदः (लः)** । पुं । गर्भिणीदोहदे । साध । हे.च. । गर्भचिह्ने । भरतधृतकोषान्तरम् ।
**दोहदलक्षणम्** । क्ली । गर्भधारणे । गर्भे । वयःसन्धौ । मे. ।
**दोहदवती** । स्त्री । गर्भवत्यां स्त्रियां । हे.च. ।
**दोहनम्** । क्ली । स्तनाद्दुग्धनिःसारणे । दे.श्रा. । [नभाख्ये । त्रिका. ।
**दोहनी** । स्त्री । धातकीवृक्षे । वै.निघ. । दोह-
**दोहलवती** । स्त्री । दोहदवत्यां शब्दार्थकल्प. ।
**दोहली** । स्त्री । अशोकवृक्षे । रा.नि.व.१० ।
**दोहापनयः (पयनम्)** । पुं,क्ली । गव्यदुग्धे । त्रिका. । वै.निघ. । [न । वा.उ.३७अ. ।
**दौग्धिकम्** । क्ली । दुग्धिकामूले । थिरुइमू
**दौण्डिका** । स्त्री । कोषातक्यां । वै.निघ. ।
**दौर्गन्ध्यम्** । क्ली । दुर्गन्धतारूपपित्तजरोगविशेषे । दुर्गन्धता । तन्नाशकतैलं—"चन्दनं कुङ्कुमं मांसी कर्पूरी जातिपत्रिका । जातीकक्कोलपूगानां लवङ्गस्य फलानि च । अगुरुशीरकाश्मर्य्यं कुष्ठं तगरनालिका । गोरोचना प्रियङ्गुश्च चोलं मदनकं नखं । सरलः सप्तपर्णश्च लाक्षा चामलकी तथा । कर्चूरकः पद्मकश्च एतैस्तैलं प्रसाधितम् ॥" गारुडे प्रसिद्धम् ।
**दौर्बल्यम्** । क्ली । दुर्बलतायाम् । वै.निघ. ।
**दौर्वीणम्** । क्ली । इष्टपर्णे । दूर्वारसे । मे. ।
**दौर्हृदम्** । क्ली । गर्भे । दोहदे । हे.च. ।
**दौलेयः** । पुं । कच्छपे । हे.च. । [निघ. ।
**दौष्कुलेयः** । पुं । ग्रन्थिपर्णमूले । गैंटेला । वै.
**द्युकः** । पुं । पेचके । वै.निघ. ।
**द्युकारिः** । पुं । काके । वै.निघ. ।
**द्युगः** । पुं । पक्षिणि । रा.नि.व.१९ ।
**द्युतरुः** । पुं । कल्पतरौ । वै.निघ. ।
**द्यु(ति)मणिः** । पुं । अर्कोपले । अम. । र.सा, सं.विद्याधररसे । मारिततास्रे । भा.म.१भ.ज्व.चि. त्रिपुरभैरवरसे । "द्युमणिरजकासमार्द्रकमर्हिकम् ।"
**द्युम्नम्** । क्ली । बले । मे. ।
**द्यूतबीजम्** । क्ली । कपर्दके । त्रिका. ।
**द्योतनम्** । क्ली । दर्शने । हे.च. ।
**द्योभूमिः** । पुं । पक्षिणि । श.च. ।
**द्योत्रम्** । क्ली । बीजे । उणा. ।
**द्रङ्क्षणम्** । क्ली,पुं । टङ्कद्वयमाने । (इति कालिङ्गमानम्) । "क्षुद्रमीरटकश्चापि द्रङ्क्षणः स निगद्यते । शाणौ द्वौ द्रङ्क्षणः···" (इति मागधमानम्) । प.प्र.१ख. । तोलके । श.मा. ।
**द्र(द्रा)प्स[प्सा]म्** । क्ली । तरलदधनि । वङ्गादत्ते । अम. । अ.टी.भ. ।
**द्रवः** । पुं । तक्रे । रा.नि.व.१५ । तरले । पातले । गुणाः—क्लेदकरः व्यापकश्च, शुष्कः विपरीतगुणः । भा. । रसे । विश्व. । क्ली । जले । सि.यो. उन्मा.चि.महापैशाचघृते ।
**द्रवजः** । पुं । शर्करायाम् । गुडे । रा.नि.व.१४ ।
**द्रवत्पत्री** । स्त्री । शिमडीवृक्षे । रा.नि.व.४ ।
**द्रवद्रव्यम्** । क्ली । तरलद्रव्ये ।
**द्रवन्तिका (न्ती)** । स्त्री । (Anthericum tuberosum.) खनामख्यातक्षुपे । मूशाली लता, बुड़िगुयापान, मूषाकाणी । मं भौपनी कं वल्लिइदें । तें एलुकचेविचेट्ट । गुणाः—मधुरा शीता रसबन्धकारी ज्वरकृमिशूलघ्नी च । रा.नि. व.५ । क्षुद्रदन्तीक्षुपे । र.मा. । क्षुद्रदन्त्याम् । चीरितपत्रदन्तीभेदे । च.सू.१अ. । सु.सू.३८अ. । मुषकपर्णीनाममहाक्षुपे । ईन्दूरमारी । रा.नि.व.४ । क्षुद्रास्फुकर्णीलतायाम् । रा.नि.व.३ । वा.सू.हेमा. टी.१५अ.श्यामादि: । "श्यामा दन्ती द्रवन्ती ।" क्षुद्रदन्त्याम् । च.सू.२अ. ।
**द्रवरसा** । स्त्री । लाक्षायाम् । रा.नि.व.६ ।
**द्रवशूलः** । पुं । अन्नद्रवशूले ।
**द्रवस्वेदः** । पुं । वातहरस्वेदविशेषे । स च द्रव्यक्वाथपूर्णे कटाहे, षड्विंशत्यङ्गुलायामोत्सेधयुक्ते चतुष्कोणे सौवर्णादिकोष्ठके वा अवगाह्योपविश्य च गृह्यते । "द्रवस्वेदस्तु वातघ्नो द्रव्यक्वाथेन पूरि-

ते । कटाहे लौहजे वापि सुपविष्टे(?) स्वपायेत् । सौवर्णं राजतं वापि ताम्रं लौहज.दारुजम् । कोष्ठकं तत्र कुर्व्वीतोच्छ्राये षड्विंशदङ्गुलं । आयामे वा तदेव स्यात्तुष्कोणन्तु चिक्कणम् ॥" भा. ।

**द्रवा ।** स्त्री । मेदायाम् । रा.नि.व.५ ।

**द्रविडी ।** स्त्री । एलायाम् । वै.निघ.१अ.वा. व्या.चि.शतावरीतैलं । [मे. ।

**द्रविणम् ।** क्ली । सुवर्णे । रत्ने । बले । धन. ।

**द्रविणनाशनः ।** पुं । शिगुवृक्षे । सजिना गाछ । श.र. ।

**द्रवीकरणम् ।** क्ली । तरलतापादने ।

**द्रव्यम् ।** क्ली । वसुनि । पित्तले । मद्ये । अले । विलेपने । जतुनि । ला । मे. । औषधोपकरणे । औषधे । त्रिका. । तत्र द्रव्यमात्रं पृथिव्यादिभूतसमुदायादुत्पद्यते, तदुत्कर्षस्याभिव्यञ्जकत्वात्, तत्पञ्चविधं—पार्थिवम् आप्यं तैजसं वायव्यमाकाशीयञ्च । तत्र "स्थूलसारसान्द्रमन्दखरगुरुकठिनगन्धबहुलमीषत्कषायम्प्रायशो मधुरम्पार्थिवम्, तच्च स्थैर्य्यबलादिकरं विशेषतश्चाधोगतिस्वभावम् । यच्च द्रव्यं शीतस्निग्धगुरुसरसान्द्रं पिच्छिलीषत्कषायाम्ललवणं मधुररसप्रायं तदाप्यम्, तच्च स्नेहनाह्लादनादिकरम् । यद्रूपगुणबहुलम् ईषदम्ललवणं कटुरसप्रायं विशेषतश्चोर्द्धगतिस्वभावं तत्तैजसं, तच्च दहनपचनदारणादिकरम् । सूक्ष्मरूक्षखरविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतश्च कषायं वायव्यम्, तद्वैशद्यलाघवादिकरम् । श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम्, तच्च मार्द्दवलाघवादिकरम् । अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं वाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्याणि कर्म्मकराणि भवन्ति । तानि यदा कुर्व्वन्ति स कालः, यत्कुर्व्वन्ति तत्कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं, यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपायः, यन्निष्पादयन्ति तत्फलमिति । तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापो गुर्व्व्यो गुरुत्वादधोगच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात् । वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्निवायू हि लघू लघुत्वाच्च तान्यूर्द्धमुत्तिष्ठन्ति तस्माद्वमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम् । उभयगुणभूयिष्ठमुभयतोभागं । आकाशगुणभूयिष्ठं संशमनं । सांग्राहिकमनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात् । दीपनमग्निगुणभूयिष्ठं । लेखनमनिलानलगुणभूयिष्ठं । बृंहणं पृथिव्यम्बुगुणभूयिष्ठं । एवमौषधकर्म्माण्यनुमानात्साधयेत् । भवन्ति चात्र —भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः । भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिं ॥ खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणां । वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः ॥ आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते । वसुधाजलजाताभ्यां बलासः परिवर्द्धते ॥ एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितं । द्विशो वा बहुशो वापि ज्ञात्वा दोषे विचारयेत् ॥" सु.सू. ४१अ. । दोषशमनधातुदूषणस्वस्थहितत्वात् द्रव्यं त्रिविधमाह चरकः ॥ तच्च पुनस्त्रिविधं जाङ्गमौद्भिदपार्थिवभेदात् । तत्र जाङ्गममूलविंशतिः, भौमं विंशतिः, उद्भिदष्टहु । तच्च चतुर्विधं वनस्पतिवीरुद्वानस्पत्यौषधयः । इति । च.सू.१अ. । द्रव्यं पुनः द्विविधं शुष्कमार्द्रञ्चेति । तयोः शुष्कद्रव्यापेक्षयार्द्रस्य द्विगुणा मात्रा ग्राह्या । "शुष्कद्रव्ये तु या मात्रा आर्द्रस्य द्विगुणा हि सा ।" तदपवादमाह —"वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरीवर्षाभूकुटजाश्वगन्धसहिताः ताः पूतिगन्धामृताः । मांसीनागबलाकुरुण्टकपुरोहिङ्ग्वार्द्रकं चैतवं याश्चान्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता गणाः ॥" इन्दीवरी शतावरी । पूतिगन्धा प्रसारणी । कुरुण्टकः पीतझिण्टी । इक्षुजाता गुड़ादयः । गणाः दशमूलादयः । "वासाकुटजकुष्माण्डशतपुष्पासहामृताः । प्रसारण्यश्वगन्धा च नागाख्यातिबलाबलाः ॥ नित्यमार्द्राः प्रयोक्तव्याः न तासां द्विगुणो भवेत् ॥" शार्ङ्ग. । "शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्म्मसु । आर्द्रञ्च द्विगुणं विद्यादेष सर्व्वत्र निश्चयः । द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋते घृतगुड़क्षौद्रधान्यकृष्णाविडङ्गतः ॥" प.प्र.१ख. ।

**द्रव्यकल्कः ।** पुं । दृषदि पेषितद्रव्ये ।

**द्रव्यगुणाकरः** / **द्रव्यरत्नावली** } पुं, स्त्री । द्रव्यगुणसंग्रहविशेषे ।

**द्रव्यसङ्ग्रहः ।** पुं । करचरणहरीतक्यादिद्रव्यसङ्क्षेपे । च.सू.१अ. । [ग्रन्थे ।

**द्रव्याभिधानम् ।** क्ली । औषधादीनां नामसं-

**द्राघिष्ठम्** । क्ली । दीर्घरोहिषतृणे । बड़ गन्ध-तृण । रा०नि.व.८ ।

**द्राघिष्ठाख्यः** । पुं । भल्लूके । रा.नि.व.१९ ।

**द्राघः** । त्रि । सुप्ते ।

**द्रापः** । पुं । पङ्के । शब्दार्थकल्प. ।

**द्रावः** । पुं । उच्चतायाम् वै.निघ. ।

**द्रावकम्** । क्ली । सिक्थके । रा.नि.व.१३ । लौहचुम्बके । वै.निघ.। शौद्धौषधविशेषे । महाद्रावकादौ । पुं । प्रस्तरविशेषे । चन्द्रकान्तमणि । मे. रसविशेषे । श.र. ।

**द्रावककन्दः** । पुं । तैलकन्दे । रा.नि.व.७ ।

**द्रावकरम्** । क्ली । श्वेतटङ्कणे । সোহাগা । रा.नि.व.६ ।

**द्रावकवर्गः** । पुं । द्रवकरद्रव्यपञ्चके । यथा—"गुञ्जाटङ्कणमध्वाज्यगुडा द्रावकपञ्चकाः ।" र.सा.सं. । [ना । र.मा. ।

**द्रावण(फल)म्** । क्ली । कतकफले । निर्म्म-

**द्रावणकः** । पुं । टङ्कणक्षारे । वै.निघ. ।

**द्राविका** । स्त्री । लालायाम् । লাল, থুতু । श.र. ।

**द्राविड़ः (कः)** । पुं । वेधमुख्ये । जिय़ৎषष्ठी । अम. । मे. । गन्धशट्याम् । प.मु. । आमहरिद्रायाम् । কাঁচা হলুদ । श.र. । क्ली । विड़लवणे । रा.नि.व.६ ।

**द्राविड़भूतिकः (मिजः)** । पुं । आमहरिद्रायाम् । কাঁচা হরিদ্রা । श.र. ।

**द्राविड़ी** । स्त्री । सूक्ष्मैलायाम् । प.मु. । भा.म. ४भ.सौभाग्यशुण्ठीमोदके । "द्राविड़ीनां पलम् ।" सु.सू.३८अ. ।

**द्राविड़ोद्भवः** । पुं । सुगन्धतृणे । सुगन्धप्रियङ्गौ । (वा) स्त्री । एलायाम् । वै.निघ. ।

**द्राविणः** । पुं । टङ्कणे । সোহাগা । र.सा.सं. ।

**द्राविणी** । स्त्री । काकजङ्घायां, काकमाच्यां । वै.निघ. ।

**द्रावी** (इन्) । पुं । टङ्कणक्षारे । र.सा.सं टङ्कणद्रावीधने । अश्मवेसरे । वै निघ. ।

**द्राक्षा** । स्त्री । (Vitis vinifera.) Dried fruits called Kismis. स्वनामख्यातलतायाम् । কিস্মিস, মনেকা । हिं दाख, आङ्गुर । मं द्राक्षा । तें द्राक्षपौण्डु, द्राक्षचेट्टु । ता.कोडिम-क्किरिप्पञाम् । गुणाः —पक्वा सा सरा शीता चक्षुष्या बृंहणी । अपक्वा स्वल्पगुणा गुर्वी च । अम्ला सा रक्तपित्तकृत् । "द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरुः । स्वादुपाकरसा स्वर्य्या तुवरा सृष्टमूत्रविट् । कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातास्रकामलाः । कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । द्रष्या स्याद्गोस्तनी द्राक्षा गुर्वी च कफपित्तनुत् । अथान्या स्वल्पतरा गोस्तनीसदृशी गुणैः। द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्मास्रपित्तकृत् । द्राक्षा पर्व्वतजा यादृक्तादृशी करमर्द्दिका ॥" भा. द्राक्षाव. । "द्राक्षाफलं मधुरमम्लकषाययुक्तं क्षारेण पित्तमरुतौ कफहारि शीघ्रम् । श्रेष्ठं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्वसनकासविनाशकारि । कषायाम्ला विपाके च द्राक्षा चैव कफे हिता ॥" अत्रि. १७अ. । एतदभावे गाम्भारीफलं ग्राह्यम् । सि.यो. ज्व.चि.पिप्पल्यादौ । वा.सू.१५अ.परूषकादिः । "परूषकं वरा द्राक्षा" । च.द.वा.ज्व.चि. पिप्पल्यादिः । वा.ज्व.चि. द्राक्षादिः । रसालायां । रा.नि.व.२३ ।

**द्राक्षादिः** । पुं । वातज्वरे कषायः । "द्राक्षागुड़ूचीकाश्मर्य्यत्रायमाणाः सशारिवाः । निष्क्वाथ्य सगुड़ं क्वाथम् ··· ।" च.द.वा.ज्व.चि. । अन्य;—द्राक्षाभयापर्पटकाब्दतिक्ताकृतः कषायः पैत्तिकज्वरे प्रलापमूर्च्छाभ्रमघ्नः । च.द.पि.ज्व.चि. ।

**द्राक्षाफलः** । पुं । पियालवृक्षे । वै.निघ. ।

**द्राक्षायणी** । स्त्री । दन्तीवृक्षे । प.मु. ।

**द्राक्षारिष्टः** । पुं । यक्ष्माधिकारे अरिष्टविशेषे । पाठः—"द्राक्षातुलार्द्धं द्विद्रोणे जलस्य विपचेत् सुधीः । पादशेषे कषाये च पूते शीते विनिक्षिपेत् । गुड़स्य द्वितुलां तत्र त्वगेलापत्रकेसरं । प्रियङ्गुमरिचकृष्णा विड़ङ्गेति विचूर्णयेत् । पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत् । समन्ततो भद्रयित्वा पिबेज्जातरसं ततः ॥" भैष. ।

**द्राक्षासम्भूतः** । पुं । द्राक्षासवे । वै.निघ. ।

**द्राक्षासवः** । पुं । द्राक्षाकृतासवे । गुणाः—दीपनी दीपनो हृद्यः बल्यः पित्ताविरोधी विबन्धघ्नः कफघ्नः लघुः स्वल्पमारुतश्च । च.सू.२७अ. ।

**द्राक्षासुरा** । स्त्री । द्राक्षाकृतमद्ये । পোর্ট । च.सू.२७अ. ।

**द्राक्षोत्थः** । पुं । द्राक्षासवे । वै.निघ. ।

**द्रुकिलिमम्** । क्ली । देवदारुणि । प.मु. ।

**द्रु(द्रू)घनः** । पुं । भूमिचम्पकवृक्षे । ভূঁই চাঁপা । श.च. ।

**द्रु(द्रू)णः** । पुं । भ्रमरे । वृश्चिके । धूम्याटपक्षिणि । ফিঙে । हे.च. । मधुमक्षिकायां । वै.निघ. ।

**द्रुणी** । स्त्री । कर्णजलायुकायाम् । কানকোটারি । कच्छपिकायाम् । अम.भ. ।

**द्रुतः** । पुं । हरिणे । शशके । वृक्षे । धरणि. ।

**द्रुतमांसम्** । क्ली । शशादिहरिणादयः स्वयं द्रुतगमनात् द्रुतसंज्ञकाः स्मृताः, तेषां मांसे । गुणाः—पथ्यं बल्यं लघु वीर्यकारि च । रा.नि. व.१७ ।

**द्रुनखः** । पुं । कण्टके । কাঁটা । त्रिका. ।

**द्रुपदी** । स्त्री । वन्दाके । মান্দড়া । वै.निघ. ।

**द्रुमः** । पुं । वृक्षे । त्रिका. । कुटजवृक्षे । आरग्वधवृक्षे । च.द.कुष्ठ-चि.गण्डीराद्यतैले । पारिजातवृक्षे । मे. ।

**द्रुमकिलः** । पुं । देवदारुवृक्षे । वै.निघ. ।

**द्रुमगः** । पुं । स्वल्पजलदेशे । वै.निघ. ।

**द्रुमत्वक्** । स्त्री । कुटजवल्कले । च द.कुष्ठ-चि. ।

**द्रुमध्वजः** । पुं । तालवृक्षे । वै.निघ. ।

**द्रुमनखः** । पुं । कण्टके । हारा. । पारिजातवृक्षे । मे. । [আটা । वै.निघ. ।

**द्रुमनिर्यासः** । पुं । तरुनिर्य्यूहे । গাছের

**द्रुमरः** । पुं । कण्टके । हारा. ।

**द्रुमव्याधिः** । पुं । लाक्षायाम् । रा.नि.व.६ ।

**द्रुमाश्रयः** । पुं । वानरे । वै.निघ. ।

**द्रुमश्रेष्ठः** । पुं । तालवृक्षे । वै.निघ. ।

**द्रुमामयः** । पुं । लाक्षायाम् । प.मु. ।

**द्रुमारिः** । पुं । हस्तिनि । वै.निघ. ।

**द्रुमारुहा** । स्त्री । श्वेतवर्णमुसल्यां । रा.नि.व.३ ।

**द्रुमाश्रयः** । पुं । सरटे । গিরগিটে । रा.नि. व.१९ ।

**द्रुमेश्वरः** । पुं । तालवृक्षे । रा.नि.व.१२ ।

**द्रुमोत्पलः** । पुं । (Abroma augusta.) कर्णिकारवृक्षे । ওলট্ কম্বল । अम. । ऋतुशूलेहितः ।

**द्रुयवम्** । क्ली । परिमाणे । वै.निघ. । [र. ।

**द्रुसल्लकः** । पुं । पियालवृक्षे । পেয়াশাল । श.

**द्रूः** । स्त्री । स्वर्णे । वै.निघ. ।

**द्रेकः (का)** । पुं,स्त्री । निम्बविशेषे । ঘোড়ানিম্ । हिं बकायननिम्ब । भा,म.४भ.महाभल्लातके । घोकड़ा इति ख्याते क्षुपे । च.द.दार्व्वादिकषाये । "सरलाद्रेकामृतायासकैः ।"

**द्रोणः** । पुं । ४०० धनुःपरिमितजलाशये । काकविशेषे । দাঁড় কাক, ডোম কাক । मे. । द्रोणपुष्पवृक्षे । ঘলঘসে । वृश्चिके । रा.नि.व.१९ । पुं,क्ली । आढकमाने । ৮ শের । खारीषोड़शांशे । लीलावत्यां । आढकचतुष्टये (३२ श.) । "चतुर्भिराढकैर्द्रोणः ।" प.म.१ख. । क्ली । हरिचन्दने । द्रोणीलवणे । वै.निघ. । [কাক । अम. ।

**द्रोणकाकः** । पुं । तन्नामककाके । ডোম

**द्रोणकुतुम्बका** । स्त्री । देवकुम्भायाम् । देवद्रोण्यां । বড় ঘলঘসাবিশেষ । वै.निघ. ।

**द्रोणगन्धिका** । स्त्री । रास्नायाम् । जटा. ।

**द्रोणपर्णी** । स्त्री । द्रोणपुष्प्याम् ।

**द्रोणपुष्पिका** । स्त्री । द्रोणपुष्प्याम् । ঘলঘসা । वै.निघ. ।

**द्रोणपुष्पी** । स्त्री । घलघसा इलकषा दण्डकलस इति ख्याते सेवतपुष्पक्षुपे । द्रोणपुष्पीति भाषा । र.मा. । मं कुंबा । कं तुंबे । हिं गुम्मा, गूमा । तें एनुगतुम्मि । गुणाः—कटूष्णा रूक्षा वातकफघ्नी अग्निमान्द्यकरी पथ्या च । रा.नि.व.५ । च.द.हि यो,काम,चि.पथ्यनि । "अञ्जनं कामलानां द्रोणपुष्पीरसः शुभः । द्रोणपुष्पीरसोऽप्येवं निहन्ति विषमज्वरान् ।" आर्कं.म.ख.१प. । क-

फाग्न:कामलाक्रमिशोथघ्नी। राज.। द्रोणपुष्पी गु ण: स्वादुपाका कट्वी भेदिनी कफामकामलाशोथ-तमकश्वासक्रमिघ्नी च। भा.।

**द्रोणपुष्पीदलम्।** क्ली। द्रोणपुष्पीपत्रे। घलघसेर पाता। गुणा:—स्वादु रुच्यं गुरु पित्त-करं भेदनं कामलाशोथमेहज्वरहरं कटु च। भा. पू.१म.शा.व.।

**द्रोणा।** स्त्री। द्रोणपुष्प्याम्। घलघसा। भा. वा.उ२६अ.। इन्दीवराख्यलतायाम्। वै.निघ.।

**द्रोणि:।** स्त्री। सूर्पद्वयमाने। १२८ श.। प.प्र. १ख.।

**द्रोणिका।** स्त्री। नील्याम्। श.र.। [व.६।

**द्रोणि(णी)जम्।** क्ली। द्रोणीलवणे। रा.नि.

**द्रोणिनी।** स्त्री। उत्तरिण्याम्। वै.निघ.२भ. मञ्जिष्ठाद्यघृते।

**द्रोणी।** स्त्री। इन्द्रविर्भट्यां, इन्दीवरायाम्। रा.नि.व.३। द्रोणीलवणे। श.र.। नील्याम्। सू-र्पद्वयमाने। १२८ श.। "सूर्पाभ्याञ्च भवेद्द्रोणी।" प.प्र.१ख.। [छ द्वारा।

**द्रोणीदल:।** पुं। केतकीपुष्पवृक्षे। केया गा-

**द्रोणील:।** पुं। केतकवृक्षे। वै.निघ.।

**द्रोणीलवणम्।** क्ली। वारिजलवणे। मं द्रो-णीचेमौटा कं द्रोणीय उपु। गुणा:—भेदनं स्निग्धं शूलघ्नं नातिपित्तलं पाके नात्युष्ण। रा.नि.व.६।

**द्रोणेयम्**
**द्रौणम्** } क्ली। वारिजलवणे। रा.नि.व.६।

**द्वन्द्व(न्द्व)म्।** क्ली। मिथुने। युगले। सुखदु:-खादौ। पुं। रोगभेदे। श.र.।

**द्वन्द्वग:।** पुं। चक्रवाके। वै.निघ.।

**द्वन्द्वगद:।** पुं। द्वन्द्वजरोगे।

**द्वन्द्वचर: (चारी)।** पुं। चक्रवाकपक्षिणि। वै.च.। त्रिका.। [वै.निघ.।

**द्वन्द्वचरीसहाय:।** पुं। चक्रवाकपक्षिणि।

**द्वन्द्वज: (द्वोपोत्थ:)।** पुं। विषमज्वरे। रा. नि.व.२०। द्विदोषरोगे। त्रि। द्विदोषोत्थे। मा. ज्व.नि.।

**द्वयाग्नि:।** पुं। चित्रकवृक्षे। चिता। श.च.।

**द्वादशपत्रिका।** स्त्री। शतावर्याख्यक्षुपे। गु-ल्फा गाछ, मउरी।

**द्वादशाङ्गक्वाथ:।** पुं। सन्निपातज्वरे कषा-य:। दशमूलीकषायस्तु पिप्पलीपौष्करान्वित:। स-न्निपातज्वरे देय: श्वासकाससमन्विते॥ भा.म.१भ.।

**द्वादशाङ्गुल:।** पुं। वितस्तौ। विगत्। अम.।

**द्वादशात्मा।** पुं। सूर्ये। अर्कवृक्षे। अम.।

**द्वादशायसक:।** पुं। जलदस्राधिकारे रस:। त्रिनेत्राख्यरस एव। रस.र.। See त्रिनेत्ररस: वातरक्ते।

**द्वादशायु:।** पुं। कुक्कुरे। श.मा.।

**द्वारम्।** क्ली। उपाये। निर्गमे। त्रिका.।

**द्वारका।** स्त्री। कार्पासाम्। वै.निघ.।

**द्वारदारु:।** पुं। शाकवृक्षे। वै.निघ.। भूमी-सहवृक्षे। भा.।

**द्वारवलिभुक्।** पुं। काकविशेषे। त्रिका.।

**द्विक:।** पुं। काके। त्रिका.। चक्रवाके। मे.।

**द्विककार:।** पुं। काके। श.र.।

**द्विककुत,द्विकपृष्ठ:।** पुं। उष्ट्रे। वै.च.।

**द्विकाकोली।** स्त्री। काकोलीक्षीरकाको-ल्यो:। वा.उ.२अ.।

**द्विखुरी (रन्)।** पुं। गोखुरवत् द्विधाविभक्तखु-रायुक्तजन्तौ। "द्विखुरं गोखुराकारखुरैर्मिथ्याविघट्ट-ष:। अथवा गोवक्त्रो मुखैर्निम्मलैस्तु निर्द्दिष्ट:॥" ज.द.२भ.। [यी.ऋमिमा.चि.।

**द्विचित्रकम्।** क्ली। श्वेतरक्तचित्रकयो:। वि.

**द्विज:।** पुं। दन्ते। रा.नि.व.१८।२१। तुम्बुरु-वृक्षे। रा.नि.व.११। ब्राह्मणे। क्षत्रिये। वैश्ये। मे.। सर्पे। अण्डजे। अम.।

**द्विजकुत्सित:।** पुं। वहुवारवृक्षे। चालिता गाछ। रा.नि.व.११।

**द्विजकेतु:।** पुं। अम्लीरविशेषे। वै.निघ.।

**द्विजन्मा (न्मन्)।** पुं। पक्षिणि। दन्ते। श. र.। पाद्धेमन्ये। मौक्तिके। अण्डजे। वै.निघ.।

द्विजप्रिया । स्त्री । सोमलतायां । रा.नि.व.३।

द्विजभक्तः । त्रि । वैद्ये भक्तिमति (रोगिणि)। वै.निघ. ।

द्विजयष्टिः (ष्टिका) । स्त्री । भार्ग्याम् । बामुनहाटी । वै.निघ २भ.वा.व्या.चि. ।

द्विजश्रमः । पुं । राजमाषे । बरबटी । श्र.च. ।

द्विजस्नेहः । पुं । पलाशवृक्षे । वै.निघ. ।

द्विजा । स्त्री । रेणुकायां । रेणुक । रा.नि.व. ६ । भार्ग्याम् । मे. । जीवान् इति ख्याते गन्धद्रव्ये । वै.निघ. । पालक्यशाके । श्र.च. ।

द्विजाङ्गिका (ङ्गी) । स्त्री । कटुकायाम् । कट्की । रा.नि.व.६ । [मे. ।

द्विजातिः । पुं । दन्ते । भस्त्रजे । पक्षिणि ।

द्विजायनी । स्त्री । यज्ञोपवीते । त्रिका.।

द्विजालयः । पुं । वृक्षकोटरे । श्र.च. ।

द्विजिह्वः । पुं । सर्पे । भम.। अधिजिह्वनामककण्ठरोगे । आलजिबेर रोग । सु.नि.१६अ. ।

द्विजेन्द्रकः । पुं । निम्बूवृक्षे । लेबुर गाछ । वै.निघ. । [टी.हेमा.सुस्तकादिः ।

द्वितिक्ता । स्त्री । कटुक्यां, करञ्जिकायाञ्च । वा.

द्वितीयत्रिफला । स्त्री । द्राक्षाखर्ज्जूरकाश्मरीफलेषु । किस्मिस, खेजुर, गाभार फल । वै.निघ. ।

द्वितीयाभा । स्त्री । (Curcuma zanthorrhiza.) वृक्षविशेषे । दारुहरिद्रायाम्। श्र च.।

द्विदलः । पुं । अश्मन्तकवृक्षे । आपटा इति ख्याते । आबुटा । वै.निघ. । क्ली । द्विदलमात्रे । तद्गुणाः—"यूषः कृतो द्विदलानामष्टादशगुणोऽस्ति । स एव त्रिकटुकः सर्पिःसैन्धवसंयुतः । भवेद्गुरुतरश्चैव कृतमित्येव तं विदुः । त्रिवृद्द्रव्यैर्विनासिद्धमकृतन्तु स्वयं वदेत् । फलाम्लधान्यतक्रैश्च कृता गुरुतरा मताः । वातघ्ना रुचिदाः प्रोक्ताः पूर्वशाकविशारदैः ॥" द्रव्यगुणः ।

द्विधागतिः । पुं । शिशुमारे । शुशोक । वै.निघ. । कुम्भीरे । कुमीर । हे.च. ।

द्विधातुः । त्रि । द्विप्रकृतिके ।

द्विधात्मकम् । क्ली । जातीफले । वै.निघ. ।

द्विधालेख्यः । पुं । हिन्तालवृक्षे । हेंताल गाछ । रा.नि.व.८ । [र.मा. ।

द्विपः । पुं । हस्तिनि । प.मु. । नागकेसरवृक्षे ।

द्विपकणः । पुं । गजकन्दे । रा.नि.व.७ ।

द्विपदः । पुं । मनुष्ये । पक्षिणि । प्रयसार: ।

द्विपबला । स्त्री । नागबलायां । वै.निघ.वा. व्या.चि.शतावरीतैले ।

द्विपमदः । पुं । करिमदजले ।

द्विपर्णी । स्त्री । शालपर्णी पृश्निपर्णी चेति द्वये । शालपानि, चाकुलिया । च.द.यह.चि. ।

द्विपाख्यः । पुं । नागकेशरवृक्षे । प.मु. ।

द्विपादिकः । पुं । नागकेशरवृक्षे । प.मु. ।

द्विपायी (इन्) । पुं । करिणि । हारा. ।

द्विपिनखः । पुं । व्याघ्रनखे । नखाविशेष । रा.नि.व.१२ ।

द्विपी (इन्) । पुं । चित्रकभेदे । च.चि.८अ. ।

द्विपुटः । पुं । (Impotiens Balsamina.) पुष्पक्षुपविशेषे । दोपाटी । श्र.चि. ।

द्विपुटी । स्त्री । मल्लिकायां । मे. ।

द्विपुनर्नवम् । क्ली । शुक्ललोहितलताभेदेन पुनर्नवाद्वये । श्वेतपुन्या, गादापुन्या । सि.यो. काम.चि.व्योषाद्यघृते । "त्रिफला द्विपुनर्नवम् ।"

द्विब्राह्मी । स्त्री । ह्रस्वदीर्घब्राह्मीद्वये । छोट ओ बड़ ब्राह्मी । सु.श्रा.१०अ. ।

द्विमाषम् । क्ली । मुद्गपर्णीमाषपर्ण्यौः । मुगानी ओ माषाणी । च.द.उन्मा.चि.महाकल्याणघृते ।

द्विमुखः (खाहिः) । पुं । द्विमुखसर्पविशेषे, राजसर्पे । राजसाप, दुमुखो साप, शाँखिनी साप । वम्. दुंदुल । इला. । रस.र.विष.चि. । त्रि । मुखद्वययुक्ते ।

द्विमुखा । स्त्री । भारिकायां । गाड़ू । जलौकायाम् । जोँक । इला. ।

द्विमुखोरगः । पुं । द्विमुखसर्पे । जटा. ।

द्विरजनी । स्त्री । हरिद्रायां दारुहरिद्रायाञ्च ।

हरिद्रा; दारुहरिद्रा। वि.यी.काम.चि.श्वीपा-यपूते।

**द्विरदः** । पुं । हस्तिनि । प.मु. ।

**द्विरदपिप्पली** । स्त्री । गजपिप्पल्याम् । वै. निघ.२भ.वा.व्या.चि.द्वात्रिंशकगुग्गुलौ ।

**द्विरदान्तः (कः)** । पुं । सिंहे । रा.नि.व. १९ । [स । वै.निघ. ।

**द्विरदारातिः** । पुं । शरभे । सिंह विशे-

**द्विरदाशनः** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**द्विरर्व्वुदम्** । क्ली । अर्व्वुदभेदे । तस्य लक्षणं —"यद्दन्यजातं युगपत् क्रमाद्वा द्विरर्व्वुदं तच्च अ-वेदसाध्यम् ।" सु.नि.११अ. ।

**द्विरसनः** । पुं । सर्पे । त्रिका. ।

**द्विरापः** । पुं । हस्तिनि । श.मा. ।

**द्विरेताः** । पुं । गर्द्दभे । वै.निघ. । स्त्रीपुंचिह्न-पुंसके । "वीजात्समांशादुपतप्तवीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः ।" च.शा.२अ. ।

**द्विरेफगणसद्म(द्मि)ता** । स्त्री । पुष्पवृक्ष-भेदे । वन शेंउती । वै.निघ. ।

**द्विलम्बकः** । पुं । दुश्चर्म्मणि । हे.च. ।

**द्विवर्षा (र्षिका)** । स्त्री । द्विहायन्यां गवि । अम. । हे.च. ।

**द्विवार्त्ताकी** । स्त्री । वृहतीद्वये । वृहती, क-ण्टिकारी । भा.म.४भ.बाल चि. । "द्विवार्त्ताकी-फलरसम् ।"

**द्विविषम्** । क्ली । पाण्डुकृष्णातिविषायां । श्वेत ও कृष्ण आतइच । वै.निघ.२भ.वा.व्या.चि. ।

**द्विवृन्तः** । पुं । मक्षरवकवृक्षे । मेंदी गाछ । प.मु. ।

**द्विवृहती** । स्त्री । कण्टकारिकावृहत्यौः । क-ण्टिकारी ও विरुती । भा.म.१५अ. । "द्विवृह-त्यौ द्विकरञ्जयवादयम् ।"

**द्विशफः** । वि । विखुरपशुमात्रे । "गौरजो म-हिषः कृष्णः शूकरो गवयो रुरुः । द्विशफाः पश-वश्चेमे अविरुष्ट्रश्च.......।" भागवतम् ।

**द्विशृङ्गिका** । स्त्री । मेषशृङ्ग्याम् । मेड़ाशि-ङ्गी । वै.निघ. ।

**द्विशृङ्गी (इन्)** । पुं । मत्स्यविशेषे । शिङ्गी मा-छ । वै.निघ. ।

**द्विषा** । स्त्री । एलायाम् । वै.निघ. ।

**द्विष्टम्** । क्ली । ताम्रे । श.टी.सा. ।

**द्विस्विन्नाम्नम्** । क्ली । सिद्धतण्डुले । सिद्ध चाउल । पुराणम् ।

**द्विहृदया** । स्त्री । गर्भवत्यां स्त्रियां । वै.निघ. ।

**द्विक्षारम्** । क्ली । यवसर्ज्जिक्षारयोः । वि.मी. अग्निमा.चि. ।

**द्विक्षीरम्** । क्ली । गव्याजदुग्धयोः । गाईदुग्ध ও छागदुग्ध । च.द.यक्ष्म-चि.सर्पिर्गुडे ।

**द्वीपः** । पुं । ककोलवृक्षे । वै.निघ. । क्ली । व्या-घ्रचर्म्मणि । भ. । [नि.व.१२ ।

**द्वीपकर्पूरः (जः)** । पुं । चीनकर्पूरे । रा.

**द्वीपखर्ज्जूरम् द्वीपजम्** । क्ली । महापारेवते, द्वीपान्तर-खर्ज्जूरे । रा.नि.व.११ ।

**द्वीप(पि)शत्रुः** । पुं । शतावर्य्याम् । रा.नि.व. ४ । जटा. ।

**द्वीपसम्भवः** । पुं । ककोलवृक्षे । कांकला । जीरके । (वा) स्त्री । महाखर्ज्जूरवृक्षे । वै.निघ. ।

**द्वीपान्तरवचा** । स्त्री । चोपचिनीति ख्याते मूले । गुणाः—"द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशो-धिनी । वातव्याधीनपस्मारमुन्मादं तनुवेदनाम् । व्यपोहति विशेषेण फिरङ्गामयनाशिनी ।" भा. ।

**द्वीपिका** । स्त्री । शतमूल्याम् । रा.नि.व.४ ।

**द्वीपिनखः** । पुं । व्याघ्रनखे । नखी । वै.निघ. ।

**द्वीपिनी** । स्त्री । वटपत्रपाषाणभेदे । वै.निघ. ।

**द्वीपिपलाशः** । पुं । हस्तिकर्णपलाशे । डा. सू.१५अ.मुष्ककादिः । "मुष्ककस्नुकपलाशद्वीपिप-लाशधवशिंशपा ।" [रा.नि.व.६।१९ ।

**द्वीपी (इन्)** । पुं । व्याघ्रविशेषे । चित्रकव्याघ्रे ।

**द्वीप्यः** । पुं । काके । क्ली । काकोली । वै.निघ. ।

**द्वीप्या** । स्त्री । शतावर्य्याम् । रा.नि.व.४ । पि-ण्डीखर्ज्जूरवृक्षे । रा.नि.व.११ ।

...वः । पुं । मत्स्याविशेषे । रस.र.क्षीरी.चि. ।

...थम् । क्ली । कदलीवे । रा.नि.व.१२१

...मातकः । पुं । नदीकच्छानुपालिते देशे । रा.नि.व.२ ।

...पर्णीया । स्त्री । मायवल्लीविशेषे । क्षीरवल्ली इतीय इति क्षीरसमुद्रदेशे ख्याता । क्षेत्रपर्णीया इति मूलकामरे पाठः । रा.नि.व.११ ।

...म्बरः । पुं । जातिद्वयसम्भूते सर्पे । गो आँमला साप । सु.कल्प.टी. ।

...म्रम् । क्ली । ताम्रे । अम. । [दि । मा.नि. ।

...हिकः (कीनः) । पुं । एकदिनान्तरज्व-

---

# ध

धटः (कः) । पुं । धवहक्षे । धाइया गाछ । वै.निघ. । तुलामाने । तराजू । धाड़ा । अम. । १४ वल्लमाने । ४२ रति । लीलावती ।

धटी । स्त्री । वल्कले । वै.निघ. । जीर्णवस्त्रखण्डे । धड़ि । मे. ।

धत्तूरः । पुं । धुत्तूरहक्षे । रा.नि.व.१० ।

धनम् । पुं, क्ली । मरिचे । अर्थे । वै.निघ. । स्नेहपात्रे । श.र. ।

धनकम् । क्ली । धान्यके । धनिया । वै.निघ. २भ.सन्निज्व.चि.गुडूच्यादिः ।

धनच्छः (च्छूः) । पुं, स्त्री । पक्षिविशेषे । धानस पाखी, कर्कटिया पाखी । चिका. ।

धनञ्जयः । पुं । अर्जुनहक्षे । रा.नि.व.९ । वै.निघ.२भ.अजी.चि.पञ्चाग्निचूर्णे । अग्नौ । अम. । चित्रकहक्षे । र.मा. । [ठाल्लरात् ।

धनदः । पुं । हिज्जलहक्षे । रा.नि.व.८ । पा-

धनदाक्षी । स्त्री । पाटलहक्षे । रा.नि.व.१० । लताकरञ्जे । रा.नि.व.८ । [चिका. । करा. ।

धनपिशाची (चिका) । स्त्री । तृष्णायां ।

धनप्रिया । स्त्री । काकजम्बूहक्षे । वन जाम । रा.नि.व.११ । [वै.निघ. ।

धनसूः । पुं । धूम्याटपक्षिणि । फिङे पाखि ।

धनख(स्व)कः । पुं । गोक्षुरकहक्षे । श.च. ।

धनहरः । पुं । ग्रन्थिपर्णहक्षे । गँठेला । पारसीकयमान्याम् । वै.निघ. ।

धनह(हा)री । स्त्री । पारसीकयमान्याम् । ग्रन्थिपर्णभेदे । अम. ।

धनहृत् । पुं । चण्डालकन्दे । वै.निघ. ।

धना (नी) । स्त्री । आर्द्रधान्यके । वै.निघ. । धान्यके । वै.निघ.२भ.वा.व्या.चि.षड्शीतिगुग्गुलौ । अत्रि.२स्थान.२अ. ।

धनिकः । पुं । धान्यकक्षुपे । धने गाछ । रा. नि.व.६ । क्ली । धान्यके । धने । च.द. सि.ग्र. सन्निपातज्व.अष्टाङ्गकषाये । "तिक्तेन्द्रबीजधनिकै" ।

धनिका । स्त्री । धान्यके । धने । अत्रि.२स्थान. । प्रियङ्गुलतायाम् । श.च. । [धनिया । श.र. ।

धनीयकम् । क्ली । आर्द्रधान्यके । धान्यके ।

धनुः (स्) । पुं । भल्लातकहक्षे । चारहक्षे । पियाशाल । मे. । [११ । अम. ।

धनुःप(ष्प)टः । पुं । प्रियालहक्षे । रा.नि.व.

धनुःशाखा । स्त्री । मूर्व्वायां । मुर्गा । श.च. ।

धनुःश्रेणी । स्त्री । मूर्व्वायाम् । प.मु. । महेन्द्रवारुण्यां । बड़ माकाल, राखालशशा । रा.नि. व.३ ।

धनुर्गुणा । स्त्री । मूर्व्वायाम् । श.च. ।

धनुर्द्रुमः । पुं । वंशे । बाँश । रा.नि.व.७ ।

धनुर्माला । स्त्री । मूर्व्वायाम् । श.च. ।

धनुर्य्यासः । पुं । दुरालभायाम् । प.मु. ।

धनुर्लता । स्त्री । सोमवल्लयाम् । सोमलता । रा.नि.व.३ ।

धनुर्वातः । पुं । वातव्याधिविशेषे. यत्र सर्व्वसन्धिषु वेदनाविशेष भवति । "अनिच्छन्त्यास्तां यस्तु उपभुङ्क्ते परस्त्रियं । बलादाक्रम्य स नरः सर्व्वसन्धिषु वेदनां । तीव्रामप्रीत्यर्त्तिमान् धनुर्वातयुतो भवेत् ॥" इति कर्म्मविपाकः ।

धनुर्वीजः । पुं । भल्लातकहक्षे । रा.नि.व.११ ।

**धनुर्वृक्षः** । पुं । धमन्वक्षे । धामनि गाछ । र.मा. । रा.नि.व.९ । वंशे । भल्लातकवृक्षे । अश्वत्थवृक्षे । रा.नि.व.११ ।

**धनुषः** । पुं । कुक्कुरे । वै.निघ. ।

**धनुष्यः** । पुं । वंशे । बाँश । रा.नि.व.७ ।

**धनुस्तम्भः** । पुं । वातव्याधिविशेषे । धनुष्टङ्कार । स बाह्याभ्यन्तरायामभेदाद्द्विविधः । लक्षणं —"धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसंज्ञितः । विवर्णवक्त्रवदनः स्रस्ताङ्गो नष्टचेतनः । प्रस्विद्यंश्च धनुस्तम्भी दशरात्रं न जीवति ॥" मा.नि. । [भ.।

**धनेयकम्** । क्ली । धन्याके । धनियां । भ.टी.

**धनैषणा** । स्त्री । एषणासु नरस्य द्वितीयैषणायाम् । धनप्रार्थना । "प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति । तदुपकरणानि च कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात् ।" च.सू.११अ. ।

**धन्यः** । पुं । अश्वकर्णशाले । लता शाल । रा.नि.व.९ । क्ली । द्रव्ये । वै.निघ. कैवर्त्तमुस्तायां । ज.द.१२अ. ।

**धन्यवृक्षः** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**धन्या** । स्त्री । धन्याके । धने । हे.च. । उपमातरि । वै.निघ. । आमलक्याम् । मे. । निर्जलप्रदेशे । वै.निघ. ।

**धन्याकम्** । क्ली । (Coriandrum sativum.) Coriander plant. स्वनामख्यातपत्रद्रव्ये । प.मु. । धने । हिं धनिया । तें कोत्तिमिरचेट्टु, धनियलु । ता. कोटमल्लि । च.द.सन्निपातज्व.चि.नागरादिः । "धन्याकं वृहतीद्वयम् ।" पि.ज्व.चि. । "व्युषितं धन्याकजलम् ।" पि.श्लेष्मज्व.चि.गुडूच्यादिः । गुणाः—तुवरं स्निग्धम् अवृष्यं मूत्रलं लघु तिक्तं कटूष्णवीर्य्यं दीपनं पाचनं ज्वरघ्नं रोचकं ग्राहि स्वादुपाकं त्रिदोषघ्नं तृष्णादाहवमिश्वासकासकार्श्यक्रिमिघ्नञ्च । आर्द्रं तत् तद्गुणसम्पन्नं स्वादु विशेषतः पित्तघ्नञ्च । भा.पू.१भ. । मद.व.२ ।

**धन्वः** । पुं । दुरालभायाम् । वै.निघ. ।

**धन्वकः** । पुं । धामनवृक्षे । च.द.मेह.चि. । "पाठार्जुनधन्वकानां ।"

**धन्वङ्गः** । पुं । धामनवृक्षे । धामना गाछ । गुणाः—"धन्वङ्गः कफपित्तास्रकासघ्नस्तुवरो लघुः । बृंहणो बलकृद्रुक्षः सन्धिकृद्वातरोपणः ॥" भा.म.१भ.प्रमे.चि. । वंशे । वै.निघ. ।

**धन्वचारी** । त्रि । निर्जलदेशचारिणि । वा.चि.७अ. ।

**धन्वतरुः** । पुं । क्षीरवल्ल्याम् । वै.निघ. ।

**धन्वदुर्गम्** । क्ली । निर्जलदेशे । पुराणम् ।

**धन्वनः** । पुं । धामनवृक्षे । धामना गाछ । र.मा. । हिं धामिनी । मं धमान । कों उदुवे । गुणाः—कटुः उष्णः कषायः कफघ्नः दाहशोषकरः संग्राही कण्ठदोषघ्नश्च । रा.नि.व.९ । एतत्फलं कषायं हिमं स्वादु वातकफघ्नञ्च । सु.सू.४६अ. ।

**धन्वन्तरिः** । पुं । वैद्ये । चिकित्सायुर्वेदप्रणेतरि देवतावैद्ये । तत्प्रादुर्भावः—"एकदा देवराजस्य दृष्टिर्निपतिता भुवि । तत्र तेन नरा दृष्टा व्याधिभिः परिपीडिताः ॥ तान् दृष्ट्वा हृदयं तस्य दयया परिपीडितम् । दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ॥ धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते । योग्यो भवसि भूतानामुपकारपरो भव ॥ उपकाराय लोकानां केन किं न कृतम्पुरा । त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ॥ तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव । प्रतीकाराय रोगाणामायुर्वेदम्प्रकाशय ॥ इत्युक्त्वा सुरशार्दूलः सर्व्वभूतहितेच्छया । समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥ अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा । आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ॥ नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ । बाल एव विरक्तोऽभूच्चचार सुमहत्तपः ॥ यत्नेन महता ब्रह्मा तं काशीपुरीमकरोन्नृपम् । ततो धन्वन्तरिर्लोके काशिराजोऽभिधीयते ॥ हिताय देहिनां स्वीया संहिता विहितामुना । अयं विद्यार्थिनो लोकान् संहितामपाठयत् ॥" भा. । चिकित्सादीनकनिदाननिघण्ट्वादिप्रणेतरि । [क्र पृ. ।

**धन्वन्तरिग्रस्ता** । स्त्री । कटुक्यां । कुटकी ।

**धन्वन्तरिघृतम्** । क्ली । धन्वन्तरिकृतघृत-विशेषे ।

**धन्वन्तरिभागः** । पुं । औषधकरणार्थं वैद्य-मुष्टौषधादिभागे । शिवरसानां ५० अ. तैलघृत-लेहानां ८ अ. सिद्धवटिकानां ७ अ. । वै.निघ. ।

**धन्वमांसम्** । क्ली । निर्जलदेशपशुमांसे । वा. चि.१२अ. । See जाङ्गलमांसम् ।

**धन्वयवासः (कः)** / **धन्वयासः** } पुं । दुरालभायाम् । रा. नि.व.४ । सि.यो.रक्त-पि.-चि. । "धन्वयवासाः समागराः कथिताः ।" च.सू.४अ. । सि.यो.सन्निपात-ज्व.चि.अष्टादशाङ्ग-कषाये । [चि.१अ. ।

**धन्वा (न्)** । पुं । मरुभूमौ । रा.नि.व.२ । च.

**धन्वामिषम्** । क्ली । जाङ्गलपशुमांसे ।

**धन्वी (इन्)** । पुं । दुरालभायाम् । रा.नि.व.४ । अर्जुनवृक्षे । रा.नि.व.९ । बकुलवृक्षे । रा.नि.व. १० ।

**धमनः** । पुं । नलतृणे । नल गाछ । रा.नि.व. ८ । निम्बवृक्षे । निम् गाछ । रा.नि.व.९ ।

**धमनिः (नी)** । स्त्री । पृश्निपर्ण्याम् । चाकु-ले । रा.नि.व.४ । उत्तरापथप्रसिद्धनलिकानाम गन्धद्रव्ये । भा. । हे.च. । नखीनामगन्धद्रव्ये । हरिद्रायाम् । शिरायाम् । रा.नि.व.१८ । शिरा-विकार एव धमनी । धमन्यश्च नाभिजाः, तत् संख्या च २४ । तेषु दशोर्द्ध्वगाः, दशाधस्तिर्य्यग्गाश्च । तत्रोर्द्ध्वगाः शब्दरूपरसगन्धस्पर्शप्रश्वासोच्छ्वासजृम्भ क्षुतहास्यभाषणरोदनगानादिकर्म्म सम्पादयन्त्यो देहं धारयन्ति । ताश्च हृदयं गत्वा प्रत्येकं शाखात्रयं विस्तारयन्त्यः ३०संख्या भवन्ति । तासु प्रत्येकं द्वे द्वे कृत्वा दश धमन्यो वातपित्तकफशो-णितरसान् वहन्ति । अष्टौ च रूपादीनि गृह्ण-न्ति । शिष्टासु द्वादशसु द्वाभ्यां वाङ्निर्गतिः, द्वा-भ्यां घोषणं, द्वाभ्यां निद्रा, द्वाभ्यां जागरणं, द्वा-भ्याञ्च रक्तवहनं भवति । शिष्टेन स्तनसंश्रितेन द्व-येन च स्त्रियाः स्तन्यवहनं पुंसश्च शुक्रवहनं स्तना-भ्यां भवति । अधोगास्तु दश पित्ताशयमधिगम्य चिंशत्सम्पन्नाः । तासु द्वे द्वे वातपित्तकफरक्तरसा-न्वहतः । शिष्टाभ्यश्च द्वे अन्नमाश्रित्यान्नं वहतः । द्वे जलं वहतः, द्वे वस्तिमाश्रित्य मूत्रं वहतः । द्वाभ्यां पुरुषस्य शुक्रं स्त्रियश्चार्त्तवञ्च प्रादुर्भवति, द्वे च तद्द्वयं निःसारयतः । द्वे स्थूलान्त्रनिबद्धे भूत्वा पुरीषं निःसारयतः । अवशिष्टाश्चाष्टौ तिर्य्यग्गा-मिन्यो स्वेदं निःसारयन्ति । एतास्त्वधोगा धमन्यः पक्वाशयकटिमूत्रपुरीषगुह्यवस्तिमेढ्रपादप्रभृतीन्या-श्रित्य तेषां पीडनं सम्पादयन्ति । तिर्य्यग्गाश्च धम-नीचतुष्टयं प्रत्येकमसंख्यशाखाविभक्तं देहं स्तम्भू-यितं करोति । एतासाञ्च मुखानि प्रतिलोमकूपं संलग्नानि । तेभ्यश्च मुखेभ्यः स्वेदा निर्गच्छन्ति, देहरसो वहिरन्तश्च सन्तर्पयति । अभ्यङ्गादिना च तैलादिवीर्य्यमन्तःशरीरं प्रविश्य त्वक्पाकादिकं करोति तेनैव च शुभाशुभस्पर्शज्ञानं भवति ।" सु. शा.९अ. । भा. ।

**धमिः** । स्त्री । धमन्यां । धमन्याम् । हारा. ।

**धयनम्** । क्ली । पाने । रा.नि.व.२० ।

**धरः** । पुं । कार्पासतूलके । मे. ।

**धरणः** । पुं । तुलायां । स्तने । धान्ये । हे.च. । तण्डुले । वै.निघ. । क्ली । कालिङ्गचतुर्माषमित-माने । प.प्र.१ख. । पलदशमांशे । २४ रक्तिका-माने । रौप्यषोडशमाषे । वै.निघ. ।

**धरणी** । धारणीकन्दे । रा.नि.व.७ । शिरायां । रा.नि.व.१८ । खदिरवृक्षे । रा.नि.व.२३ । पुन-र्नवायाम् । मेदायाम् । वै.निघ. । शाल्मलिवृक्षे । श.च. ।

**धरणीकन्दः** । पुं । धारणीकन्दे । रा.नि.व.७ ।

**धरणीधरः** । पुं । पर्व्वते । कच्छपे । रा.नि. व.१९ ।

**धरणीबन्धः** । पुं । अरिष्टबन्धने । सर्पादिदंश-बन्धनविशेषे । स शाखादष्टस्य दंशदेशाच्चतुरङ्गुले न्याय्यः । यदाह वाभटः—"दंशस्योपरि बध्नीया-दरिष्टां चतुरङ्गुले । क्षौमादिभिर्वेणिकया सिद्धैर्म-न्त्रैश्च मन्त्रवित् ॥" च.द.विष.चि. ।

**धरा** । स्त्री । शिरायाम् । नाड्याम् । रा.नि.व. १८ । वसायाम् । गर्भाशये । मे. ।

**धराकदम्बः (कः)** । पुं । कदम्बवृक्षे । हारा. ।

**धराङ्कुरः** । पुं । भूच्छत्राके । वै.निघ. ।

**धराकुष्माण्डः** । पुं । भूमिकुष्माण्डे । भूँइ कुमड़ा । चि.क.क.क्षीरी.चि. ।

**धरिमा** (न्) । पुं । तुलायाम् । তরাজু । श्र-करे । वै.निघ. ।

**धवः** । पुं । नले । मे. ।

**धर्त्तूरः** । पुं । शुक्लधुस्तूरे । वै.निघ. ।

**धर्म्मः** । पुं । स्वभावे । आचारे । गुणे । मे. ।

**धर्म्मघ्नः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मणः** । पुं । धमन्वृक्षे । धामना गाछ । र.मा. । सर्पभेदे । ঢেমনা সাপ । मे. ।

**धर्म्मद्वेषी** (षिन्) । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मपत्तनम्** । क्ली । मरिचे । रा.नि.व.६ ।

**धर्म्मपत्रः** । पुं, क्ली । उदुम्बरवृक्षे । श.च. ।

**धर्म्मवृक्षः** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ ।

**धर्म्मसूः** । पुं । धूम्याटपक्षिणि । श.र. ।

**धर्म्मिणी** । स्त्री । रेणुकायाम् । রেণুক । रा.नि.व.६ । [আঁকোড় । श.च. ।

**धलण्डः (कः)** । पुं । स्वनामख्यातवृक्षे । धला

**धर्षः (र्षितम्)** । पुं, क्ली । मैथुने । त्रिका. । आद्यो ।

**धवः** । पुं । (Anogeissus latifolia. Syn. Conocarpus latifolia.) स्वनामख्यातवृक्षे । धाओया गाछ । र.मा. । मं धावोड़ा । कं दिण्डि-वल । तें नारिनचेट्टु । गुणाः—कटुः कषायः कफघ्नः वातघ्नः पित्तकोपनः रुच्यः दीपनश्च । राज. । "धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥" भा. । अन्यच्च —"धवः कषायः कटुकः कफघ्नोऽनिलनाशनः । पित्तप्रकोपनो रुच्यो विशेषो दीपनः परः ॥" फलमीषन्मधुरम् । रा.नि.व.९ । काके । त्रिका. । मनुष्ये । अम. । खदिरे । र.सा.सं.मधुमयखौड़े ।

**धवनी** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । वै.निघ. ।

**धवलः** । पुं । धववृक्षे । धाओया गाछ । रा.नि.व.९ । शङ्खे । चीनकर्पूरे । रा.नि.व.१२ । धातकीवृक्षे । वै.निघ. । क्ली । श्वेतमरिचे । रा.नि.व.६ । त्रि । शुक्ले । सुन्दरे । त्रिका. ।

**धवलपक्षः (क्षी (क्षिन्))** । पुं । हंसे । रा.नि.व.१९ । [পারুল । रा.नि.व.१० ।

**धवलपाटली** । स्त्री । शुक्लपाटल्याम् । শ্বেত

**धवलमृत्तिका** । स्त्री । खटिकायाम् । খড়ি । रा.नि.व.१३ ।

**धवलयावनालः** । पुं । श्वेतवर्णयावनालवृक्षे । शादा जनार । मं श्वेतजुवारी । कं बिलियजोल । अयं शिम्बीधान्ये वर्त्तते । गुणाः—मेध्यः बल्यः त्रिदोषघ्नः हृद्यः वह्निप्रदः शर्म्मोघ्नः पथ्यः गुल्मव्रणघ्नश्च । रा.नि.व.१६ ।

**धवलशारिवा** । स्त्री । शुक्लशारिवायाम् । অনন্তমূল । वै.निघ. ।

**धवला** । स्त्री । श्वेतशारिवायाम् । See अनन्ता श्वेतसारिवा च । भा.पू.१भ. । गवि । गाई गरु । त्रिका. । वचायाम् । श्वेतापराजितायाम् । र.त्रि. पापरोगान्तकरसे ।

**धवली** । स्त्री । शुक्लगवि । अम. ।

**धवलेक्षुः** । पुं । श्वेतेक्षौ । रा.नि.व.१४ ।

**धवलोत्पलम्** । क्ली । कुमुदपुष्पे । নালফুল, হালা ফুল । रा.नि.व.१० ।

**धवित्रम्** । क्ली । मृगचर्म्मनिर्म्मितव्यजने । अम. ।

**धाकः** । पुं । वृषे । क्ली । अन्ने । उणा. ।

**धातकी** । स्त्री । (Woodfordia floribunda. Grislea tomentosa.) स्वनामख्यातपुष्पवृक्षे । धाइ फुलेर गाछ । हिं धावइ, धाबोला । मं धायटी । तें धारिपुव्वु, जार्गि । उत्. जातिको । गुणाः—कटुः उष्णा मदकृद्विषघ्नी प्रवाहिकातिसारघ्नी विसर्पव्रणघ्नी च । रा.नि. व.६ । "धातकी कटुका शीता मृदुकृत्तुवरा लघुः । तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित् ॥" भा. । शीता रक्तपित्तघ्नी च । राज. ।

**धातकीकुसुम(पुष्प)म्** । क्ली । धातकीपुष्पे । धाइ फुल । सु.सू. ३८अ.अम्बष्ठादिः । च.सू. ४अ. ।

**धातक्यभिषुतम्** । क्ली । धातकीपुष्पकृतसुराभेदे । गुणाः—हृद्यं वर्ण्यं रोचनं दीपनञ्च । च. सू.२७अ. ।

**धातक्यादिचूर्णम्** । क्ली । बालरोगाधिकारे औषधम् । पाठः—"धातकीबिल्वधन्याकलोध्रेन्द्रयववालकम् । क्षौद्रेण लीढ़ं बालानां ज्वरातीसारवान्तिजित् ॥" धाइफुल, बेलशुँटा, धने, लोध, इन्द्रयव, बाला प्रत्येक चूर्ण समभाग मधु द्वारा लेहन । शा.की. ।

**धाता** । पुं । स्रष्टरि । शरीरादिसंयोगस्य धारयितरि । सु.शा.३अ. ।

**धातुः** । पुं । खनिजेषु स्वर्णादिसप्तविधाष्टविधनवविधपदार्थेषु । धातु । यथा—काञ्चनं रजतं ताम्रं कांस्यं पित्तलं नागं वङ्गं लौहञ्चेत्यष्टौ । रा.नि.व.१८ । स्वर्णरौप्यताम्रवङ्गयशदसीसलौहानीति सप्त । भा. । तथा—"हेमतारारनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकङ्कान्तलौहञ्च धातवो नव कीर्त्तिताः ॥" सुखबोधः । "त्रिविधन्तु सुवर्णं स्यादष्टधा रजतं भवेत् । पञ्च प्रकारकं ताम्रं वङ्गन्तु द्विविधं स्मृतम् । यशदं त्रिविधं प्रोक्तं भवेन्नागस्तु षड्विधः । अष्टधा लौहमुद्दिष्टमेते सप्तैव धातवः ॥" अर्क.चि. । गुणाः—"वलीपलितखालित्यकार्श्याबल्यज्वरामयान् । निवार्य्य देहं दधति नृणां तज्ज्ञातवो मताः ॥" भा.पू.१भ.धातुव. । देहधारकवस्तुविशेषे । स च वातपित्तकफरूपः देहस्य धारणात्तस्य धातुशब्दवाच्यता । यथा—"धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः ।" वैद्यकम् । गैरिकमनःशिलाद्यश्मविकारे । प.मु. । शरीरस्थसप्तधातुषु रसरक्तमांसमेदोऽस्थिमज्जशुक्रेषु । "रसादक्तं ततो मांसं मांसान्मेदोऽस्थि तद्भवं । अस्थ्नो मज्जा ततः शुक्रमित्यमेषां विनिष्क्रमः ॥" रा.नि.व.१८। धातूनाञ्च कर्म्माणि प्रीणनजीवनलेपस्नेहधारणपूरणगर्भोत्पादनानि । गिरिमृत्तिकायां । रा.नि.व.१३।

**धातुक(ज)म्** । क्ली । शिलाजतुनि । वै.निघ.।

**धातुकाशीष(सीस)म्** । क्ली । कासीसे । हिरेकस् । रा.नि.व.१३ ।

**धातुघ्नी** । स्त्री । धातकीवृक्षे । वै.निघ. ।

**धातुग्राही** (इन्) । पुं । खर्परे । वै.निघ. ।

**धातुघ्नम्** । क्ली । काञ्जिके । है.च. ।

**धातुचेतनकरम्** । क्ली । दुग्धे । आमलकी । त्रिवृती । वै.निघ. ।

**धातुद्रावकम्** । क्ली । टङ्कणक्षारे । सोहागा । वै.निघ. ।

**धातुनाशनम्** । क्ली । काञ्जिके । त्रिका. ।

**धातुपः** । पुं । शुक्रे । रसे । श.च. ।

**धातुपाकः** । पुं । रसादिधातुनाशे । तल्लक्षणम्—"निद्रानाशो हृदिस्तम्भो विष्टम्भो गौरवारुची । अरतिर्बलहानिश्च धातूनाम्पाकलक्षणम् ।" वैद्यकम् । [प.मु. । भा. ।

**धातुपुष्पिका (ष्पी)** । स्त्री । धातकीवृक्षे ।

**धातुमलः** । पुं । शीषके । रसादिमलेषु । रसरक्तादिर मल । "मलिनीकरणान्मलाः ॥" वैद्यकम् । "कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च । नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥" भा. ।

**धातुमारिणी** । स्त्री । टङ्कणक्षारे । श.च. ।

**धातुमारी** (इन्) । पुं । गन्धके । वै.निघ. ।

**धातुमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । रा.नि.व.१३ । धातुकाशीषे । हिरेकस् । वै.निघ.।

**धातुराजः (कम्)** । पुं, क्ली । वीर्य्ये । शुक्र । वै.निघ. । श.च. । [प.मु. ।

**धातुवल्लभम्** । क्ली । टङ्कणे । सोहागा ।

**धातुवादी** (इन्) । पुं । खनिजविद्याभिज्ञः ।

**धातुविट्** । स्त्री । शीषके । वै.निघ. ।

**धातुविषम्** । क्ली । हरितालादौ । र.सा.सं. ।

**धातुवृद्धिः** । स्त्री । रसादिवृद्धौ, रसादिधातुसाम्ये । च.सू.१२अ. । [आशुपलीप्रवर्ध्यादौ ।

**धातुवृद्धिकरः** । पुं । धातुवर्द्धकद्रव्ये, अश्वग-

**धातुवैरी** (इन्) । पुं । गन्धके । श.च. ।

**धातुवैषम्यम्** । क्ली । विकारागमरूपकार्य्ययोनौ । च.वि.८अ. ।

**धातुशेखरम्** । क्ली । Green sulphate of Iron. धातुकाशीषे । हिरेकस् । है.च. ।

**धातुशोधनम्** । क्ली । शीषके । वै.निघ. ।

**धातुशोधनकरी** । स्त्री । हरीतक्याम् । वै.निघ. ।

**धातुसम्भवम्** । क्ली । सीसके । वै.निघ. ।

**धातुसाम्यम्** । क्ली । विकारोपशमरूपकार्य्ये । च.वि.८अ. । आरोग्ये । च.सू.९अ. । [निघ. ।

**धातुस्तम्भनकरम्** । क्ली । जातीफले । वै.

**धातुहा (न्)** । पुं । गन्धके । वै.निघ. ।

**धातुक्षयकासः** । पुं । धातुक्षयकरकासरोगे । क्षयकास । निदा. । [निघ. ।

**धातूपलः** । पुं । खटिकायाम् । খড়ি । वै.

**धात्रिका** । स्त्री । आमलक्याम् । रा.नि.व.११ ।

**धात्री** । स्त्री । आमलक्याम् । আমলা । रा.नि.व.११ । भा.पू.१भ. । See अकरा । उपमातरि । দাই । तल्लक्षणं—"पीताय यदि बालस्य विदध्यादुपमातरम् । सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम् । सवर्णां मध्यवयसां सत्कुलीनां मुदितां सदा । शुद्धदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम् । स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेन परित्यक्तां निजपुत्रदृशं स्त्रियं ॥" भा. । धात्रीकर्म्म । यथा—"धात्री तु यदा स्वादु बहलशुद्धदुग्धा स्यात्, तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधाय ब्राह्म्याद्यौषधं धारयन्ती कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत् ।" इत्यादि । च.शा.८अ. । [आमलकीपत्रे ।

**धात्रीपत्रम्** । क्ली । तालीशपत्रे । रा.नि.व.६ ।

**धात्रीफलम्** । क्ली । आमलकफले । আম্‌লা । मद.व.१ । (ला) स्त्री । आमलक्याम् । আমলা গাছ । रा.नि.व.११ ।

**धात्रीलौहम्** । क्ली । शूलाधिकारे । प्रथमः पाठः—शुद्धमण्डूरं ६ प. यवः ४ प. पाकार्थजलं २ श. शे. ॥०श. । शतावरीरसः ८ प. आमलकीस्वरसः ८ प. दधि ८प. दुग्धं ८प. भूमिकुष्माण्डस्वरसः ४ प. घृतं ४ प. इक्षुरसः ४ प. । एकत्र पक्त्वा पाके सिद्धे प्रक्षेपः—जीरकचूर्णं धान्यकचूर्णं त्वक्चूर्णं तेजपत्रचूर्णम् एलाचूर्णं गजपिप्पलीचूर्णं मुस्ताचूर्णं हरीतकीचूर्णम् अभ्रभस्म लौहभस्म रेणुकाचूर्णं त्रिफलाचूर्णं तालीशचूर्णं नागकेसरचूर्णं प्र. २तो.। শুদ্ধমণ্ডুর ৬প. যব ৪প. পাকার্থ জল ২শূ.শে.॥০ শ.। শতমূলীরস ৮প.আমলকীরস ৮ প. দধি ৮ প. দুগ্ধ ৮ প. ভূমিকুষ্মাণ্ডের রস ৪ প. ঘৃত ৪ প. ইক্ষুরস ৪প. । একত্র পাক সিদ্ধ হইলে প্রক্ষেপ—জীরা, ধনে, গুড়ত্বক্, তেজপত্র, এলাইচ, গজপিপুল, মুতা হরীতকী, অভ্র, লৌহ, রেণুক, ত্রিফলা, তালীশপত্র, নাগেশ্বর প্রত্যেক চূর্ণ ২তো. । र.सा.सं. । सा.कौ. । द्वितीयः—धात्रीचूर्णं ८ प. मण्डूरचूर्णं ४ प. यष्टिमधुचूर्णं २ प. गुडूचीक्वाथे सप्तवारं भावयेत् । भावनाक्वाथार्थं क्वाथ्यद्रव्यम् औषधतुल्यमादाय ८गुणे वारिणि साधयेत् । আমলকীচূর্ণ ৮ প. মণ্ডুরলৌহচূর্ণ ৪প. যষ্টিমধুচূর্ণ ২ প. । গুলঞ্চকাথে সপ্তাহ ভাবনানন্তর শুষ্ক করিয়া ঘৃতভাণ্ডে রাখিবে । ভাবনার ক্বাথ ঔষধের তুল্য লইয়া ৮ গুণ জলে প্রস্তুত করিবে । तृतीयः पाण्डौ—आमलकलौहत्रिकटुमनःशिलाचूर्णं मधु घृतं शर्करा प्र. समम् । আমলাচূর্ণ, লৌহ, ত্রিকটু, মনছাল, মধু, ঘৃত, চিনি প্রত্যেকে সমান । चतुर्थः वाजीकरणे—आमलकचूर्णं ८ प. त्रिफलाक्वाथेन २१ भावयित्वा अथ मृतलौहमधुघृतशर्कराः प्र. २ प. मिश्रयेत् । আমলাচূর্ণ ৮ প. ত্রিফলাকাথে ২১ ভাবনা দিবে । মৃতলৌহ ২ প. মধু ২ প. ঘৃত ২ প. শর্করা ২ প. একত্র মিশ্রিত করিবে । रस.र. । अन्यः पित्तरोगे—"धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य । यष्टीमधुकरजश्च द्विपलं दद्यात् पुटे घृष्टम् । धात्र्याश्च क्वाथेन तच्चूर्णं भाव्यञ्च सप्ताहं । अथ्वातपेन संशुष्कं भूयः पिष्टं घटे स्थितं । घृतेन मधुना युक्तं भोजनादन्मध्यतः । त्रीन् वारान् भक्षयेन्नित्यं...... ।" र.सा.सं. ।

**धात्रीषट्पलकघृतम्** । क्ली । गुल्मे घृतम् । "धात्रीफलानां स्वरसैः षट्पलं विपचेद्घृतम् । शर्करा सैन्धवोपेतं तद्धितं सर्व्वगुल्मिनाम् ॥" धात्रीरसः घृतसमः । रस.र. । भैष. ।

**धात्रेयि(यी)का** । स्त्री । आमलक्याम् । रा.नि.व.११ । उपमातरि ।

**धात्र्यरिष्टम्** । क्ली । पाण्डुरोगे । "धात्रीफलसहस्रे द्वे पीडयित्वा रसन्तु तं । क्षौद्राष्टांशेन संयुतं कणार्द्धकुडवेन च । शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धे घटे स्थितं । प्रपिबेन्मात्रया प्रातः...... ।" च.चि.२०अ. ।

धान्यादिः । पुं । चातुर्थिकज्वरे धान्यशुण्ठ्यादिक्वाथे । वा.चि.१८. ।

धानकः । पुं । माषपरिमाणे । च.कल्प.१२अ. ।

धानेयकम् । धन्याके । मद.व.२ ।

धाना (नाः) । स्त्री । चिपीटके । चिड़े । सु.। भृष्टयवादौ । भाजा यवादि । हिं बहुरा । गुणाः—विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुश्च । च. । "यवादयश्च ये भ्रष्टा धानास्ते परिकीर्त्तिताः ।" रा.नि.व.१६ । "धाना: सुदर्जरा रूक्षाः प्रदा गुरवस्तु ताः । तथा मेहकफच्छर्द्दिनाशिन्यः सम्प्रकीर्त्तिताः ॥" धन्याके । धनियां । भा. । गु-कभृष्टयवे । सु.चि.१०अ. ।

धानाकाः । स्त्री । धान्याके । धने । वा.सू. १५अ.गुड्च्यादिः । "धानाकारकचन्दनम् ।" (बहुवचनान्तोः) । [गिर छातु । हे.च. ।

धानाचूर्णम् । क्ली । भृष्टयवादिचूर्णे । यवा-

धानिका । स्त्री । धान्यके । धने । वै.निघ. च.सा.चि.यवान्यादौ । [लुक्वचे । रा.नि.व.११ ।

धानी । स्त्री । धान्यके । धने । मद.व.२ । पी-

धानुष्का । स्त्री । अपामार्गवृक्षे । आपाः गाछ । श.च. ।

धानुष्यः । पुं । वंशे । रा.नि.व.८ ।

धानेय(क)म् । क्ली । धन्याके । रा.नि.व.६ । आर्द्रधान्यके । काँचा धनियां । वै.निघ. ।

धान्या । स्त्री । एलायाम् । श.च. ।

धान्यम् । क्ली । ४ तिलमाने । ६ गुञ्जामाने । धान्याके । धने । रा.नि.व.६।२३ । भूम्यामलक्याम् । रा.नि.व.२३ । (Oryza sativa.) Common rice plant. शाल्यादिवृक्षे । सतुषतण्डुले । धान । धान्यं त्रिधा शालिषष्टिकव्रीहिभेदतः । यथा—"शालयो हैमनाश्च षष्टिका ग्रैष्मिका अपि । व्रीहयस्त्वाशवः ख्याता प्रावृट्कालसमुद्भवाः ॥" राज.३प. । शूकशिम्बीतृणधान्यभेदेन त्रिधा । रा.नि.व.१६ । शालिव्रीहियवशिम्बीक्षुद्रधान्यभेदेन पञ्चविधम् । "शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः । यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम् । कङ्ग्वादिकक्षुद्रधान्यं तृणधान्यञ्च तत्स्मृतमिति ॥" भा.पू.१भ,धा,व, । षष्टादशविधम् । यथा—"रक्तशालिर्महाशालिः कलमा षष्टिकापरा । सकुटीरपि षाष्टी च नीवाराख्या कपिञ्जला । तीक्ष्णी शूकला भाण्डा तिलवाही नागीरका । गवडा रक्तवर्णा च कलमाख्या तथापरा । विलजा मागधी पीता ता अष्टादश शालयः ॥ कङ्गुश्चतुर्विधः प्रोक्तः श्यामाकः शीमकः कटः । गैद्रवो द्विविधः प्रोक्तो वंशवीजं शरोद्भवं । कुसुम्भवीजं तीलो च योनरी च गवेधुकः । त्रिजाङ्गला राजनी च क्षुद्रधान्यगणस्त्वयम् ॥" क्षुद्रधान्यम् । त्रिधा यवश्च गोधूमो मुद्गः षड्विधईरितः । द्विविधः प्रोच्यते माषो राजमाषस्त्रिधा मतः । मकुष्ठस्तुवरी त्रेधा निष्पावकममूरकौ । त्रिधा चणक उद्दिष्टः कलायश्च त्रिपुरकः ॥"अत्रि.। एषां गुणाः स्वस्वपर्य्याये मृग्याः । शरद्ग्रीष्मोद्भवधान्यगुणाः—"धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु ।" ऋतुसन्धिजधान्यगुणाः—"ऋतुसन्धिभवचीर्णं पित्तलं कफनाशनम् ॥" राज.३प. । स्थलजधान्यगुणाः—"स्थलजं कफपित्तघ्नं कषायं कटुपाकि च । किञ्चित्तु तिक्तमधुरं पवनानलवर्द्धनम् ॥" वापितावापितधान्यगुणाः—"वापितं गुरु तद्धान्यं किञ्चिद्धीनमवापितम् ।" रोप्यातिरोप्यधान्यगुणाः—"रोप्यातिरोप्ये लघुनी शीघ्रपाके गुणोत्तरे । अदाहिनी दोषहरे बल्ये मूत्रविवर्द्धने ॥" यच्छूकसमन्वितं व्रीह्यादिकं तच्छूकधान्यम्, शिम्बीनिगूढं मुद्गमकुष्ठकादि शिम्बीधान्यम् । तृणोद्भवतया तृणधान्यम् । इति । "पक्वं हरितलूनञ्च धान्यं सर्व्वगुणावहम् । शुष्कं लूनन्तु निःसारं रूक्षं तत्तस्त्वनाशनम् ॥" इति हरितलूनाशुष्कलूनाद्गुणाः । "कोशधान्यं नवन्त्वल्यं मधुरं वत्सरोषितं । निर्दोषं लघु पथ्यञ्च तद्वर्षाद्विरभ्भवेत् । नवं धान्यमभिष्यन्दि लघु संवत्सरोषितं । द्व्यब्दोषितं लघु पथ्यं त्रिवर्षादबलम्भवेत् ॥" इति नवधान्यजीर्णधान्यगुणाः । धान्यं वापितम् उत्तमं, तदेव छिन्नोद्भवं मध्यमम् । दग्धभूमौ वने वा वापितं छिन्नोद्भवं धान्यं विण्मूत्रबन्धकरम् । वारीटकसमुत्पन्नं श्लेष्मरोगघ्नम् । सुस्निग्धभूमिजम् ओजोबलकरम् । बालुकाभूमिजमल्पपुष्टिहरञ्च । रा.नि.व.१६ ।

धान्यकम् । क्ली । स्वनामख्यातपण्यद्रव्ये । धने । हिं कोथुम्बुरि । धनिया । मद.व.२ । गु-

